# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]





५८ वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपद-पूर्णिमे
जून-सितम्बर, २००३ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकौ


**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






५८ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून-सितम्बर, २००३ ई.



*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००२

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# सम्पादकीयम्

अद्यत्वे संस्कृतशिक्षायाः प्रकारद्वयमवलोक्यते। प्रथमः प्रकारो व्यावहारिक-भाषितसंस्कृतशिक्षणस्य तथा द्वितीयः प्रकारः शास्त्रशिक्षणस्य। प्रथमे प्रकारे नानाविधाः पद्धतयः आविष्कृताः, क्रमेण आविष्क्रियमाणाश्च सन्ति। भाषाप्रचारक्रमे इमाः पद्धतयोऽत्यन्तमुपयोगिन्यः सन्ति। गतेषु वर्षेषु संस्कृतभाषकाणां संख्यायां वृद्धिरपि जाता। जनगणनाप्रसङ्गे संस्कृतं मातृभाषात्वेन स्वीकुर्वाणा अप्यनेके दृश्यन्ते। बहुजनसौलभ्यधिया भाषाया व्याकरणनियमेषु पारम्परिकप्रक्रियायाञ्च यथेच्छं परिवर्तनमपि समारब्धं कैश्चित् सुधारवादिभिः। इमे सुधारवादिनो द्विप्रकारा दृश्यन्ते। केचन व्याकरणनियमानपि नापेक्षन्ते, अन्ये तु तान् परिपालयन्त एव सहजपारम्परिकप्रक्रियायां लाघवानुरोधेन परिवर्तनं चिकीर्षन्ति। यथा द्विवचनप्रयोगनिःसारणं तत्स्थाने द्वयं युगलमित्यादीनां प्रयोगः, सम्मानार्थे बहुवचनप्रयोगपद्धतेस्त्यागः, कर्मवाचक-कर्तृवाचकयोरन्यतरस्यैव स्वीकार इत्यादि। यद्यपि इयं पद्धतिरपाणिनीया न भवति, तथापि वाङ्मयार्थज्ञाने नितान्तमनुपयोगिनी अस्ति।

वाङ्मयार्थज्ञानमेव हि कस्या अपि भाषाया अध्ययनस्य मुख्यमुद्देश्यम्। तदभावे केवलं व्यावहारिकभाषात्वेन प्रान्तीयभाषाणां वैदेशिकभाषाणां वा सामान्यमध्ययनमुपयोगाय स्यान्नाम, तथापि संस्कृतभाषाया नास्ति तादृशः कश्चनाप्युपयोगः। केवलं यत्र गोष्ठीषु विविधप्रान्तेभ्यो राष्ट्रभाषायामनिपुणाः पण्डिताः समवेता भवन्ति, तादृशेष्वेवावसरेषु संस्कृतस्य व्यावहारिक-भाषात्वेनोपयोगो दृश्यते। तत्राप्येकप्रान्तीयेषु परम्परं स्वप्रान्तीयभाषाया एवोपयोगो दृश्यते। अतो विशिष्य वाङ्मयार्थज्ञानमेव संस्कृतभाषायाः परमोपयोगः। मन्ये व्यावहारिकभाषात्वेन संस्कृतस्य प्रचारप्रसारयोरपि 'नदीमुखेनेव समुद्रमाविशत्' इति न्यायेन वाङ्मयार्थज्ञानमेव परमोद्देश्यम्। किन्त्विदमत्रावश्यमवधातव्यं यद् यद्याधारभूमिर्विकृता भवेत्, तर्हि अग्रेऽपि विकारो दुष्परिहर एव। अतः प्रारम्भिकस्तर एव अविकारितया शास्त्रानुसारिपद्धत्यैव भाषाध्ययनं सम्पादनीयम्। यादृश्या भाषाया अग्रे वाङ्मयार्थज्ञाने उपयोगो भवेत्, तादृशी भाषा प्रथममेवाध्येतव्या। अत एव पूर्वं भाषायाः पृथगध्ययनं नैव क्रियते स्म। साक्षाद् वाङ्मयाध्ययनमेव भाषामपि शिक्षयति स्म।

वाङ्मयाध्ययनमप्यद्यत्वे प्रकारद्वयेन क्रियमाणं दृश्यते। प्रथमम् आधुनिकेषु विश्वविद्यालयमहाविद्यालयादिषु संस्कृतविभागादिमाध्यमेन। अत्र हि क्वचिदेकत्र शास्त्रे तलस्पर्शिपाण्डित्यमुपेक्ष्य बहुषु शास्त्रेषु सिद्धान्ततत्त्वावगमप्रयोजनकतया अध्ययनं सम्पाद्यते। द्वितीयं तावत् संस्कृतविश्वविद्यालयतत्सम्बन्धि-महाविद्यालयादिषु न्यायव्याकरणादिविभागमाध्यमेन। अत्र हि ग्रन्थग्रन्थि-विभेदनपुरःसरं तत्तच्छास्त्रेषु तलस्पर्शिपाण्डित्यं सम्पादयितुं प्रयासः क्रियते। एतादृशं परम्परागतमध्ययनं विश्वविद्यालयाद्यतिरिक्तमपि मठेषु मठपोष्यासु पाठशालासु च सम्पाद्यते। अत्र हि सर्वकारीयपरीक्षानिरपेक्षमेवाध्ययनं क्रियते माणवकैस्तत्त्वज्ञानमात्रं शास्त्ररक्षामात्रं वा उद्देश्यं मन्वानैः।

किन्तु गतेषु वर्षेषु एका अन्याऽपि प्रवृत्तिर्दृष्टिपथमायाति। आधुनिकविज्ञानादिविद्यासु परिनिष्ठिताः संस्कृतविद्यास्वपि पर्याप्तं रुचिमावहन्तः केचन दृश्यन्ते। एतादृशां संख्याऽपि नातीव न्यूना। तेषु केचन स्वोद्योगेषु श्रान्ताः शान्तीच्छया प्राय औपनिषदविद्यास्वात्मानं प्रचोदयन्ति। एतेषां शास्त्राध्ययनं परम्परागतच्छात्राणामध्ययनेन प्रायस्तुल्यमेव भवति। केवलमारम्भिकस्तरे माध्यमभाषायाः काठिन्यं भवन्ति; किन्तु गच्छता कालेन तदप्यपगच्छति। एते हि शास्त्रीयपरिष्कारादिषु रुचिं न प्रदर्शयन्ति। सिद्धान्ततत्त्वावगम एव हि तेषां रुचिर्भवति।

किन्त्वेतद्विपरीतं केचन स्वविद्योपयोगितयैव भारतीयशास्त्राण्यध्येतुं प्रवर्तन्ते। पूर्वं तावदेतेषां ज्योतिष-आयुर्वेदादिशास्त्रेषु रुचिरधिका आसीत्, इदानीं चापि तादृशा बहवो दृश्यन्ते। परन्त्वेषु दिवसेषु भारतीयशास्त्राणां परिष्कारपद्धते रहस्यमवगन्तुं बहूनां प्रवृत्तिरवलोक्यते। तत्रैव गणिताधारिताधुनिकतर्कशास्त्रस्य मूलं ते पश्यन्ति। परिष्कारपद्धतौ परिगणितैः सङ्केतात्मकैः शब्दैर्गहनगहना विषया निरूप्यन्ते। एतादृशां कृते शास्त्रशिक्षणस्य काचन नूतना पद्धतिरवश्य-माविष्करणीया। पश्चिमे **इंगाल्स**महाभागेन भारतेऽपि च **शिवजीवनभट्टाचार्य-वी.एन.झा**-प्रभृतिभिः पण्डितैस्तदर्थमंशतः प्रयासोऽप्यनुष्ठितोऽस्ति।

वस्तुतो भाषा काऽपि भवतु, यदा अभिव्यक्तीनां प्रकटनस्य प्रश्न उदेति तदा समानान्तररूपेण समस्याऽपि उत्तिष्ठति। साधारणभाषासु यद्यपि पदानां बाहुल्यमस्ति, तथापि तैः पदैर्येषां प्रत्ययानां यासामभिव्यक्तीनाञ्च प्रकटनं करणीयमस्ति ते प्रत्ययास्ताश्चाभिव्यक्तयोऽनन्ता भवन्ति, तत्र प्रतिक्षणं वृद्धेरपि सम्भावना भवति। परिणामतः साधारणभाषा सर्वत्राऽव्यभिचरिता न तिष्ठति। यद्यपि

सामान्यबोधस्तरे मनुष्यो विचाराणां प्रकटने तद्ग्रहणे च काठिन्यं नानुभवति, यतोऽधिकतमो भाषिकव्यवहारो वक्तृश्रोतृभ्यां पूर्वतोऽनुभूताः स्थितीराश्रित्यैव भवति; किन्तु यदा पूर्वतोऽननुभूतामपरिचितां वा स्थितिमाश्रित्यार्थसम्प्रेषणस्यार्थ-ग्रहणस्य वाऽवसर आगच्छति, तदा तत्र साधारणभाषा प्रायेण असमर्था एव भवति। अपरिचिताया अवस्थायाः प्रस्तोत्रीं भाषां कोऽपि तावदवगन्तुं न प्रभवति, यावत् तत्र स्पष्टता अव्यभिचारिनिश्चितता च न भवेत्। एतदर्थं मानवमेधया बहुविधः प्रयासः कृतो वर्तते। पश्चिमे एतदर्थमेव प्रतीकात्मकतर्कशास्त्रस्य रचना कृताऽस्ति; किन्तु तर्कशास्त्रस्याधुनिकेऽस्मिन् संस्करणे इयं न्यूनताऽस्ति यदत्र एतादृश्याः कृत्रिमभाषाया उपयोगः कृतोऽस्ति या सामान्यप्रयोगस्य स्तरे सर्वथा अनुपयुक्ता विद्यते। किं साधारणभाषायामस्पष्टताया दुर्बोधताया वा कारणानि अन्विष्य तत्रैव च परिष्करणं विधायास्याः कृत्रिमभाषाया निर्माणस्य अनतिप्रयोजनकः श्रमः परिहर्तुं शक्यते? अर्थसम्प्रेषणस्य सर्वथाऽव्यभिचारि किमपि साधनमन्वेष्टुं शक्यते?

प्रश्नानिमानाश्रित्य विस्तृता चर्चाऽपेक्षिताऽस्ति। चर्चाप्रतिफलितानां विचाराणां व्यापकतया प्रकटनमप्यपेक्षितमस्ति। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः तस्य चानुसन्धानपत्रिकेयं सारस्वती सुषमा व्यापारस्यैतादृशस्य कृते सुदृढो मञ्चः। एतदर्थं तत्रभवतां विवेचकानां सुधीवराणाममूल्यान् विचारान् सम्प्रार्थ्य सारस्वत्याः सुषमाया अष्टपञ्चाश-वर्षस्याद्याङ्कयुगलीमाविष्कुर्वन् निरतिशयानन्दमनुभवामि।

**राजारामशुक्लः**

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५८ वर्षे | ज्येष्ठ-भाद्रपद-पूर्णिमे, वि.सं. २०६० | १-२ अङ्कौ |
|---|---|---|


# महाकालप्रियाऽवन्तिका


**मिश्रोऽभिराजराजेन्द्रः**

पूर्व-कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी




अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका।

पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः।।

अवन्तिका मोक्षदा पुरीति धर्मशास्त्रनिर्णयः। तत्र न कश्चन सन्देहः। प्राक्तनकालादेव इयं पुरी विविधजनश्रुतीनां लोकवृत्तानां रहस्यगर्भकथानाञ्च घटनास्थली जाता। न केवलं वैदिका एवाऽपि तु सौगता आर्हताश्चापि नगरीमिमां स्वचरितस्थलीं चक्रुः। वस्तुत उज्जयिन्या दर्शनमात्रेण भारतराष्ट्रस्यातीतं प्रत्यक्षमक्षिलक्ष्यीक्रियते। राजवंशाः स्थापिताः समुत्सन्नाः, सौधाश्चापि सहस्रमिता निर्मिताः कालकवलिताश्च जाताः। परन्तु समेषामेषामैतिह्यविवर्तानां साक्षी भगवान् महाकालेश्वरोऽद्यापि स्वस्थान एव तिष्ठति। शिप्रा स्वमार्गेणैव प्रवहति। तत्र गत्वा झङ्कृतमिव जायते चैतन्यं केवलमेतावन्मात्रं विचिन्त्य यदहो इदमेव तन्महाकालज्योतिर्लिङ्गं यत्कविकुलगुरुणा कालिदासेन शकारिविक्रमादित्येन चासकृत्संस्पृश्य समर्चितमभूत्! हन्त, तदेव शिवलिङ्गं द्विसहस्रवर्षानन्तरं जातेन मयाऽपि संस्पृश्यते, समर्च्यते।

अवन्तिकां सन्द्रष्टुं सन्त्यनेकानि वातायनानि। तानि मयाऽद्यैकैकशः समुद्घाट्यन्ते। परन्तु वातायनसमुद्घाटनात्प्रागस्माभिरिदं ज्ञेयं यदियमेवा-वन्तिकाऽन्यैरपि कैश्चिदभिधानैः सम्बोध्यते स्म। अवन्तिकैव वर्ततेऽवन्ती। तस्मादेव

सरस्वतीकण्ठाभरणकारो मालवाधीशो भोजदेव आवन्तीमपि रीतिं व्याख्याति। **उज्जयिनी**ति द्वितीयमभिधानम्। मृच्छकटिककारश्शूद्रक इदमेवाभिधानं प्रयुङ्क्ते। वसन्तसेनालङ्करणभाण्डरक्षणोद्विग्नो विदूषको मैत्रेयः कथयति—**किमुज्जयिन्यां चौरोऽपि नास्ति य एतं दास्याः पुत्रं निद्राचौरं नाऽपहरति।** (अङ्कः-३)

कविकुलगुरुः कालिदासस्तु **श्रीविशालां विशालामिति** प्रयुञ्जन् अवन्तिकामेव विशालामभिधत्ते। एवमेव पद्मावती-भोगावती-हिरण्यवती-नन्दिनी-(यशस्तिलकचम्प्वाम्) देवपुरी-(नवसाहसाङ्कचरिते) पुष्पकदण्डिनीप्रभृतीन्यभिधानान्यपि सुप्रयुक्तानि दृश्यन्ते विविधयुगीनग्रन्थेषु। यथावसरमेतद् व्याख्यास्यामः।

तत्र **पौराणिकं** वातायनमाद्यम्। पुराणेषु तावदवन्तिकायाः पदे पदे सन्दर्भोऽवाप्यते। **ब्रह्माण्डपुराणे** (४.४०.९१) नगरीयमवन्तिकाऽवन्तीनामभ्यां वर्णिता। **मत्स्यपुराणे** (अ० ४३) आवन्तिकानां भूभुजामुत्पत्तिर्हैहय-राजवंशादुपवर्णिता। अस्मिन् राजवंशे प्रतापैश्वर्यपराकाष्ठामधिरूढो महीपः कार्तवीर्योऽर्जुनस्सञ्जातः। आवन्तिकानां यदूनाञ्च मध्ये विवाहसम्बन्धोऽप्यासीदित्यपि तत्रैव वर्णितम्। **विष्णुपुराणे** (४.२२) **अग्निपुराणे** (अ० २७५) चावाप्यते वृत्तमिदं यद् यदुराजकुमार्या राज्याधिदेव्याः परिणयोऽवन्तिनरपतिना सार्धं जातः। परिणयेनाऽनेनैव विन्दाऽनुविन्दौ सञ्जातौ। **श्रीमद्भागवतपुराणे** (१०.४५.३१, १०. ५८.३०, ११.२३.६, ११.२३.३१) विविधसन्दर्भैरियं रमणीया नगरी समुपवर्णिता। **स्कन्दपुराण**स्याऽवन्तीखण्डे पुण्यनगरमहिम्ना (१.१९.२३) पुरीयं वर्णिता। अस्यैव पुराणस्य खण्डेऽस्मिन्नेव ४३ तमेऽध्याये समुपवर्णितं यत् त्रिपुरासुरवधानन्तरं भगवान् शङ्करोऽवन्तीभूभुजां राजधान्यामाजगाम। इमं महान्तं विजयं समभिलक्ष्यैव शिवागमनसत्कृतेयं नगरी **उज्जयिनी**नाम्ना प्रख्याता बभूव।

महाभारतेऽपि समवाप्यन्तेऽनेकेऽवन्तीसन्दर्भाः। **वनपर्वणि** पश्चिमभारतेऽवन्तिकायाः स्थितिर्वर्णिता—'अवन्तीषु प्रतीच्यां वै' (३.८९)। तस्मिन्नेव सन्दर्भे पुण्यसलिलाया नर्मदायाश्चापि वर्णनमुपलभ्यते। **विराट्पर्वणि** (४.१-१२) अर्जुनमुखेन वर्णितैः प्रतीच्यभारतस्य सुराष्ट्रकुन्तिभोजादिजनपदैस्सार्धमेवाऽवन्तिकाया अपि सन्दर्भस्समायाति। **उद्योगपर्व**वर्णितसन्दर्भानुसारेण विन्दाऽनुविन्दौ दुर्योधनसेनाया नेतृत्वं चक्रतुः। तौ द्वावपि प्रशस्तयोद्धारौ सारथ्यकर्मनिपुणौ चाऽऽस्ताम्। अवन्तीजनाः समस्तकुरुसैन्यस्य पञ्चमांशभूता आसन्नित्यपि तत एव ज्ञायते। **भीष्मपर्व**ण्यपि भीष्मसाहाय्यप्रसङ्गे विन्दाऽनुविन्दयोः शौर्यवर्णनमवाप्यते। आभ्यां सहोदराभ्यामाक्रान्तोऽर्जुनः।

इरावताऽपि सहैतयोर्भीषणं युद्धं सञ्जातम्। भीमोऽपि सङ्कटमापादित आभ्याम्। अन्ते चोभावेव सव्यसाचिना निहतौ।

**साहित्यिकं** वातायनं द्वितीयम्। तत्रापि पुष्कलत्वेन समवाप्यन्तेऽवन्ती-सन्दर्भाः। वैयाकरणः **पाणिनि**रष्टाध्याय्यां (४.१.१७६), महर्षि**पतञ्जलिश्च** महाभाष्ये (४.१.१) अवन्तीमुल्लिखतः। संस्कृतस्यादिमो नाट्यकारो **भासः** प्रतिज्ञायौगन्धरायणे स्वप्नवासवदत्ते च उज्जयिनीं प्रस्तौति। अनयोर्नाटकयो-रवन्तीनरेशस्य चण्डप्रद्योतापरनाम्नो महासेनस्य सन्दर्भो वर्तते यत्पुत्रीमनिन्द्यसुन्दरीं वासवदत्तां परिणयति वत्सराज उदयनः। भासोपज्ञे दरिद्रचारुदत्तेऽपि वसन्तसेनाचारुदत्तप्रणयेतिवृत्तमाध्यमेनोज्जयिन्या रमणीयं वर्णनं सन्दृश्यते। ततश्च शुङ्गयुगीनो महाकवि**कालिदासः** पूर्वमेघे, रघुवंशमहाकाव्ये (इन्दुमतीस्वयंवरसन्दर्भे) चोज्जयिनीं महताऽभिनिवेशेन वर्णयति। स खलु तां नगरीं स्वर्गस्य कान्तिमत्खण्डमेकं मन्यते। महाकविः पूर्वमेघस्थैर्द्वादशमितैः पद्यैरुज्जयिनीसन्दर्भं प्रतनोति। तत्सर्वमतीवरामणीयकसम्पन्नं प्रत्यक्षानुभूतञ्च प्रतिभाति।

वियोगी यक्षः पथि वक्रे सत्यपि मेघमनुरुणद्धि उज्जयिनीगमनाय। यदि मेघस्तत्र न गच्छेत् तर्हि पौराङ्गनानां विद्युद्दामस्फुरितचकितैर्लोलापाङ्गैर्वञ्चितः स्यात्। अवन्तीक्षेत्रे पदे पदे उदयनकथाकोविदा ग्रामवृद्धा विराजन्ते। तस्यावन्तीजनपदस्य राजधानी विशाला श्रीविशालाऽप्यस्ति। तत्र सारसानां पटु मदकलं कूजितं दीर्घीकुर्वन्, प्रत्यूषेषु स्फुटितकमलाऽऽमोदमैत्रीकषायः शिप्रावातः प्रार्थनाचाटुकारः प्रियतम इव स्त्रीणां सुरतग्लानिं हरति। मेघं सप्रणयं निर्दिशति यक्षो महाकालमासाद्य सन्ध्याबलिपटहतामवाप्तुं यथा गर्जितानामविकलं फलं तेनोपलभ्येत[1]। रघुवंशमहाकाव्येऽपि षष्ठे सर्गे षड्भिः पद्यैर्महाकविरवन्ती-प्रसङ्गमुपवर्णयति। अत्रापि महाकालेश्वरमहिम्नां शिप्रातरङ्गानिलकम्पितानामुद्याना-नाञ्चातीवमनोमोदकरं चित्रणमुपलभ्यते।[2]

महाकविः **शूद्रको** मृच्छकटिके प्रकरणे पद्मप्राभृतकभाणे च, **श्यामिलकः** पादताडितके भाणेऽवन्तिकां सविस्तरं वर्णयतः। मृच्छकटिकस्य तु समग्रमपीतिवृत्तं

---

१. द्रष्टव्यम्:—मेघदूतम् (उत्तरभागः), श्लो. २७-३८।

२. असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान्।। (६.३४)
अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु।। (६.३५)

घटतेतरामुज्जयिन्यामेव। शूद्रकयुगे तस्या नगर्याः कीदृशी सामाजिकस्थिति-रासीदिति जिज्ञासा चेत्, तर्हि प्रकरणमिदमवश्यं पठितव्यम्। द्यूतकराणां स्वाच्छन्द्यं, कर्णाटकलहः, वेशवाटस्यापसंस्कृतिः, बौद्धसंन्यासिनामवमाननं, राज-प्रशासनस्याकिञ्चित्करत्वं, रक्षिणामनार्जवं, दुरन्तदारिद्र्यं, न्यायालयानाञ्च पापाचरणं राजकुलान्धानुकरणमिति सर्वाण्यप्येतानि तथ्यानि मृच्छकटिकाध्ययनेन स्फारीभवन्ति। एवं हि, द्वितीयशतके खैस्तेऽवन्तिकायाः सामाजिकमूल्यह्रासः पराकाष्ठामधिरूढोऽवलोक्यते।

वश्यवाणीकविचक्रवर्तिनो **बाणभट्ट**स्य कादम्बर्यामपि वर्णिताऽस्त्युज्जयिनी। परन्तु वर्णनमिदं न यथार्थं स्पृशति। साहित्यिकमिदं वर्णनम्।

नवसाहसाङ्कचरितकारः **पद्मगुप्त**स्तु नगरीमिमां **देवपुरी**माख्याति। तत्समकालिक एव कवीन्द्रमूर्द्धन्यो **राजशेखर**स्तु महताऽभिनिवेशेनावन्तीं प्रस्तौति। राजशेखरो यायावरगोत्रीय आसीत्। तस्य लोकपरिचयोऽतीवविस्तृतोऽनुभवश्चापि समृद्ध आसीत्। तस्योज्जयिनीवर्णने न दृश्यते निस्सारकल्पनासंस्पर्शः। वस्तुतोऽसौ निर्विशङ्कं प्रस्तौति स्वकीयामनुभूतिमवन्तीविषयिणीम्। अवन्तीक्षेत्रस्य स्वर्गद्वारत्वम्, अवन्तीरमणीनां सुरतचातुर्यम्[१], अवन्तीपरिधानानां लालित्यम्, किञ्च सर्वेष्वेव जीवनक्षेत्रेषु अवन्तिकाया अग्रेसरत्वमुपवर्णयति राजशेखरः। समस्तमेव मालवमण्डलं सौजन्यरत्नाङ्कुरैः संवलितं मन्यते यायावरीयः,

एतन्मालवमण्डलं विजयते सौजन्यरत्नाङ्कुरैः
सम्पद्विभ्रमधामभिः किमपरं शृङ्गाररसारैर्जनैः।
यत्रारुह्य विचित्रचित्रवलभीलीलाशिलासद्मनां
नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः।।

समस्तरमणीव्यवहाराणां निदर्शनभूतां राजशेखर उज्जयिनीजनीमेव स्वीकरोति। पश्यन्तु तावत्—

खेलं सञ्चरितुं तरङ्गतरलभ्रूलेखमालोकितुं
रम्यं स्थातुमनादरार्पितमनोमुद्रञ्च सम्भाषितुम्।
सन्त्यज्योज्जयिनीजनीर्विवदितुं हृद्यञ्च लङ्कापतेः
प्रत्यङ्गार्पणसुन्दरञ्च न जनो जानाति रन्तुं पुरः।।

---

१. चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि।
विनाऽवन्तीर्न निपुणाः सुदृशो रतिकर्मणि।।

शिप्राया वर्णनं निसर्गविच्छित्तिदृष्ट्या प्रायोऽनेकैः कविभिः कृतम्। परन्तु तत्तटगतस्वैरविहारमुत्प्रेक्ष्य महाकविना **मधुना** यदुत्प्रेक्षितं तदद्भुतमेव प्रतिभाति। काचिद् विदग्धा स्वसखीं चौर्यसुरतार्थं व्यङ्ग्यमुखेनोत्प्रेरयन्ती कथयति—

उपान्तप्रोन्मीलद्विटपिजटिलां कौतुकवती
कदाचिद् गन्तासि प्रियसखि! न शिप्रातटभुवम्।
यदस्यां मुक्तास्रग् विहितसितभोगिभ्रमतया
वयोरूढः केकी लिखति नखरेण स्तनतटम्।। (सदुक्ति. ५४२)

एवमेव **डिम्बोको**ऽपि चौर्यसुरतप्रसङ्गे शिप्रातटरुहां करञ्जानां कुञ्जान् समुपवर्णयन् लिखति—

कुलोत्कर्षात्स्नेहात्कमितुरथवा पातकभयात्
सखि! श्रद्धा ते स्याद्यदि विनयमालम्बितुमपि।
किमेभिर्दातव्यं परिकलय शिप्रातटरुहां
करञ्जानां कुञ्जैरविनयवतीर्नर्मनिपुणैः।। (सदुक्ति. ५४०)

**श्रूयते चोज्जयिन्यां शास्त्रकाराणां परीक्षेति** काव्यमीमांसायां प्रमाणयताऽऽचार्यराजशेखरेणोज्जयिन्याः शास्त्रपरीक्षाकेन्द्रत्वमपि प्रतिपाद्यते।

मध्यकालेऽपि यात्राप्रबन्धचम्पूकार**स्समरपुङ्गवदीक्षितो** विक्रान्तकौरवनाटककारो महाकवि**र्हस्तमल्लो**ऽपि कथानुरोधवशादुज्जयिन्या विस्तृतं हृद्याऽनवद्यञ्च वर्णनं प्रस्तुवतः। वस्तुतो हस्तिमल्लविरचिते विक्रान्तकौरवे विद्यमानं सुलोचनास्वयंवरप्रकरणमनुहरति रघुवंशस्थमिन्दुमतीस्वयंवरप्रकरणम्। **मेरुतुङ्गाचार्यः** प्रबन्धचिन्तामणौ समुपवर्णयत्युज्जयिनीम्।

**शिलालेखीयं** वातायनं तृतीयम्। विभिन्नकालखण्डेषु शासकैर्ये शिलालेखाः समुट्टङ्कितास्तेष्वपि उज्जयिन्याः सम्यक् परिचयोऽवाप्यते। गौतमबुद्धस्य परमानुगतः सम्राडशोकोऽपि शिलालेखेषूज्जयिनीं प्रतिष्ठापयति। इत एव कुमारो महामात्यान् प्रेषयति स्म। मौर्यसाम्राज्याङ्गभूतमासीदवन्तीक्षेत्रम्। ऋष्टिकक्षेत्रं राष्ट्रिकक्षेत्रञ्चाऽवन्तीक्षेत्राद् बहिर्भूते इत्यपि सङ्केतितं तस्मिन्नेव शिलालेखे।

शकक्षत्रप**रुद्रदाम्नः** प्रथमस्य जूनागढ(गिरनार)शिलालेखे ये प्रदेशाः परिगणितास्तेषु अनूपप्रदेशः (माहिष्मती), आनर्तप्रदेशः (उत्तरकाठियावाडः), सुराष्ट्रम् (दक्षिणकाठियावाडः), श्वभ्रम् (साबरमत्यास्तटवर्ती प्रदेशः), कच्छप्रदेशः (पश्चिमभारतस्थः), सिन्धुः, सौवीरम् (सिन्धोः पूर्वभागः), कुकुरदेशः (उत्तर-

काठियावाडसमीपस्थ: प्रदेश:), अपरान्त: (उत्तरकोङ्कणम्), निषधो विजयगढश्चेति नाम्ना समुल्लिखिता:। एभिस्सार्धमेव **आकरावन्त्या** अपि तत्रोल्लेखो वर्तते।

वस्तुतो गिरनारशिलालेखे (१५० ख्रिस्ताब्द:) समुल्लिखितम् **आकराऽ-वन्तीक्षेत्रं** परवर्तिकाले द्विधा विभक्तमासीत्—**आकर**क्षेत्रमर्थात् प्राच्यमालवक्षेत्रं यस्य राजधानी विदिशाऽऽसीत्। अद्यापि स्थानमिदम् **'आगर'**नाम्ना ख्यातमुज्जयिनीत औदीच्यदिशि द्विचत्वारिंशत् किलोमीटरदूरे तिष्ठति। द्वितीयञ्चा-सीदवन्तीक्षेत्रमर्थात् प्रतीच्यमालवक्षेत्रं यस्य राजधानी स्वयमवन्तिकापुरी आसीत्।

कथासरित्सागरस्यैकोनविंशतितमाध्यायस्याध्ययनेन स्पष्टं जायते यन् मालवप्रदेश एव प्राचीनावन्तीप्रदेशोऽस्ति। परमारवंशस्यादिपुरुष**स्सीयक** उज्जयिनीमेव स्वराजधानीं कृतवान्। पश्चादियं राजधानी धारायामानीता मालवसाम्राज्यकेन्द्रस्थत्वात्। भोजराजो **मालवेश्वर** एव सम्बोध्यते स्म। एवं हि मालवाऽवन्त्योर्न कोऽपि भेद:। उभावपि शब्दौ पर्यायत्वेन प्रयुज्येते।

वाशिष्ठीपुत्र**पुलुमाविनो**ऽपि नासिकगुहालेखे आकराऽवन्त्या वर्णनम-वाप्यते। अस्य प्रदेशस्य राजधान्युज्जयिनी आसीत्। आकर(=आगर)क्षेत्रे रत्नानां खनय आसन्नित्यपि ज्ञायते। **ल्यूहुर्स**महोदय इमामेव नगरी**मुज्जेनी**नाम्नाऽङ्गीकरोति। **उजेनीहारनामा** जनपद: पुरा प्रख्यात आसीत्।

**बौद्धजैनवाङ्मयं** वातायनं चतुर्थमवन्तीमवलोकयितुम्। वस्तुतो बौद्धग्रन्थकारा यायावरप्रवृत्तिका आसन्। आर्हतसाधवोऽपि निरन्तरमेव भ्रमणशीला आसन्। अत एव भारतीयेतिहासविषये तेषां साक्ष्याणि महनीयानि प्रतीयन्ते। भगवतो बुद्धस्य जीवनकाले ये षोडश महाजनपदा: ख्याते: शिखरमारूढा आसन्, तेषामन्यतम एव आसीदवन्तीजनपद:। अङ्गुत्तरनिकाये (४.२५२, २५६, २६१) जनपदस्यास्य विस्तृता कापि चर्चाऽवाप्यते। प्रचुरान्नकेन्द्रं पालिभाषायाश्च विकासस्थलमासीत् नगरमिदम्।

**थेरगाथाथेरीगाथो**पलब्धप्रमाणैर्ज्ञायिते यदनेके निष्ठावन्तोऽनुयायिनो बौद्धधर्मस्योज्जयिन्यामेव समुत्पन्ना:। अभयकुमार:, धर्मपाल: (धम्मपाल), शोण: कूटिकर्ण: (सोण कूटिकण्ण), ऋषिदासी (इसिदासी), ऋषिदत्त: (इसिदत्त), किञ्च महाकात्यायनोऽपि (महाकच्चान) अवन्त्यामेव जाता:।

**संयुत्तनिकायेऽङ्गुत्तरनिकाये** च महाकच्चानवृत्तमुपलभ्यते। महा-पण्डितोऽयमवन्तीनरेशस्य **चण्डप्रद्योतस्य** पुरोहितगृहे समजायत। वेदत्रयीज्ञाताऽयं तथागतादेव सम्प्राप्तदीक्षोऽभूत्, पश्चाच्च चण्डप्रद्योतस्यापि श्रमणत्वदीक्षायां साफल्यमवाप। भगवति तथागते धर्मोपदेशपरायणे सति महाकात्यायनस्सदैव तं

निकषैव तस्थौ। भिक्षवस्तत्कृते आसनं रिक्तमेव रक्षितवन्तः। धर्मस्य गहनबोधे निष्णात आसीत्कात्यायनः।

**दीपवंशे**ऽपि महद् व्यापारकेन्द्रमाख्यातं नगरमिदम्। अस्य नगरस्य स्थापनामच्युतगामी कश्चित् कृतवानिति तत्र वर्णितम्। शूर्पारकात् (सोपारा) भृगुकच्छस्य (भरुच, भड़ौंच) नैऋत्यकोणात् श्रावस्तीतश्च समापतन्तस्त्रयो मार्गा अत्रोज्जयिन्यां सङ्गच्छन्ते स्म।

मुञ्जमहीशगोष्ठीगौरवभूतो भोजदेवस्य च गुरुकल्पो महाकवि**र्धनपालो**ऽपि जीवनस्योत्तरार्धे शैवधर्मं परित्यज्य जिनमतमलञ्चकार। तिलकमञ्जरीकारो धनपालोऽपि बहुशः प्रशंसति मालवक्षेत्रमुज्जयिनीञ्च विविधैस्सन्दर्भैः। एवमपि श्रूयते यद्भगवान् महावीरोऽत्र तपस्तप्तवान् कस्याञ्चिच्चिताभूमौ।

**ऐतिह्यं** तावदन्तिमं वातायनम्। वैदेशिको यात्री **पेरिप्लस**नामा पुरीमिमा**मोजेन**पदेन सम्बोधयति। तन्मतेन सुमहद् व्यापारकेन्द्रमिदं नगरमासीत्, यतः कर्पासं, सूक्ष्मतन्तुवस्त्रं (मलमलमिति भाषायाम्), विशिष्टपाषाणादिकञ्च निर्यात्यते स्म। **ऐंश्येण्ट इण्डिया ऐज डिस्क्राइब्ड बाई टॉलमीति** ग्रन्थस्य लेखको **मैक्रिंडिल**महोदयो ग्रन्थस्य १५४ मितपृष्ठे लिखति शकारिविक्रमादित्यस्य पराक्रमविषये। भूयोऽपि लिखत्यसौ यत् खैस्ते प्रथमशतके पुरीयं **चष्टनवंशस्य** राजधान्यासीत्। **अशोक दि ग्रेट**नाम्नो ग्रन्थस्य लेखकः **विन्सेण्टस्मिथ**महोदयः (पृ. २३५) लिखति यत् खिस्तपूर्वचतुर्थशतके उज्जयिनी मगधसाम्राज्याधीनाऽऽसीत्। अशोकोऽवन्तीदेशस्यैव कुमारामात्यो नियुक्त आसीत्।

**एन्श्येण्ट इण्डिया**नाम्नि ग्रन्थे (पृ. १७५) **रैप्सन**महोदयो लिखति यदुज्जयिनी राजधान्यासीदवन्तीदेशस्य पश्चिममालवदेशस्य वा। इयं स्थिताऽऽसीच्चर्मण्वतीसहायिन्याः शिप्रायास्तटे। वस्तुतोऽवन्तीप्रदेशे साम्प्रतिकमालवक्षेत्रं नीमाडक्षेत्रं पार्श्ववर्तिभागाश्च गण्यन्ते। अयं प्रदेशो द्विधा विभक्त आसीत्। उत्तरमालवस्य राजधानी **उज्जयिनी,** दक्षिणमालवस्य च **माहिष्मती** (महेश्वरः) आसीत्।

**टी. डब्ल्यू. राइस-डेविड्स**महोदयमतेन द्वितीयखिस्ताब्दं यावत् प्रदेशोऽय**मवन्ती**नाम्नैव ख्यातिं भेजे। परन्तु खिस्तसप्तमशतकादनन्तरं **मालव**नाम्ना प्रख्यातं जातम् (बुधिष्ट इण्डिया, पृ. २८)। श्रीमती-राइस-डेविड्समतेन विन्ध्योत्तरक्षेत्रं मुम्बईतः पूर्वोत्तरक्षेत्रं चाऽवन्तीदेशपदवाच्यमासीत्।

खैस्ते सप्तमशतके भारते समागतश्चीनदेशीयो यात्री **ह्वेनसांगः** प्रत्यक्षमवलोकितवान् पुरीमिमाम्। अस्या नगर्याः परिधिः पञ्चमीलमिता आसीदित्यसौ भणति। नगरे मन्दिराणामाधिक्यमासीत्। ब्राह्मणनरेशः कश्चित् प्रशास्ति स्म। ह्वेनसांग उज्जयिन्यां भग्नसन्थागारं स्तूपञ्च दृष्टवान्।

वस्तुतः खैस्तनवमशतकाच्चतुर्दशतमं यावन्मालवदेशे परमारक्षत्रियाणां तोमरभूभुजाञ्चाधिपत्यमक्षतमासीत्। १४०१ मिते खिस्ताब्देऽत्र तुरुष्कशासनं प्रतिष्ठितं जातम्।

एवं हि विविधवातायनेभ्य आलोकिता मोक्षदा पुरीयमुज्जयिनी स्वजीवनविवर्तान् प्रकटयति। कति रूपाण्यस्या नगर्यास्सन्ति? अत्र राराजन्ते पार्वतीपतयो भगवन्तो **महाकालेश्वरा** भस्मस्नानप्रणयिनः। अत्रैव वर्तन्ते **कालभैरवदेवा** ये प्रत्यक्षमापिबन्ति मैरेयम्। अत्रैव विराजते भगवती **हरसिद्धिः** शकारिविक्रमस्य राजवंशाधिष्ठात्री कुलदेवता। अत्रैवास्ते भगवती **गढकालिका** कविकुलगुरोरनन्यलभ्यकविप्रतिभासमज्ञाप्रदात्री। ग्रहोत्तमस्य मङ्गलदेवस्यापि जन्मस्थलीयं नगरी। कुलपतेः सान्दीपनेराश्रमो द्वापरयुगेऽत्रैव प्रतिष्ठित आसीद्यत्र विद्यामवापुः कृष्णबलरामसुदामानः। इदञ्च तीर्थं महाकुम्भपर्वस्थलम्। अत्रत्यं **सिद्धवट**क्षेत्रमतीवपुण्यदं कामदं तपःस्थलम्। अत्र शिप्रास्नानं विधाय प्रदत्तैः पिण्डैस्तिलाञ्जलिभिश्च पितरो देवाश्च परमां प्रीतिमावहन्तेतराम्। वेताल-पञ्चविंशतिका-सिंहासनद्वात्रिंशिकादिकथाग्रन्थानामियमेव केन्द्रस्थलीत्यप्यवगन्तव्यम्।

साम्प्रतिके युगेऽपि नगरीयं महदाकर्षणं बिभर्ति विक्रमविश्वविद्यालय-सान्दीपनिवेदविद्याप्रतिष्ठान्-कालिदासाकादमीप्रभृति-समादृतसंस्थानां प्रतिष्ठापनेन। साम्प्रतिकाः संस्कृतकवयोऽपि विशालायशोगीतिं मुक्तकण्ठेन गायन्ति। **'उज्जयिनी जयते'** इति गीतमेकतो विशालायाः शाश्वतिकं माहात्म्यं प्रकटयति महाकविश्री**श्रीनिवासरथ**प्रणीतम्, **उज्जयिनी रमयति नहि चित्त**मिति शीर्षकमपरं गीत**मभिराजराजेन्द्र**विरचितं विपरिवर्तितोज्जयिनीस्वरूपं वैरस्यकरं प्रस्तौति। एवं स्थितेऽपि नगर्यामस्यां वर्तत एव किञ्चिदनिर्वचनीयं जीवातुतत्त्वं यत्सङ्केतयते कविः —

क्वेदानीं सा कविकुलगुरोर्वैक्रमार्की समज्या
शिप्रावातः क्व नु खलु कृती प्रार्थनाचाटुकारः।
वीतप्रायाऽप्युदयनकथा प्राग्वतां वैभवाना-
मेकस्साक्षी तदपि रमते श्रीमहाकालशम्भुः।।

(मृगाङ्कदूतम्, उत्तरभागः)

●

# वेदानामुभयसाधारणत्वम्

**डॉ. छोटेलालत्रिपाठी**
उपाचार्यः, साहित्यविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



प्राक्तनादेव कालाद् वेदानां पारलौकिकत्वम्, लौकिकत्वम्, उभय-साधारणत्वं वेति विवादो विमर्शश्च प्रचलन्नस्ति। पक्षमाश्रित्य विपक्षमाश्रित्योभय-साधारणत्वं वाश्रित्य महात्मभिर्वेदव्यासशङ्कराचार्यप्रभृतिभिः पारम्परिकरूपेण स्व-स्व-पक्षाः स्थिरीकृताः। अनेनैवोभयसाधारणत्वस्य पुष्टिर्भवति। तत्र 'भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिध्यति' इत्युक्त्या त्रिकालसिद्धफलस्याश्रयत्वेन मानवानां वर्तमानफलं लौकिकसिद्धिरेव। 'सा विद्या या विमुक्तये' तथा च विद्यया विनयादिक्रमेण धनं धर्मः सुखमात्यन्तिकञ्चोपलभ्यन्ते। सर्वासां विद्यानां मूलं वेदा एवेति महर्षीणां नयोऽपि सङ्गच्छते। वेदाः सृष्टेर्नियामकाः। एतद्देशप्रसूतस्य सकाशात् पृथिव्यां मानवाः स्वचरित्रं शिक्षेरन्नित्यभिदधतां मनुमहाभागा-नामप्ययमेवाशयः प्रतिभाति यद् वेदोद्दिष्टमार्गानुसरणशीलानामेतद्देशीयानामेव समाजयात्रा सृष्टिक्रमे चतुर्वर्गोपभोगोन्मुखा सुलभा चेति वर्तते।

एवं वेदेषु प्रतिपाद्यविषयविवेचनावसरे प्रायशो विदुषामियं सम्मतिर्यत् पारलौकिकविषयविशदीकरणमेव वेदेषूपपादितमस्ति। परञ्च तन्मात्रत्वे तेषां परिच्छेदाशङ्कया तत्पक्षः केवलत्वेन न स्वीकर्तुं शक्यते। अपि त्वङ्गाङ्गि-भावेनोभयविषयप्रतिपादकत्वमेव सिध्यति। 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इति व्यासोक्तिरपि वेदानां मूलत्वमेव चमत्करोति। एवं तेषां वेदानां प्राधान्येनालौकिकत्वज्ञापकत्वम्, आनुषङ्गिकतया तत्साधनभूतलौकिकविषयोप-स्थापकत्वञ्चेति तेषामन्यूनतामेवावद्योतयति। एवं वैदिकवाङ्मये धार्मिकै-तिहासिकसामाजिकार्थिकराजनैतिकविषयाणां प्राचुर्येण परिशीलनं कर्तुं शक्यते। यतो ह्यस्माकं सर्वाण्यपि शास्त्राणि वेदमूलकानि, सर्वा अपि विद्या वेदोपबृंहणायैव प्रवृत्ताः। न हि वेदाननुमतं किमपि शास्त्रं काचिदपि च विद्या

भारतीयजनमानससम्मतिमधिगच्छति। अपि च सूक्ष्मेक्षिकया विचारिते सतीदं तथ्यमुन्मिषति यल्लौकिका अलौकिका वा ये केचन विषयास्तेषां कालनिर्णयाभावान्मूलं वेदा एव। मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः, अपौरुषेयं वाक्यं वेदः, निरपेक्षरवः श्रुतिरित्यादीनि लक्षणानि पूर्वाचार्यैः सायण-माधवाचार्यप्रभृतिभिः कृतानि। तत्र प्रायशः परम्परामनुगतानां विदुषां परिशीलन-पराणाञ्चैतादृशो विमर्शोऽस्ति यदत्र वेदेषु पारमार्थिकतया पारलौकिकविषया एव विवेचिताः, न त्वैहिका विषयाः। यतो हि यदि च वेदेषु लोकवदनित्य-पदार्थानामुपस्थितिः स्वीक्रियते, तदा वेदानामप्यनित्यत्वं परिकल्पितं भवति। अतस्तत्र कल्प्यमानानां विप्रतिपत्तीनामुल्लेखं कुर्वद्भिस्तैस्तैराचार्यैरुद्घोषितं यद्वेदेषु मानवचरित्रं स्वल्पमपि नास्ति। एवमुद्घाटकेषु शबरस्वामिनः प्रमुखाः। तेषामयमभिप्रायो यद् वेदेषु मानवचरित्रोपस्थापनेऽङ्गीकृते सति तेषां चरित्रनायकानां समुद्भवानन्तरमेव वेदानां रचना परिकल्पिता भवति। तथा सति वेदानामनादित्वं व्याहृतं भवति।

एवमेव वेदेषूक्तानामितिहासपुराणप्रभृतिषु प्रसिद्धानां सतामृषीणां यानि नामान्युपलभ्यन्ते, न तानि सममभिन्नानि, अपि त्वक्षरसाम्यादेव प्रतिभान्ति। नामसादृश्येऽपि न तेषामभिन्नत्वमर्थभेदात्। वेदेषु प्राप्तः शब्दो नित्यः, नित्यार्थावबोधकश्च। तत्र किञ्चिदप्यनित्यपदार्थस्य वर्णनं नास्ति। अन्यथाऽ-नित्यपदार्थे वर्णिते तेषामप्यनित्यत्वं प्रमातुं शक्यते। अक्षरसाम्यमात्रेण नेदमित्थं निश्चेतुं शक्यते। तत्र प्रमाणसिध्यर्थं बवरः प्रावाहणिरकामयत इत्यादिषु स्थलेषु वैदिकसन्दर्भानुसारेण बवरसदृशशब्दकर्ता सञ्चरणशीलो नित्यपवनोऽभिप्रेतोऽस्ति। किञ्चित्कालानन्तरं यदि कस्यचित्प्रावाहणिनाम्नः पुरुषस्य पुत्रस्यापि नाम बवरो भवेत्तर्हि सोऽपि बवरप्रावाहणिः कथयिष्यते। तथैव वराहशब्दोऽपि सामान्यतया शूकरार्थे संस्कृतभाषायां प्रयुज्यते। परञ्च गूढार्थविवेचनावसरे—'वराहो मेघो भवति वराहारः, अयमपीतरो वराह एतस्मादेव। बृहति मूलानि। वरं वरं मूलं बृहतीति वा। वराहमिन्द्र एमुषम्। अङ्गिरसोऽपि वराहा उच्यन्ते' इत्यादिभिरनेकार्थको वराहशब्दः सिध्यति।[1] 'अर्थो नित्यं परीक्ष्यते न संस्कारमाद्रियते' इति नयेन प्रकृतिप्रत्ययादिनापि तदर्था गृह्यन्ते। एवं वेदेषु ते शब्दा लौकिकार्थबोधका इति कथनं न समीचीनम्।

श्रीशबरस्वामिनोऽभिधानं नासङ्गतं यद् वेदेषु मानवचरित्रस्य सर्वथा-भावोऽस्ति। अत्रेदमपि विचारणीयमस्ति यद् ऋक्सर्वानुक्रमणीलक्षणानुसारेण 'या

१. निरु. अ. ५ पा. १ मन्त्र-७-व्याख्या, पृ.२२।

स्तूयते सा देवता, येन स्तूयते स ऋषिः'। तथा च [1]'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति। अग्निर्वायुरादित्यस्त्रयो देवाः'। अथवा [2]'प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं पतयो रयीणाम्' इति। एवं देवताया होमस्य च प्राप्तौ यजनविधिर्द्रव्याणि च कुतः प्राप्तव्यानीति? तस्मादेव वेदादवगन्तव्यम्।

अतः स्थूलतया वेदाः प्रयोजकसाधनानि, प्रयोज्यसाधनानि यजमान-द्रव्यप्रभृतीनि। साध्यञ्च फलम्। तच्च द्विविधम्। आद्यं लौकिकम्, चरमञ्चालौकिकम्। लौकिकं फलम्—दैहिक-दैविक-भौतिकतापरहितं धनपुत्रादि-समृद्धिरूपं प्रसिध्यति। सर्वमानवसामान्याभिलषितं चतुर्विधमपि धर्मार्थकाममोक्षरूपं फलं लोकसाध्यं, लोकादेव लब्धं वेति निश्चप्रचम्। अस्थिराण्यपि लौकिकद्रव्याणि साधनत्वं गतत्वाद् वेदोद्दिष्टस्य पारलौकिकफलस्य साधकानि। तेषां द्रव्याणामलौकिकत्वसम्पादनायैव मन्त्राभिषेको विधीयते। अतस्तेषां ज्ञानमपि प्राप्तिविषयकं यदि वेदोद्भासितं न स्यात्, तर्हि लोके विकासक्रमेणोन्मिषितत्वाद् वेदाः स्वयमंशतोऽनन्तरं योजितत्वाद् द्विधा विषयगत्या विभक्ता भवन्ति।

अपि च 'लोकव्यवहारे प्रयुक्ताश्शब्दा लोकसम्भूताः' कथनमिदं न व्यवहारसम्मतं न च प्रमाणसम्मतं प्रतिभाति। यद्यपि पारिभाषिका वायुयानप्रभृतयः शब्दाः कल्पिताः, तथापि बीजरूपेण वायुपथ-विमानरथादिशब्दा वेदेभ्य एव सम्प्राप्ताः। परिचलनपन्था अपि निर्दिष्टः। लोकव्यवहारेऽपि शब्दोऽयं पूर्वपुरुषैः प्रयुक्तः, शास्त्रैरस्मिन्नर्थे निर्दिष्टं कथनं तु प्रवृत्तमस्ति, किन्तु कस्मात् कालादित्यस्मिन् विषये अप्रामाण्यमेव। अतः सर्वेऽपि शब्दा बीजरूपेणानादि-त्वावच्छिन्नाः। परन्त्वत्रेदमवधेयमस्ति यदस्मिन् विषये सिद्धान्ततयानया पद्धत्या मीमांसकसम्मता मन्त्रब्राह्मणात्मकाखिलवेदानां प्रामाणिकी काचन व्याख्या नोपलभ्यते। सर्ववेदभाष्यकाराभ्यां सायणाचार्यमाधवाचार्यमहाभागाभ्यां स्वकीययो-र्वेदभाष्ययोरुपोद्घातेऽस्य पक्षस्य समादरेण समुपस्थापनं कुर्वद्भ्यामपि सन्दर्भाणां व्याख्यानावसरे पक्षोऽयं न सम्यक् पुरस्कृत इति मनीषिणो वदन्ति। अनेकमन्त्राणां ब्राह्मणानाञ्च व्याख्यानावसरे मनुष्येतिवृत्तमाश्रित्यैव व्याख्या कृतास्ति[3]। आ ब्रह्मणः सृष्टेर्लयपर्यवसायि यज्ज्ञानं तद्वै वेदः, तदेव सूक्ष्मातिसूक्ष्मरूपेण परिणामतया वेदनाच्चतुर्वर्गज्ञानसाधनभूतः 'वेद' इत्युच्यते।

---

१. निरुक्तम्-७/१/१; २. ऋ.सं. १०/१२३/१०।
३. ऋ.सं. १/१२५/१।

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥

अर्थात् स्मृति-शील-आचार-आत्मतुष्टिरिति चत्वारि धर्ममूलानि सन्ति। चतुर्णामपि प्रवृत्त्याश्रयो व्यक्तिरेव। अथवा विद्यामाध्यमेन तद्बोधनायैव काल्पनिकी सृष्टिरित्याचक्षते। एवमनेकस्थलेषु 'युवं च्यवानं चक्रथुर्युवानम्'-प्रभृतिषु अश्वदैवतमन्त्रोऽपि पुराणप्रसिद्धं च्यवनर्षेरुपाख्यानमाश्रित्यैव व्याख्यातः। ब्राह्मणग्रन्थानां भाष्येऽपि हरिश्चन्द्रनहुषादीनां कथानकं मानवचरित्ररूपेणैवोपलब्धं भवति। तथैव तदुत्तरवर्तिन उव्वट-महीधरादयोऽपि स्व-स्वभाष्येषु मानव-चरितान्युपस्थापयन्त एव वेदानामर्थमवबोधयन्ति।

मीमांसाशास्त्रे मन्त्राणामिव ब्राह्मणारण्यकोपनिषदादीनामपि वेदत्व-मव्याहतमिति सिद्धान्तः। प्रायशो महर्षिकात्यायनातिरिक्तं नान्येन केनचिद् ब्राह्मणभागानां विषये किमपि प्रमाणमुपस्थापितम्, तथापि कम्बुग्रीवादिमत्त्वाद् घटकलशवत् तेषामपि वेदत्वेन लेशतः संशीतिरिति विदुषामभिमतमस्ति। तथा चोपनिषत्सु समुपलब्धा आख्यायिका न मानवचरित्ररूपेणान्यैराचार्यैः प्रस्तूयन्ते, किन्तु वेदान्तसूत्रकारेण भगवता वेदव्यासेन अपशूद्राधिकरणे मानवाख्यानान्येव बहुशः प्रस्तुतानि। वेदविदो मीमांसकास्तु न कदाचिदनीदृशं जगदिति सिद्धान्तं प्रतिपादयन्ति। अनेनेतिहासभूतेष्वपि वेदेषु नित्यत्वस्वीकारे न कापि बाधाऽस्ति। यद्यपि सायणाचार्येण—'अपौरुषेयं वाक्यं वेदः'[1] इति लक्षणं कृतम्, तथापि तत्र तेषां निहितार्थांश उद्दिष्ट इति कथनं नासङ्गतम्। तमसि पवनकम्पितप्रदीपप्रकाशेन सूचिकान्वेषणमिवालौकिकतत्त्वान्वेषणं वेदेषु दुःसाध्यत्वाद् भौतिकस्वरूपस्य झटित्याकलनात्तत्र तत्र पक्षद्वये विभज्य लोका विवदन्ते।

दार्शनिकधौरेयाणां सरणौ पथः प्रदर्शका दार्शनिकप्रस्थानप्रतिष्ठापका गौतमकणादप्रभृतयो वेदप्रामाण्यं पुरस्कृत्य स्व-स्वपरम्परया शास्त्राणि विरचितवन्तः। कपिलमुनिप्रभृतयः सांख्यशास्त्रस्य प्रणेतारः, जैमिनिव्यासप्रभृतयो मीमांसाशास्त्रस्येति वेदमार्गानुगा इति। ईश्वरस्य सत्तां खण्डयद्भिर्बौद्धादिभिरपि वेदविहिताचारपद्धतौ पूजापद्धतौ तथा च साधनापद्धतौ प्रकीर्तितान्यु-पादानान्यवलम्ब्यैव लोकशास्त्रयात्राग्रेसारिता। दशबलो बुद्धः। दश बलानि यस्येति विग्रहः। दश बलानि तु बुद्धिः, क्षान्तिः, वीर्यम्, ध्यानम्, ज्ञानम्, कृपा, शीलम्, बलम्, दानम्, उपेक्षा चेति।[2] बुद्धेन भगवता बलानीमान्यवाप्तानि, परञ्च तया

१. ऋ.सं. १०/७५/५।
२. कप्फिणाभ्युदयमहाकाव्यम्, मङ्गलाचरणम्, शिवस्वामी, सर्गः-१/१।

पद्धत्यैव या च वेदप्रतिपादितेत्याशयः। अस्यां पूजापद्धतौ वर्तमानकाले काचित्कलात्मकताऽप्रतिबद्धात्मिकाऽवश्यमवलोक्यते।

भारतीयसमाजस्याधारस्तम्भभूता वेदाः सम्मताः। तेषां चिरन्तनत्वमपि प्रथितम्। अपौरुषेयत्वात्तेषां धार्मिकमाध्यात्मिकं च महत्त्वं काष्ठामेवाधिरोहति। वर्णव्यवस्थायां विनियोजिते समाजे कथं लोकयात्रा सम्पद्येत प्रवर्तेत चेत्यर्थं प्रवृत्ता वेदा नाङ्गानि, अपि तु प्रधानभूता अङ्गिनो वर्तन्ते। अङ्गानि तु तदुन्मीलितानि शरीर-मनो-बुद्धिभिः सेव्यानि समाज-धर्म-संस्कृत्यध्यात्मरूपाणि फलानि। तेषु सर्वेषु प्रतीतिपुरस्सरं प्रवृत्तिप्रवर्तनमर्थात् प्रयोजकत्वं वेदेभ्यो भवतीति। एवं वेदाः समस्तानामैहिकानां विषयाणामपि पथः प्रदर्शकाः[1]। ईश्वरेण सृष्टेर्बीजानि समुद्घाटितानि, वेदाश्च तद्बोधार्थमाचरणाय प्रवर्तनार्थञ्च प्रवृत्ताः। अतः प्रथमं तेष्वैहिकेतिवृत्तज्ञानाय तद्बोधकतत्त्वानां, सन्दर्भाणामनुशीलनपरा विद्वांसस्ता ऋचः परिचिन्वन्ति, यासु च गङ्गादीनां नदीनां युद्धानां पञ्चजनानामपि च विविधानां वर्णानां वृत्तीनां समुल्लेखः प्राप्यते[2]। तथैव वेदेषु राजनीतिकतत्त्वानां समुन्मेषका याश्च ऋचस्तासामनुशीलनेनेदं प्रतिभाति यद्वैदिकराजनीतेर्मुख्यमुद्देश्यं राष्ट्रेऽनुशासनपुरस्सरं लोकाधिकाराणां संरक्षणमासीत्। सुव्यवस्थितं शासनं श्रेष्ठनागरिकाणां निर्माणे मुख्यं केन्द्रं भवति।

'यथा राजा तथा प्रजा' इति न्यायेन शासनस्य समाजनिर्माणे महतीं भूमिकामनुभूयेदं विचारणीयं भवति यत् शासनं कीदृशं भवेत्? शासनं तु द्विविधं साङ्कुशं निरङ्कुशं चेति। तयोरन्यतरस्य श्लाघनीयत्वविचारचर्चायां विचक्षणा निष्कर्षममुं निर्धारयन्ति यत् तस्मिन् वैदिके जीवने शासनतन्त्रं लोकाभिलाषानुरूपं व्यवस्थितमासीत्। शासनस्यानुपालनीयेष्वादर्शेषु मुख्यतया लोकसंरक्षणम्[3], व्यक्तिपोषणम्, अधिकारसमादरयोस्समन्वयः, कर्तव्यपालनौचित्यम्, कुशलतरं जीवनयापनम्, सर्वेषां मङ्गलमभ्युदयश्च, सुविचाराणामुन्नयनम्, राष्ट्रस्य समुत्थानम्, स्वावलम्बनम्, नीत्याचरणम्, समृद्धिश्चेति प्रमुखा आसन्। अतः परमपि राष्ट्रस्य समाजस्य सम्पोषणाय गौरवविवर्धनाय च सर्वे जना व्यक्तिगतरूपेण दत्तचित्तास्तथैव सन्ततीनां समुन्नयनार्थं निर्माणार्थं चाचरेयुरिति शासनव्यवस्थाऽऽसीत्। न हीदं कथनं परिकल्पनामात्रम्, अपि तु तादृशजनानामाकांक्षानुरूपाणि शासनव्यवस्थाया लक्षणानि वेदेषूपलभ्यन्त एव।

---

१. ऋ.सं. ७/८३/७।

२. ऋ.सं. ३/३७/९; यजु. ३०/५/२२।

३. (क) ऋ.सं. ६/२७/४; ६/७५/१५-१९; (ख) अथर्व. १२/१/१।

तत्र वैदिकव्यवस्थायां शासनस्वरूपं शासकानां स्वरूपम्, सञ्चालनतन्त्रम्, शासकशासितयोः सम्बन्धः, ऋषीणामारण्यकानां सामाजिकजीवने योगदानं तथा च सम्भूय लोककल्याणं विघ्नापसारणञ्चेति विषया मुख्यतयोपलभ्यन्ते। वयं पश्यामो यत् क्वचित्सङ्क्षेपेण क्वचिच्च विस्तरेण शासकैर्लोकहिताय व्यवस्थापितानां साधनानामुपायानाञ्च स्वरूपं स्पष्टतया निर्दिष्टमस्ति। एवमेव 'यथापूर्वं बभूवुः, यथापूर्वमकल्पयत्, अन्वाचरन्तु' इत्यादिभिर्वैदिकवाक्यैः प्राक्तनं यद्वृत्तं प्रतीतिपथं प्रसरति तदैतिहासिकतत्त्वरूपेण प्रेक्षकाः पश्यन्ति।[१] तथा च—

यस्यां पूर्वे पूर्वजना विचक्रिरे।
यस्यां देवा असुरानभ्यवर्तयन्[२]।।

तथैवान्यत्रापि बहुषु स्थलेषु प्राक्तनैतिहासिकतत्त्वानां कथानकानां सन्देश उपलभ्यते। ऋग्वेदानुरोधादयमैतिह्यविषयः परिस्फुरति यद् वैदिक-परम्परामुच्छेत्तुमुद्धतानां दस्यूनां, तस्कराणां, राक्षसानामुत्सादनाय राजानश्च प्रेरिताः, नियोजिताः, इन्द्राग्निप्रभृतयो देवाश्चाहूतास्सन्तो विरुद्धाचारनिरोधक्षमा भवन्ति। ऋषिभिराहूतेन इन्द्रेण वज्रेण वारशिखा निश्शेषीकृताः[३]।

श्रुतयः सन्ति संस्कृतिश्रोतांसि। श्रुतौ प्रतीता विषया लौकिका अलौकिका वाऽस्मदीयानां जीवनदर्शनस्याधारस्तम्भा विनियोजकाश्च तिष्ठन्ति। यादृशञ्च भव्यं व्यवस्थितं वैभवसम्पन्नं जीवनं वेदे चित्रितमस्ति, तादृश उल्लासः समाजस्यानल्पसांस्कृतिकसम्पदा सम्पन्नस्यैव राष्ट्रस्येति न संशयः। नगरादारभ्य ग्रामपर्यन्तं तथा चाश्रमादारभ्य राजप्रासादपर्यन्तमेकैव सांस्कृतिकचेतना विराजते। धार्मिकी सामाजिकी राष्ट्रिया च विचारधारा समेषामविशिष्टैवासीत्। चिरन्तनीयं प्रवृत्तिरविच्छेदेन रामायणमहाभारतादिकालपुरस्कृता संसरत्येव। कालक्रमेण जायमानानां परिस्थितिजन्यलौकिकपरिवर्तनानां वेगेन क्षुभिताऽपि न सा स्वप्रवाहसरणिं विस्मरति। सभ्यताया नवनवोल्लासेन समाश्लिष्टाऽपि वैदिकी संस्कृतिः समाजं पोषयन्तीव प्रतिभाति, न तु पोष्यमाणेव। अविकल-नवनीतवन्निर्मथ्यमानाया नवीनायाः सांस्कृतिकधारायाः स्रोतांसि वेदा विशदीकृतवन्तः काले काले तां सांस्कृतिकीं वेदपुरस्कृतां धारामेव धुरि धारयन्ति। लोकानां लोकविषयकं परलोकविषयकञ्च जीवनं वेदोपबृंहितमिति न सन्देहः। उक्तं हि—

---

१. बृ.दे. ५/१४/२३। शाट्यायनब्राह्मणम्, ताण्ड्यमहाब्राह्मणम्–१३/३/१२।
२. अथर्ववेदः १२/१/६ पृथ्वीसूक्ते।
३. ऋ.सं. ६/२७/५।

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षिणः।
लेभिरे तपसा पूर्वं नियमोऽयं वेदमूलकः[१]।।

अपि च—

युगे युगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीम्[२]।

मानवजीवनस्यान्तरङ्गं स्वरूपं प्रकाशयन्ती नाम संस्कृतिरुच्यते। तत्र मुख्यतयाऽस्या अन्तर्गतं विवेचनीयेषु विषयेषु जीवनस्यान्तरिकोत्कर्षाधायकानां संस्कारसंवलितानां तत्त्वानामनुशीलनम्, कर्तव्याकर्तव्यविवेचनम्, आध्यात्मिकचिन्तनम्, मनोवैज्ञानिकमन्वेषणम्, समष्टिव्यष्टिगतं विषयस्वरूपम्, जीवनस्योद्देश्यं लक्षणञ्चेति, साध्यसाधनविवेचनम्, प्रकृतिपुरुषयोर्भेदनिरूपणम्, दार्शनिकी दृष्टिश्चेति विषया बोधगम्या भवन्ति। इमे सर्वेऽपि विषयाः कस्यचिदपि राष्ट्रस्य संस्कृतिस्वरूपोद्बोधनार्थं विमर्शनीया भवन्ति। एवं समासतो भारतीयायाः संस्कृतेः पर्यालोचनाय वैदिकवाङ्मयस्य प्रथमतया विमर्शनमुपलब्धं भवति। सर्वोऽप्ययं विषयपरिकरस्तथा चाव्यक्ततया वर्तमानयोर्जीवेश्वरयोः, आत्मपरमात्मनोः, प्रकृतिपुरुषयोर्भेदाभेदविवेचनमपि संस्कृतिविषयत्वेन वैदिकवाङ्मयेऽनुशीलनीयं भवति।

वैदिकवाङ्मये दार्शनिकतत्त्वानां प्राचुर्येण प्रधानतया परिशीलनं तेषां वैशिष्ट्यमवद्योतयति। तत्र मुख्यतया विचारणीयेषु विषयेषु देवानां स्वरूपम्, ब्रह्मण ईश्वरस्य प्रकृतेर्जीवनस्य सृष्ट्युत्पत्त्योः पापपुण्ययोर्धर्माधर्मयोर्लोकपरलोकयोर्मोक्षपुनर्जन्मनोश्च वैशद्येन सङ्केता निरूप्यन्ते। अपि च तत्र प्राकृतिकतत्त्वानां सूर्य-चन्द्र-पवन-मेघ-विद्युद्-अग्नि-जलप्रभृतीनाञ्च तथा इन्द्र-वरुण-रुद्र-मरुत्-प्रमुखानां वर्णनमप्युपलभ्यते। एतेषां क्वचित् मूर्तरूपेण प्राकृतिकस्थूलस्वरूपेण क्वचिच्चामूर्तरूपेण दिव्यरूपेण प्रतिष्ठापनमुपलब्धमस्ति। एतेष्वपि प्राधान्याप्राधान्याभ्यां विवेचनसरणिरवलोक्यते[३]। विभिन्नासु ऋक्षु दैत्येभ्यो धनमपहृत्य दातुं प्रार्थ्यमाना देवा लोकान् तान् कीर्तिमतो देवान् ऋषीन् राज्ञश्च तर्पयन्ति। एवमेवान्यत्र तत्तत् फलं दातुं समर्थास्ते ते देवाः प्रार्थिताः। तेऽपि यज्ञद्वारा तुष्टास्सन्तो याजकानामभीष्टं साधयन्तीति ऋग्वेदात् प्रसिध्यति।

एवमेतेषु विविच्यमानेषु विषयेषु यज्ञपुरुषरूपेण स ईश्वर एव प्राधान्येन समाश्रितः। स च फलाधिष्ठातृदेवताभेदात् मित्र-इन्द्र-वरुणेत्यादिभिर्नामभिः

---

१. जातक–का.भा.स., पृ. ४९-५०।

२. ऋ.सं. ६/८/५।

३. तत्रैव–९/१/१।

कल्पितो भवति। इमे देवाः सामान्यविशेषसामर्थ्यमभिलक्ष्यैव वर्गीकृताः। तथैव विभेदकैरनन्योपलब्धैर्गुणैः कैवल्येनैकेश्वरवादस्यापि प्रतिष्ठाऽस्ति। गुणानामुच्चावचपरिकल्पनया बहुदेवतावादोऽपि व्यवस्थापितोऽस्ति। तत्र—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः[१]।।

तथा च—

त्वमग्ने वरुणो जायसे यत् त्वं मित्रो भवसि यत्समिद्धः।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय[२]।।

अत्र एक एवेश्वरोऽनेकैर्यमवरुणाग्नीन्द्रप्रभृतिभिः प्रस्तुतः पूजितश्चेति। एकस्माद् विराट्पुरुषात् समस्तायाः सृष्टेः समुद्भव इति[३] पुरुषसूक्तादावपि वर्णितमस्ति। नासदीयसूक्तेऽपि कयाचिदज्ञातया शक्त्या जगद्रूपिण्याः सृष्टेरस्याः समुन्मेषः प्रकीर्तितोऽस्ति। हिरण्यगर्भसूक्तमपि केवलात्तस्माद् हिरण्यगर्भात् समस्तस्य जगतः जन्मक्रमं समुन्मेषयति। पुनर्जन्मविषयकमपि तथ्यं मूलत ऋग्वेदात् प्रसृतमस्ति। तत्र सङ्क्षेपेणेदं वक्तुं शक्यते यत् प्राणिनः स्वकृतकर्मानुरोधेन भूयो भूयो विभिन्नासु योनिषु जीवनमवाप्य स्वस्वपुण्यसञ्चयद्वारा ताँस्तान् भोगान् लोकाँश्च प्राप्नुवन्ति। भोगक्षये पुनस्तामेव जन्ममृत्युरूपिणीं सरणिमाश्रयन्ते[४]। वैदिकवाङ्मयस्येदं वैशिष्ट्यं यत्तत्र प्रतिष्ठितानां समभ्यर्चितानां देवानां निसर्गतो ये विशेषाः प्रतीयन्ते, तेषु तेजः, बलम्, पावनत्वम्, क्षिप्रगामित्वम्, दया, दाक्षिण्यम्, क्षेमकरत्वम्, सद्यःफलप्रदायित्वञ्च प्राधान्येन कीर्तितानि वर्तन्ते। क्वचिदिमे देवा मातृपितृरूपेणाऽपि स्वीकृताः। तत्रैवं रूपेण वर्णने तेषु देवेषु देहादिकानां स्थूलतत्त्वानां परिकल्पनमपि परिलक्षितं भवति। यद्यपि वेदेषु देवानां प्रतिमोल्लेखस्तत्पूजनविधानं नावलोक्यते, तथापि केवलं रुद्राख्यदेवातिरिक्ताः सर्वेऽपि देवा आयुष्याभ्युदयसमृद्धिकीर्तिप्रदातृत्वेन सम्मताः।

रुद्रस्तूभयविधः। स तु भीतिकरोऽपि प्रीतिजनकश्चेति प्रतिष्ठितः। उज्ज्वलं निष्कलङ्कञ्च चरित्रमस्य न केवलं लोकान् परिष्करोति, अपि तु तेष्वाशावादमपि सञ्चारयति।

वैदिकं जीवनं धर्मप्रधानमित्यत्र सर्वेषां विचारकाणामैकमत्यमस्ति। यतो हि मानवानां कृते निःश्रेयससिद्ध्यर्थं, ततः पूर्वं तापत्रयापसारणाय वा

१. ऋ.सं. १/१६४/४६।
२. तत्रैव–५/३/१।
३. तत्रैव–१०/९०;
४. तत्रैव–१०/१२९।

विविधानामुपासनाचाराश्रयीभूतानां देवानां तन्निमित्तकार्पणीयद्रव्याणां विधीनाञ्च वर्णनं वेदेषु प्रतिपाद्यविषयरूपेण तिष्ठति। देवस्तुतयोऽपि द्रव्यत्यागाय समन्त्रकत्वं तस्य साधयन्ति। देवतामुद्दिश्य समन्त्रकं द्रव्यत्यागो याग इति विधानेनाहूता देवा मन्त्रादिभिस्तुष्टास्सन्तो न केवलं याज्ञिकान् यजमानाँश्च अपि तु प्रेक्षकान्, सहयोगिनः, प्रकृतिञ्चापि वाञ्छितानि घटयन् सन्तर्पयन्ति। अनेनेदं तत्त्वं प्रतिभाति यद्वैदिकजीवने भौतिकसुखसाधनोपलब्धये देवसन्तर्पणाख्यं सुकरं साधनं समाजे प्रथितमासीत्। लोका देवाभ्यर्थनया परिश्रमप्रवृत्त्या वा प्राप्तं वैभवं भोक्तुमुत्का न परेषामाहरणे रुचिमन्त आसन्। समाजे चाध्यात्म्यस्यैव प्राधान्येन नियन्त्रणमासीत्। तेषामध्यात्मवादिनाञ्चापि समाजे महती प्रतिष्ठाऽऽसीत्। तेषाम् ऋषीणामध्यात्मवादिनां तादृशीं काचिद्विलक्षणां शक्तिं, तत्साधनभूतां नियमिताञ्च जीवनशैलीमनुभूय सामाजिका अपि तथाऽऽचरितुं नियन्त्रितास्सन्तः प्रतिबद्धा मानसोपनीताश्चासन्।

देवानां सन्तर्पणाय यजनसम्भारतया विधिसम्मतानां सहजतया सुलभानामेव वस्तूनां परिग्रहः परिलक्ष्यते। यजनसामग्रीचयनेऽपि वैशिष्ट्यं प्रतीयते। हव्य-द्रव्याज्यादिनाम्ना व्यवहृतेयं यजनकर्मणि प्रयुक्ताहुतिः सामिषनिरामिषभेदाभ्यां द्विविधा प्रोक्ताऽस्ति। मांसत्वेन तत्साधारण्यमेव गृह्यते, सर्वविधसामिषयागानां निरूपणात्। यत्र क्वचिच्च विशिष्टकाम्ययज्ञेषु विशिष्टस्तत्प्रयोगोऽपि परिलक्ष्यते। अन्येषु परवर्तिशास्त्रेषु देवतामुद्दिश्य द्रव्यत्यागरूपेणाष्टविधमांसविधानं गीयते[१]। परञ्च सामान्यतया यज्ञविधानेषु घृतान्नक्षीरसोमपायसादिसामग्रीविधानमेवोपलभ्यते। याज्ञिकैश्च तन्माध्यमेनाहूतेभ्यो देवेभ्यः सोमरसतर्पणं सर्वानतिशय्य वर्तते। मन्ये सोमरसो देवानामतीव प्रियतरं पेयमासीत्। अभ्यर्चनीयेषु देवेषु ब्रह्म-विष्णु-महेशास्तु प्रमुखाः। यमेन्द्रवरुणाग्नीनामपि तथैव प्राधान्यमवलोक्यते। मरुत्सोमाश्विनावपि क्षेमकरत्वेनानुष्ठानाश्रयीभूतास्सन्ति। एवं धर्मप्रधाने तस्मिन् वैदिकजीवने वयमनुभवामो यल्लोका वा सन्तु ऋषयो वा सन्तु, सर्वेषामपि जीवनं दार्शनिकतत्त्वानां मननचिन्तनादिभिरनुप्राणितं धर्मानुगतञ्चासीत्। राष्ट्रजीवने धर्मस्य प्राधान्याल्लोकानां बौद्धिकी संरचनाऽपि तथैवासीत्। लोकाश्चाचारविचारशुद्धौ, संयमनियमपरिपालने, सत्यात्मचिन्तनादिषु दृढात्मविनिश्चये चानल्पाभिनिविष्टा आसन्निति।

---

१. गोनरेभाश्वमहिषवराहोष्ट्रोरगोद्भवम्।
महामांसाष्टकं देवि देवताप्रीतिकारकम्।। (कौलार्चनदीपिका)

वैदिककालिकं सामाजिकं जीवनं व्यवस्थितं विकसितं परस्परं सापेक्षञ्चासीदिति परिलक्षितं भवति। समाजविकासस्य, सभ्यतायाः समुन्नतेः, वर्णानां जातीनां विविधवृत्तिपराणाञ्च मानवानां कर्मकलापस्य व्यवस्थायाश्च समुन्नतेश्चोत्कृष्टतमं स्वरूपं वेदेभ्योऽवगम्यते। मानवसमाजस्याक्षुण्णाऽजस्रा च समुन्नतिर्वेदेष्वविकल्पनीयतया परिचिता भवति। प्राक्तनसमाजस्याविरुद्धमनिन्दितञ्च स्वरूपं वेदेभ्योऽवगम्यते। इदमपि ज्ञायते यत्तात्कालिको मानवसमाजः कर्मभि-रार्यदस्युभेदाभ्यामुभयथा विभक्त आसीत्। आर्याश्च ऋषिदेवतापक्षपातिनस्सन्तो वैदिकं वृत्तमक्षरशः पालयन्ति स्म। अनार्यास्तु धर्मविरुद्धाचरणशीला देवमानवसम्पत्त्याहरणव्यग्राः, यज्ञकर्मविरोधिनश्चासन्। यद्यपि दस्यवोऽपि शिल्पकर्मनिपुणाः, यज्ञानुष्ठानकर्तारः, शासनव्यवस्थापक्षपातिन आसन्। तथापि तेषां यथा विनाशे, परपीडने च प्रवृत्तिरासीत्, न तथा विकासे परस्परसापेक्षत्वे च। आर्यास्तु आस्तिकधार्मिकसदाचारगुणसमन्विता ब्राह्मणादिचतुर्षु वर्णेषु विभक्तास्सन्तस्तथैव वैदिकपरम्परानुयायिनश्चासन्, यथा सरितः सरित्पति-मनुयान्ति। अयं विभागो गुणतः कर्मतो वाऽऽसीत्। तत्र ब्राह्मणानां मुख्यं कर्म अध्ययनमध्यापनम्, यजनं याजनम्, तथा लोकानां तदर्थञ्च प्रेरणमासीत्। क्षत्रियाणाञ्च राष्ट्रसंरक्षणम्, शासनसूत्रसञ्चालनम्, धर्मसंरक्षणम्, न्यायदण्डादि-व्यवस्थापनञ्चेति कार्याण्यासन्। कृषिर्गोरक्षा वाणिज्यञ्चेति वैश्यानां प्रमुखानि सम्पादनीयान्यासन्। एवमेव शूद्राणां कर्म समाजसेवा, शिल्पविधानञ्चासीत्।

वैदिकसमाजस्तु परिवारेषु विभक्त आसीत्। परिवारश्च संयुक्तः पितृ-प्रधानश्चासीत्। द्विजातिषु विवाहादिषोडशसंस्काराणामवश्यकरणीयताऽविच्छिन्ना च परिलक्षिता भवित। सामान्यतया तत्रैकपत्नीव्रतपालनम्, स्त्रीणाञ्च सामाजिकजीवने सम्मानितं स्थानम्, तासामभ्युन्नतये द्वारोद्घाटनं तद्युगीनसमाजस्य परिष्कृतं परिपुष्टञ्च स्वरूपमवद्योतयति। एकविंशतिमन्त्रदर्शिका ऋषिका आसन्निति ऋग्वेदात्प्रतीतौ सत्यमिदं तथ्यं प्रतिभाति यत् सामाजिकजीवने विशेषतः शिक्षाक्षेत्रे स्त्रीपुरुषयोः कोऽपि भेदो नासीदिति। स्त्रियः स्वातन्त्र्येण स्वकुलादिमर्यादां परिपालयन्त्यः पतिवरणे स्वजीवनयात्रानिर्धारणे च स्वतन्त्रा आसन्।

वैदिक्या अर्थव्यवस्थायाः स्वरूपावलोकनावसरे वयमवगच्छामो यत्तस्मिन् काले सामाजिकानामार्थिकं जीवनं सुसमृद्धिसम्पन्नं स्फुटञ्चासीत्। पारस्परिकादान-प्रदानस्य, विनिमयस्य, क्रयविक्रययोः, व्यापारस्य, वाणिज्यस्य चाधारभूतानां द्रव्याणां रत्नानां गवादिकानां पशूनां कृषिकर्मतः प्राप्तधान्यानाञ्च बाहुल्यमासीत्[१]।

---

१. यजु. ३/५०।

पशुपरिपालनं कृषिकार्यञ्चेत्युभयमपि तत्कालीनसमाजस्यार्थोपलब्धये मुख्यं कर्म आसीत्। तत्रापि गोधनपरिपालनं, संरक्षणमुन्नयनञ्चेति प्राधान्यतया करणीयमासीत्। धनसमृद्ध्यर्थं यज्ञादिधार्मिककर्माण्यनुष्ठातुञ्च गवां प्राशस्त्यं वेदेषु निरूपितमस्ति। क्वचिद्दारिद्र्योपशमनाय धनलाभाय देवादिकानां स्तवनमपि निर्दिष्टमस्ति। तथापि भौतिकसाधनेषु गवां परिपालनं संरक्षणं संवर्धनं सहैव कृषिकार्यञ्च प्राधान्येन परिष्कृतरूपेण च परिव्याप्तमासीदित्यवगच्छामः।

कृषिकार्यसम्पादनार्थमेकत्र क्षेत्रादिकर्षणाय बीजादिवपनाय गोवृषभानां प्रयोगबाहुल्यमासीदपरत्र च क्षेत्रेषु जलादिसेचनाय जलाशयानां कूपादिकानाञ्च बाहुल्येन निर्माणं संरक्षणञ्चावगतं भवति। प्राप्तसौविध्येन कुल्यादीनां नदीनाञ्चापि बाहुल्येनोपयोग आसीदिति। धान्येषु गोधूम-यवव्रीहि-चणक-माष-तिलादिकानां बाहुल्यमासीत्। अपि च सामाजिकानां जीविकायाः साधनभूतान्यन्यान्यपि बहूनि लघूनि बृहन्ति चौद्योगिकसाधनान्यपि प्रचलितान्यासन्निति। तन्निमित्तं यन्त्रनिर्माणपटवस्तक्षकाः, हिरण्यकाराः, लौहकाराः, कर्मकराः, चर्मकाराः, वासोवाश्चासन्। मुद्रासु निष्कं मुख्यमासीत्, तथापि स्वर्ण-रजत-ताम्रमुद्राणां प्रचलनं रत्नानाञ्च सङ्ग्रहः प्राचुर्येण प्रवृत्त आसीत्। समुद्रमार्गेण स्थलमार्गेण वा वणिजां व्यापारप्रवृत्तेस्तथा च कुसीदवृत्तेरपि निदर्शनमुपलभ्यते।

वेदेषु राज्ञः शासनाधिकारिणां प्रजायाश्च कर्तव्यानि, राज्यतन्त्रस्य विविधं स्वरूपं राज्ञश्चयनमभिषेकश्च, राज्याधिकारिणां चयनम्, सभायाः समितेश्च व्यवस्थापनम्, मन्त्रिपरिषदो मनोनयनम्, राजतन्त्रात्मिका प्रजातन्त्रात्मिका शासनव्यवस्था, सन्धिविग्रहकर्माणि, सामदण्डादिविधीनां प्रयोगाः समुपलभ्यन्ते। एवमेव निर्विकारस्य राज्यशासनस्य व्यवस्थापनाय धर्मपुरोहितस्य नियोजनम्, तद्वैशिष्ट्यमपि वेदेषूपलभ्यते[१]। तत्रैकतन्त्रीयशासनव्यवस्थायां राज्ञश्चयनम्[२], प्रजातन्त्रीयशासने राज्यव्यवस्थायाः समीचीनं स्वरूपं बहुषु स्थानेषु[३] दरीदृश्यते। एवं राजनीतिकदृष्ट्या समाजस्य पञ्चधा विभागः समुपलब्धो भवति —

१. गृहं कुलं वा; २. ग्रामः; ३. विट् (विश्); ४. जनः; ५. राष्ट्रम्।

अनेनैव क्रमेण—गृहपतिः, ग्रामणीः, विशाम्पतिः, जनपतिः, राजा चेति क्रमशोऽधिकारिण आसन्। तत्र राज्ञः सततस्तस्य कर्म राज्यं राष्ट्ररक्षणं वा आसीत्। राजा स्वसौविध्याय, शत्रुपराभवाय चोभयात्मिकामेकतन्त्रात्मिकां लोकतन्त्रात्मिकां

---

१. ऋग्वेदः; २. अथर्ववेदः-६/८७/१।
३. तत्रैव-३/४/२।

वा शासनप्रणालीमाश्रयते स्म। राजतन्त्रात्मके शासने राज्ञश्चयनं वंशपरम्परातो भवति स्म। प्रजातन्त्रे विशिष्टैः परीक्षणैः परीक्षितः कोऽपि कस्मिन्नपि कुले समाजे वा समुत्पन्नो जनः स्वबौद्धिकशारीरिकसामर्थ्येन राजा भवितुमर्हति स्म। चयनमिदं साक्षाज्जनताद्वारा, मन्त्रिपरिषदा, ऋषिभिर्वा भवेन्नाम, परञ्च सर्वत्र वैदिक-पक्षानुगमनशीलत्वमव्याहतमासीद् राजसत्ताया हस्तान्तरणे। चयनितस्य राज्ञः पदे प्रतिष्ठापने राज्याभिषेकाख्यस्तन्निमित्तकः समारोहो धार्मिकानुष्ठानरूपोऽवश्यकरणीय आसीत्[1]। चयनप्रक्रियान्तर्गतं निर्वाचकमण्डलस्य सदस्या राजकृत इति नाम्ना ख्याताः। एतेषां संख्या पञ्च आसीत्। ये च सम्भूय पञ्चराजकृतो राजानः सूतो ग्रामणीः रथकारः कर्मारश्चेति प्रथिताः। राज्यसञ्चालनाय सभा समितिश्चेति परिषद्द्वयं प्रजापतेर्दुहितृरूपेण प्राचलदित्यवगम्यते। ग्रामादिषु न्यायस्य कृते सभा, राज्यशासनकृते च समितिरासीत्[2]। एवमेव समितिरेव शासकस्य शासनादवतारणे, नवराजनिर्वाचने च सर्वसामर्थ्यशालिनी प्राभवत्। एवमियं वैदिकी संस्कृतिः प्रथमसंस्कृतिरासीदिति वेदेभ्योऽवगच्छामः।

वैदिकं शासनं कीदृशमासीदित्यपेक्षायां वक्तुं शक्यते यत्तस्मिन् काले राजनीतिकतत्त्वानुरूपं नीतिपूर्वकञ्च शासनमासीत्। वेदेषु शासनव्यवस्थायाः प्रभूतानि सङ्केततत्त्वान्युपलभ्यन्ते। अस्मिन् विषये पक्षोऽयं महत्त्वपूर्णो यदिदं प्राशासनिकं तत्त्वं कुतः सम्प्राप्तं वर्तते। तथा चायं परम्पराक्रमः कीदृशः? तत्रैव वक्तुं शक्यते यद् राज्ञो राज्यस्य चाभावे शासनस्य वार्तैव निष्प्रयोजनिकेति। वेदाध्ययनेनेदं ज्ञायते यत् प्राशासनिकतत्त्वं शासकशासनाभ्यां पूर्वमेवोत्पन्नं जातम्। तथा चायं प्राशासनिको विधिः प्राकृतिको दैवो वा वक्तुं शक्यते। यतो हि— भारतीयमनीषायां विधिसमुद्भवः प्राकृतिकः, न च मानवप्रसूतः। नियतिरपि नियमबद्धैव लोकान् सृजति। लोका अपि प्रकृत्यैव नियमानुसारिणो भवन्ति। तत्र अदृष्ट एव प्रेरको भवति। एवं नियमपरिपालनाय प्रकृतिरेव प्रेरिका शिक्षिका चेति वक्तुं शक्यते। अथवा विधिरनादिः। विधिपरिपालनं विना देवतामुद्दिश्य द्रव्यत्यागोऽपि न भवितुं शक्नोति। ग्रहनक्षत्रादयोऽपि प्रकृत्यैव नियन्त्रिता भवन्ति। एवं तदनुप्राणिता मानवा अपि स्व-स्वकर्तव्यपालननिरता आसन्। कालकृतोऽयं नियमः सर्वान् लोकान्नियन्त्रयति चेत्, नास्ति किमपि वैचित्र्यम्। अपि च विज्ञानवादमाश्रित्य सोऽयं कालो विकासस्य चरमोत्कर्षकाल आसीत्। अस्मिन् काले सर्वेऽपि मानवाः प्रकृत्यैव कामक्रोधादिरहिताः, निर्मलहृदयाः सूर्याचन्द्रमसाविव स्व-स्वाधिकारकर्तव्ययोः परिपालनमकुर्वन्। तत्र ऋतमेव हेतुभूतमासीत्। वैदिकशासनस्य ऋतं मूलम्। तथा हि—

१. यजु. ९/४०;                    २. तत्रैव–६/१४।

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥

समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥[1]

एतासु ऋक्षु सृष्टेः समुद्भवक्रमः समुद्भासितो भवति। तमसः प्रथमम् ऋतञ्च सत्यं समुद्भवतः। तत्र त्रस्तमित्यस्य विधिरपि अर्थान्तरं भवति। एवं विधेः (नियमस्य) अनादित्वं सिध्यति। ब्रह्माण्डस्योपजीव्यत्वं त्रस्तसत्ययोः प्रतिष्ठितमस्ति। तयोरेव रात्रि-समुद्र-अर्णव-संवत्सर-दिन-सूर्य-चन्द्राकाश-पृथ्व्यन्तरिक्षप्रभृतीनां समुद्भवः समजायत। यस्माच्चास्य ब्रह्माण्डस्य समुत्पत्तिः, तस्मादेव च सर्वेषां भौतिकानां नियन्त्रणमपि सिद्धं भवति। सैव च तान् स्वप्रकाशेन प्रकाशयतीति वेदेभ्योऽवगम्यते। अस्मिन्नेव सन्दर्भेऽथर्ववेदस्य व्रात्यसूक्ते[2] सामाजिकशासनादि-विचारा उपलभ्यन्ते। यद्यपि व्रात्याः संस्कारहीना इति लोकशास्त्रप्रसिद्धिः, तथापि तेषां शासनविधेर्ज्ञानं तस्मात्सूक्ताद् भवतीति वैदिकप्रशासनस्य स्वरूपमवगम्यते[3]। तथा हि तत्र ब्रह्मचारिण ऊर्ध्वभागाद् ऋतं सत्यं सूर्यचन्द्रादयश्च सहायका भवन्ति।

वैदिकप्रशासनस्यान्तरिकं स्वरूपमवज्ञातुं कृतपरिश्रमैरनुशीलकैरिदं व्यवस्थापितं यत् शासनव्यवस्थायामान्तरिकविभागानां परिकल्पनं न वेदोत्तरकालिकम्, प्रत्युत वेदमूलकमेव। तत्र शासनव्यवस्थाया यानि च प्रमुखान्यङ्गानि परिकल्प्यन्ते, तेषु न्यायः, विधिः, कार्यञ्चेति विभागाः प्रमुखा भवन्ति। तत्र न्यायाधिकारिरूपेण वरुणस्य प्रतिष्ठा वर्तते। वरुणशब्दो वृधातो-र्निष्पन्नो भवति। अस्य वरणं, चयनं, वेष्टनाद्यर्था द्योतिताः। भाष्य-ग्रन्थस्याध्ययनेनेदमवगतं भवति यदयं वरुणो न्यायव्यवस्थाया न केवलं व्यवस्थापकः, परञ्च न्यायकर्ता, दण्डाधिकारी, न्यायसञ्चालनकर्ताऽपि वर्तते। अस्याधिकारेषु—अपराधनियन्त्रणम्, दण्डव्यवस्थापनम्, गुप्तचरसङ्घटनम्, न्यायालयवादादिनिर्धारणमस्ति। सत्यानृतसमीक्षकसूक्तमस्य तत्सम्बन्धिनीं योग्यतामभिदधाति[4]। अस्मिन् सूक्ते न्यायाधिकरणसम्बन्धिनो बहवः सङ्केता उपलभ्यन्ते। ऋग्वेदेऽपि—

---

१. ऋ.सं. १०/१९०;　　२. अथर्ववेदे व्रात्यसूक्ते।
३. अथर्ववेदे ब्रह्मविद्याप्रकरणम्, पृ. ३१०;　　४. अथर्ववेदे-४/१७।

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम्।
प्र तन्मे वोचो दूलभ स्वधावोऽवत्वानेना नमसा तुर इयाम्[१]।।

प्राग् इदमुक्तमस्ति यद् विदुषां वचोभिर्याज्ञिका एवमवगच्छन्ति यद्वरुणः क्रुद्धोऽस्ति। अतः कृतेऽपराधे तेषां यजनकर्तॄणां बोधाभावात् प्रार्थयन्ति ते यस्मात्स वरुणः क्रुद्धोऽस्ति। अस्याम् ऋचि निरूपितेन विषयेणेदमवगम्यते यद्वरुणस्तथाविधोऽधिकारी वर्तते, यो न केवलं कृतापराधं दण्डयति, परञ्चापराधकर्मसु कर्तृषु च सावधानदृष्टिम्, अपराधनिर्धारणम्, दण्डनिर्धारणम्, प्रायश्चित्तोपायाँश्च कल्पयति। सर्वमिदं कथनमनया ऋचा पुष्टिमाप्नोति—

परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो च इषयन्त मन्म[२]।।

अयञ्चाग्नितुल्यो वरुणः प्रखरः, सर्वज्ञः, श्रेष्ठः, नीतिशास्त्रज्ञः, मर्त्यलोके त्रयाधिकारसम्पन्नः, द्युलोकेऽपि तथैव सूर्यस्य प्रतिष्ठापकश्चेति प्रथितः[३]। अस्य हस्ते स शृङ्खलापाशो व्यनक्ति यदयमुग्रतमोऽधिकारी दण्डाधिकारी वेति[४]। अयञ्च स्वीकृतापराधम्, कृतप्रायश्चित्तं पापिनं तथैव मुञ्चति, यथा चौराः पशून् तृष्णादिभिस्तर्पयित्वा पापेभ्यो मुक्ता भवन्ति[५]। एवं राजपदाभिधेयोऽयं सर्वशक्तिसम्पन्नोऽधिकारी वेदेषु प्रतिष्ठापितः। अस्य शासनमतीवोग्रं निष्पक्षं कूटादिरहितमस्ति। शासनस्येदं वैलक्षण्यम्, यदयं जनैः कृतं गुप्तमप्यपराधं विज्ञातुं समर्थः। अतः सुव्यवस्थितं सुनियन्त्रितं चास्य शासनं विधिव्यवस्थायाः प्रतीकभूतमस्ति।

राज्ञो वरुणस्यास्य सहयोगिनः सूर्यचक्षुषोऽग्निर्जिह्वः सोमः, दैत्याः, आदित्यः, मित्रश्च सन्ति। अयमेतेषां सर्वेषां राजेति। एवमयं योग्यशासनाधिकारिषु महादर्शभूतोऽस्ति[६]।

अस्य वरुणस्य शासनव्यवस्था विभिन्नविभागेषु विभाजिताऽस्ति। प्रमुखतया कार्यकारिणीरक्षा या दण्डदात्री सभा, त्रस्तसदनम्, व्यवस्था चेति। अस्य प्रधानसहयोगिरूपेण मित्रोऽपि प्रसिद्धः[७]। 'मित्रावरुणौ वा अपां नेतारौ' इत्यनेनोप-

---

१. ऋ.सं. ७/८६/४। २. तत्रैव–७/८७/३।
२. तत्रैव–७/८७/५। ४. अथर्ववेदे-४/८६/६।
५. ऋ.सं. ७/८६/५।
६. (क) ऋ.सं. ४/४/३, १/३३/८, ९/७३/४, १०/१०/८, ८/४७/११, ७/२८/४।
(ख) अथर्ववेदे—३/३/३, १/३३/२, ४/१६/४, ४/१५/१२, १/२१/१-४।
७. तै.सं. ६.४.३.३।

निषद्वाक्येनापि प्रतीयते यदुभावपि सम्मिल्य शासनव्यवस्थामचालयतामिति। वेदतत्त्वानुशीलकैर्यो हि क्रमो वैदिकशासनस्य सुविचार्य समुल्लासितः, तस्मिन् क्रमे प्रथमं व्यावहारिके जगति तपसः समुद्भूतं समस्तविधीनां नैतिकगुणानाञ्चाधारभूतं शासकीयं तत्त्वं त्रस्तमजायत। तस्माच्च इडा-सरस्वती-भारतीति तिसृणां संस्थानां समुद्भवः। तासाञ्च क्रमश इन्द्र-यमराज-वरुण इति त्रयोऽधिकारिणः[१]। तत्र इडाया अधिकारी—इन्द्रो राष्ट्रनिवासिनां धारणम्, पोषणम्, नागरिकाणां सौविध्यसम्पोषणञ्च वितनोति। यमराजस्तु दुष्टानां संहारम्, राष्ट्रप्रबन्धम्, दण्डदानम्, दण्डनिर्णयञ्च विदधाति। वरुणः श्रेष्ठविदुषां दिवनाम्नीं सर्वोत्कृष्टां सभाम्, विधिनिर्माणम्, न्यायञ्च निर्माति।

वैदिककोशानुसारेण राज्यसत्ताया अनेके प्रकाराः समुपलभ्यन्ते[२]। तत्रालोचकैर्यो निष्कर्षः समुद्भावितः, तदनुसारं शासकानां पदानुरूपोपाधेरप्युल्लेख उपलभ्यते। यथा—'भौज्यं नाम भोजोपाधिधारिणो राज्ञः पदम्' इत्याद्यवलोक्य सन्देहो भवति यदिमे प्रकारा राजराज्यशासनेषु कतमस्य बोधका वर्तन्ते। तत्र वस्तुतो राजराज्यशासनानि पृथक् पृथग् वर्तन्ते।

ब्राह्मणग्रन्थेभ्योऽवगम्यते यत् प्राचीनकाले (वैदिकयुगे) राजानः स्व-स्व-शक्तिज्ञापनाय संवर्धनाय च तत्तत्पदसूचकान् यज्ञान् सम्पादयन्ति स्म। यो यादृशं यज्ञं करोति स्म, स तादृशेन पदेनालङ्कृतो भवति स्म। राज्यानां नामानि विभिन्नेषु वैदिकग्रन्थेषूपलभ्यन्ते। तत्र मैत्रायणीसंहितायाम्[३], तैत्तिरीयब्राह्मणे तथा च ऐतरेयब्राह्मणे क्रमशस्त्रयोविंशतिराज्यानां नामोल्लेखो वर्तते। येषाञ्च स्वरूपं वैदिककोशः, प्राचीनभारतीयशासनपद्धतिः, प्राचीनभारते राज्यं न्यायपालिका च, जातककालीनभारतीयसंस्कृतिरित्यादिग्रन्थेषु सम्यक् समुद्घाटितमस्ति। एवमेव रुद्रवस्वादीनां त्रयोदशाधिकारिणामपि तथा तद्विभागानाञ्च समुल्लेखस्तत्तद्-ग्रन्थेषूपलभ्यते।

वैदिककालीनसमाजे समाजस्य समुन्नयनाय, विकासाय, सुरक्षार्थञ्च सभासमित्यादीनामपि सङ्घटनमासीदिति वयमवगच्छामो विभिन्नेभ्यो वैदिकग्रन्थेभ्यः। वेदेषु सामान्यलोकनिर्णयादारभ्य राजकीयपरमोच्चनिर्णयपर्यन्तं सर्वं तावत् नीतिनिर्धारणं जनसभासु, समित्यादिषु च सम्पद्यते स्म। सभासमित्यादिषु

---

१. (क) यजु. २७/२९, (ख) यजु. २८/१, (ग) यजु. ४/३६, (घ) वा.रा., यु.का. २१/२, (च) ऋ.सं. १/२४/१०।

२. वैदिककोशः, पृ. ४४५।

३. मैत्रा. सं.११,५; तैत्ति. ब्रा. १/३/२/२।

समाहूतानां मतानां न केवलं श्रवणं भवति स्म, परञ्च तदनुरूपं निर्णयोऽपि भवति स्म। अत्रेदमवगन्तव्यं भवति यद् वैदिकयुगीना जनाः सद्धर्मपरिपालकाः शान्तिप्रिया अनुशासनप्रियाश्चासन्। एतस्मात्तेऽनुशासनपूर्वकं सुव्यवस्थितरूपेण विविधासु संस्थासु सम्भाषणेनाद्यन्तविषयानुशीलनेन च नीतिनिर्धारणं कुर्वन्ति स्म। मन्ये तत्कालिका जना नैतिकबलसम्पन्नाः, पक्षपातरहिताः, निर्लोभिनः, कीर्तिप्रियाः, प्रज्ञापराधरहिताश्चासन्। यथा हि—

विद्यते सभे नाश नरिष्टं। ना वा असि[1]।

अत्र केचिदामनन्ति यत्तस्मिन् कालेऽधुनावद् राज्यशासनमभिलक्ष्य प्रजासु समालोचनस्वरूपो वादः, प्रलापः सम्भाषणं वा प्रवर्तमानमासीत्। परञ्च नैतत् समीचीनं प्रतिभाति। यतो हि तस्मिन् काले जनैरनवधानतयाऽपि क्रियमाणस्येन्द्रियजनितपापकर्मणः प्रायश्चित्तो विधीयते स्म। तथा हि—यद्[2] ग्रामे यदरण्ये यत् सभायाम्, सभासदः सत्यवादिनो भवन्ति स्म। अनेनावगम्यते यत्तात्कालिकेषु सामाजिक-प्राशासनिक-सङ्घटनेषु तथाविधा विविधा मन्त्रणा विचाराश्च भवन्ति स्म। यत्र प्रतिजनं, समाजस्य वर्गस्य च सर्वाङ्गीणोत्कर्षाय, समस्तस्य राष्ट्रस्याभ्युन्नतये, शान्त्यर्थं शत्रुशमनार्थं प्रजापालनार्थञ्च प्राप्तानां सामान्यानाञ्च जनानां मध्ये सम्यग्विचारविमर्शा भवन्ति स्म। अथर्ववेदोऽस्मिन् विषये प्रस्तौति समुचितं प्रमाणं विपुलाञ्च सामग्रीम्। अतः परमपि वेदोत्तरवर्तिषु स्मृत्यादिषु ऋषिप्रणीतेषु ग्रन्थेषु सूत्ररूपेण वेदोक्तानां विविधानां विषयाणां व्याख्यानं वैशद्येनोपलभ्यते। इदं स्वरूपमस्ति वैदिकलोकतन्त्रस्य यद् राजानः केवलं सद्धर्मपालनयैव प्रवर्तेरन्। तत्र किमपि भौतिकमहत्त्वाकाङ्क्षायाः, पदलिप्साया लेशतोऽपि स्थानं नासीत्। मन्ये, तस्मिन् वैदिके युगे परोक्षतो राजसमाजे ऋषीणामाध्यात्मिकशक्तिसम्पन्नानां साधकानां प्रबलतममत्यादृतमनुशासनमासीत्। तस्मिन्नेव राज्ये ऋषिगणानां ब्रह्मविदां वसतिरासीत्, यत्राविघ्नमनुशासितं धर्मानुरूपञ्च शासनं प्रजानुपालनपरमासीदिति। राजानोऽपि तत्त्वविद आसन्। न केवलं तत्त्वविदः परञ्च तथाविधमहत्त्वाकाङ्क्षिण आसन् यद् दैत्यानामनुशासनाय न केवलं मर्त्येऽपि तु स्वर्गेऽपि गन्तुमुत्सुकाः समर्थाश्चासन्।

ऋषयोऽपि काले काले समुत्पन्ने सङ्कटे तेषां धर्मानुरक्तानां जनपालकानां शासकानामवितथं साहाय्यमाचरितवन्तः। लोका अपि तयोरुभयोः सामर्थ्यं सार्वकालिकं सर्वजनसंरक्षकत्वं स्वकर्तव्यञ्चाधिगम्य पक्षपातहीना गुणदोषविवेचन-

---

१. अथर्ववेदे-७/१२/२; २. यजु. ३/४५।

पुरस्सरं सर्वविधसाहाय्यमाचरितवन्त इति। अतः सार्वभौमिकैर्बाह्येन्द्रियविषय-निरपेक्षैः ऋषिभिः शमप्रधानैरुपदिष्टे समाजे जन्मना कोऽपि त्याज्यः, उपेक्ष्यः, निन्द्यश्चेति कल्पनैव नास्ति। यस्मात् सर्वेऽपि जना व्यष्टिरूपेण तथा च समष्टिरूपेण राष्ट्रचिन्तनपरास्तत्सञ्चालने सहभागिन आसन्निति विज्ञातं भवति।

अतः परं वैदिकोत्तरकाले शासकानामुपाधयो रूढाः सञ्जाताः, तथा च कानिचन तत्तदुपाधिप्राप्त्यर्थं कर्तव्यानि निर्धारितानि। यथा दिग्विजयपुरस्सरराज-सूयाश्वमेधादियज्ञस्यानुष्ठानेनैव चक्रवर्तीति। परिवर्तितस्यास्य शासनतन्त्रस्य राजतन्त्रात्मकं स्वरूपं मनु-याज्ञवल्क्य-शुक्र-कौटिल्यादिमुनिप्रणीतेषु ग्रन्थेषु पर्याप्तमवलोक्यते। यद्यपि सभा-परिषद्-गण-संस्थानामुल्लेख एभिरपि कृतः, तथापि तत्र पूर्ववत् तथाविधानां सर्वेषां वर्णानां प्रवेशस्वातन्त्र्यं वाक्स्वातन्त्र्यं नासीत्। अस्मिन् युगे परोक्षतः शासकानामेव शासनतन्त्रे स्वातन्त्र्येणैकाधिपत्यमासीत्। सभासंस्थादीनामपि निर्धारणे प्रत्यक्षहस्तक्षेपो नासीदपि तु राज्ञां नीतिप्रवर्तनायैव सापेक्षत्वमासीत्। अतोऽस्मिन् काले समेषां वर्णानां वर्गाणां जातीनाञ्च सभासु संस्थानेषु च न प्रत्यक्षाधिकारः, न वा विचारस्वातन्त्र्यमासीत्। यतो हीयं वेदोत्तरकालिकी शासनपद्धति-र्निरङ्कुशराजतन्त्रात्मिकाऽऽसीत्। परञ्च वेदेषु दर्शिता शासनपद्धतिः सत्यधर्मपरिनिष्ठिता सर्वजनप्रतिनिध्यात्मिका लोकतन्त्रात्मिकैवासीदिति। एवमुभयोः शासनपद्धत्योः पार्थक्यं स्पष्टतयैव प्रतिबिम्बितं भवति।

वैदिकयुगे सभासंस्थादीनां समुद्भवविषये कश्चिद्विशिष्टः कालो निश्चेतुं न शक्यते, परञ्च तत्र तासां मानवोद्भवात्मकमपि स्वरूपं न कल्पयितुं शक्यते। यतो हि भारतीयायां वैदिक्यां परम्परायामेकेश्वरवादस्यैव मूलत्वमस्ति। प्रथमं हिरण्यगर्भः सञ्जातः। अथवा विराट्पुरुषस्यैव प्रथमं समुद्भवः। एवमनादिकालादेव प्रकृत्याः प्रधानाप्रधानयोर्ज्ञानं यस्मिन् समाजे भवतीति, तत्र तथाविधं कालनिर्धारण-मनपेक्षितमेव। तथापि जनसमूहः काले काले स्वसौविध्यार्थं गुणदोषादिकान् लाभालाभं च समीक्ष्य नेतॄन् निश्चिनोति स्म।

यद्यपि भौतिकवादिनां मतानुकूलमाधुनिक्यां विकासवादात्मिकायां परम्परायां कथनमिदं समुचितं यदुत्तरोत्तरं विकासमधिमानवं प्रथमं परिवारेण सह सम्बध्नाति। प्रकृत्यैव बालोऽपि स्वपालकानुगो भवति। तथैवैकस्यापरेण समूहेन शत्रुमित्रयोः सम्बन्धोऽपि भवति। अतः स्वभावतः क्रमशो विकसितो मानवः स्व-सुरक्षानुरूपं विविधं संसक्तजनसमूहं निर्माति साधनानि च सृजति साध्यान्युन्मीलयति। [१]'ततो

१. ऋ.सं. १०/१९१/३

विश्वं व्यक्रामत् शासनानशने अभि' इत्यस्याम् ऋचि जगद्रचयिता प्रथमः शासको यस्य चराचरजगति शासनं वर्तते, अन्यत्र सूक्ते [1]'यः प्राणतो निमिषतो महित्त्वैक इद्राजा जगतो बभूव' इत्यत्र स हिरण्यगर्भाख्यः सर्वशक्तिमान् ईश्वर एव समस्तभूमण्डलस्य जगन्मण्डलस्य वा राजा बभूव इति ज्ञायते।

[2]नासदीयसूक्तेऽपि पुरुषो भोक्ता, अर्थात् प्रधानः। परञ्च भोग्यवस्तूनां स स्वयं निर्माता नास्ति, अपि तु सहैव तानि भोग्यवस्तूनि ब्रह्मणैव निर्मितानि भवन्ति। एवं वैदिके युगे कापि वर्तमाना सामाजिकी व्यवस्था मानवकल्पिता नास्ति, परञ्च सहैव भोग्यत्वेन समुद्भूताऽस्ति।

ज्ञानं सविषयं भवति। विषय एव नास्ति चिन्तनं किं स्वरूपम्। तण्डुलं नास्ति ओदनस्य का चर्चा। द्रव्यं स्वतः सम्भूतं, तस्योपयोगः, तस्योपयोगस्य प्रकाशश्च देशकालपरिस्थित्यादिभेदा भिन्ना भिन्ना भवन्ति। अतो विकासवादस्य समुद्भावनं कल्पनामात्रमेवास्ति। एवमेवाक्षरसमाम्नायोऽपि शासनविधेरनादित्वमवद्योतयति। तत्र पतिशब्दो बह्वर्थकः। वैदिककालादस्य शब्दस्याविच्छिन्नप्रयोगो मुख्यार्थे प्रचलन्नस्ति। येन च विज्ञायते यत् मानवेषु स्वाभाविकरूपेण गुणकर्मतः प्रधानाप्रधानभावः प्राक्कालादेवासीदिति। अपि च सर्वविदितमस्ति यद् वैदिकसभ्यतायाः प्रारम्भिकस्रोतांसि अरण्येषु ग्रामेषु वोपलभ्यन्ते। तत्र विविधानां परिवाराणां वर्गाणाञ्च समुन्नत्यर्थं शान्तिसुरक्षार्थं च सुव्यवस्थितप्रकारेण सामाजिक-राजनैतिक-धार्मिक-व्यवहारसम्पादनार्थं जनैः सङ्घानां परिकल्पनं तथानुसृतं यथा देवा देवपतिमनुसरन्ति स्म। तत्र स्वाभाविकीयं प्रक्रिया यद् यथा गृहे परिवारे यथैकः प्रधानजनो भवति, तथा ग्रामे, ग्रामसमूहे नगरे राष्ट्रे वा कश्चिदेकः प्रधानपुरुषो भवत्येव। तथाविधानि चोपलभ्यन्ते प्रमाणानि वेदेषु। तथा हि प्रथमं तावद् विभिन्नानां परिवाराणां प्रधानपुरुषाणां समुल्लेख उपलभ्यते। यस्मिन् धीमानो रथकाराः, कर्माराः, मनीषिणः प्रमुखा वर्तन्ते। क्रमशो ग्रामे, ग्रामसमूहे, नगरे चैतेषां सभासमितिषु प्रातिनिध्यमासीदित्यवगम्यते। सम्मिलितेषु प्रतिनिधिभूतेषु पूर्वोक्तेषु जनेषु स्व-स्व-वर्गेषु सम्मत्यर्थं देशकालानुरूपं धर्मानुरक्तं जनमेव पदानुरूपसामर्थ्यसम्पन्नं जनमेव निश्चिन्वन्ति स्म। कस्यचिदपि परिवारस्य समाजस्य व कश्चिदेको मार्गदर्शकः, शासकः, नियन्त्रको वा भवत्येव। यो हि समाजः सदाचारसम्पन्नः कर्मनिष्ठश्च भवति, समानरूपेण परस्परसुखदुःखानुभूतौ सम्मिलितो भवति, तस्मिन् स्वार्थरहिते समाजे जात्यादिकमाश्रित्य मानवीयगुणानामुपेक्षा न भवति, परञ्चोत्कृष्टगुणशालिनां

१. ऋ.सं. १०/१२१/३; २. तत्रैव–१०/१९१/५।

समादरपूर्वकं साग्रहसमायोजनं भवति कल्याणमयकार्यक्रमेषु। अन्यथा हि वैदिकं गुरुत्वं ब्रह्मवचश्च परिच्छिन्ने भवतः। सम्भूयैव जनकल्याणं राष्ट्रकल्याणं वा कर्तुं शक्यते।

वेदानां सूक्तिषु समृद्धिकाङ्क्षिण्यः सूक्तयो वर्तन्ते। स्तोतारस्तु शमप्रधाना ऋषयः समृद्धिनिराकाङ्क्षिणः। तर्हि कस्य हिताय ते मन्त्रा ऋषिभिरुन्मीलिताः। लोकानामेव। तत्रापि धनधान्यसमृद्धिकाङ्क्षिणां वणिजां कृषिकार्ये च संलग्नानां कृषकाणाम्। तयोर्हितकामनयाऽत्र ऋषयो यज्ञादिषु प्रवृत्ताः। अतस्तस्मिन् समाजे जात्यादिना कस्यचिदुपेक्षा न भवति स्म। सर्वेऽपि सामान्या वा जनप्रतिनिधयः कीर्तिमृद्धिञ्चाभिलषन्तो राष्ट्रसमुन्नतये दत्तावधाना लक्ष्यैकसाधका वर्ग-जाति-क्षेत्रादिसम्बन्धिनीं पक्षपातादिरूपिणीं दुर्भावनां परिहृत्य लक्ष्यमभिलक्ष्य सम्मिलिता बभूवुः। यद्यपि तात्कालिके समाजे कार्यभेदाद् वर्गभेदव्यवस्थाऽऽसीत्, तथापि सर्वे जनाः सामूहिकरूपेण राष्ट्रोत्थानभावनया तथा च जनकल्याणकामनया सामाजिकव्यवहारसाधनाय, नीतिनिर्धारणाय, निर्वाचनादिकार्यसम्पादनाय सम्मिलिता बभूवुः। अयमेव वैदिकसमाजस्य श्रेष्ठादर्शः[१]।

इमाश्च संस्था राष्ट्रोत्कर्षैकफलायैव यद्यपि भवन्ति स्म, तथापि कार्यभेदानुसारेण तासां विविधानि स्वरूपाणि समवलोक्यन्ते। तत्राथर्ववेदमधिकृत्यानुशीलने कृते सति प्रतीयते यत् सामाजिकव्यवस्थाया व्यवस्थापनाय, शासकीयनीतिनिर्धारणाय, लोककल्याणाय, धर्मानुष्ठानाय, जनानां ग्रामादारभ्य नगरपर्यन्तं सुखसमृद्धिविवर्धनाय विविधाः संस्था आसन्निति। तत्र समासमित्यादिभिरारभ्य भारती, सरस्वती तथा च व्रात्यपर्यन्तं त्रिंशत्संख्याकानां संस्थानामुल्लेखो वेदेषूपलभ्यते। संस्थानां प्रयोजनमुपयोगश्च क्वचित्सूत्ररूपेण क्वचिच्च विस्तरेणोपलभ्यते। राज्ञो राज्यस्याधिकारकर्तव्ययोर्निर्धारणे राज्यसत्ताया उद्देश्यविनिश्चये न्यायप्रक्रियाया महत्त्वपूर्णं योगदानमस्ति।

यदि च राज्ये निष्पक्षतया न्यायव्यवस्थायाः प्रवर्तनं समाजे नास्ति, तर्हि राज्यसत्तायाः संस्थायाश्च निष्प्रयोजकत्वमेव। निष्पक्षन्यायव्यवस्थायां विश्वस्ता जना राष्ट्रं राजानं प्रति च समधिकमुत्तरदायित्वमावहन्ति। कर्तव्यं प्रति दत्तावधाना भवन्ति। इयमेव भावना वैदिकचर्चासु समवलोक्यते। राजा स्वयमेव सर्वोच्चदण्डाधिकारी, न्यायकर्ता, लोकानामार्तिहा सौविध्यव्यवस्थापकश्चासीत्। यद्यपि न्यायाधिकरणानां समितिसंस्थादीनां ग्रामे नगरे वा न्यायसम्पादनेऽप्युत्तरदायित्वमासीत्, तथापि तन्त्रस्य सर्वोच्चशक्तेः प्रतीकस्थानं राजैवासीत्।

---

१. ऋ.सं. १०/१९१/२-४।

भारतीयसंस्कृतौ पञ्चविस्ताररूपेण पञ्चायतनमनादिकालात्प्रसिद्धमस्ति। तत्रैका प्रधानशक्तिः, अन्याश्च सहायकाः। इयं या परम्परा 'पञ्चजनाः' इति सा पञ्चपरमेश्वररूपेणाद्यापि ग्रामे ग्रामे निर्बाधं प्रवर्तते। एवं सर्वशक्तिसम्पन्नेन राज्ञा सर्वे दण्डनीया[१] इति काठकसंहितायां राजा शूद्रस्य दण्डदः कथ्यत इति चोक्तमस्ति। एवं नागरिकन्यायस्य क्रियान्वये राजाऽन्तिमोऽधिकारी भवति स्म। सत्यविनिश्चये स केवलमन्तिमं निर्णयं विदधाति स्म। आपराधिकन्यायाधिकरणानां स्थितिविषये वरुणदेवतायाः स्तवने प्रायश उल्लेखो दरीदृश्यते[२]। स वरुणो राजसत्तायाः प्रतिनिधिभूतः। तस्य लोकानां समस्तापराधाभिज्ञत्वं प्रथितम्[३]।

निष्कर्षतया तथ्यमिदं निःसरति यद् अनन्ता वै वेदा इत्याभाणकमाश्रित्य तेषामनन्तविषयत्वमपि गम्यं भवति। तत्र केचन विषयाः स्वमत्या सङ्क्षिप्ततयाऽत्र प्रस्तुताः। वेदानामवलोकनेनेदं तथ्यमक्षिपथमापतति यद् वेदेषु प्रयुक्ताः शब्दा यथाऽर्थानामानन्त्यमवद्योतयन्ति, न तथेयं परम्पराऽनन्तरमवलोक्यते। यथा व्यवहारशब्दः, धर्मशब्दश्च वैदिकवाङ्मये समस्तसामाजिक-धार्मिक-राजनैतिक-आर्थिकप्रभृतिविधानां बोधकौ स्तः[४]। परञ्च तदुत्तरवर्तिनि साहित्ये प्रत्येकं व्यवहारस्य विषयस्य वा ज्ञानाय प्रतिपादनाय च पृथक् पृथक् शब्दाः प्रयुक्ता वर्तन्ते। मन्ये सूत्ररूपेण समुन्मीलितानां वैदिकमन्त्राणामनन्तरमाचार्यैः कृतमनुशीलनं परिष्कारो विस्तरश्चैव तत्र तत्र वैशिष्ट्यमिति।



---

१. शतपथब्राह्मणे-५/४/४/७।
२. काठकसंहितायाम्-२६/४।
३. ऋ.सं. १/२५/१३, ४/४/३, ६/६७/५, ७/८७/३, १०/१०/८; अथर्ववेदे-९/४।
४. ऋ.सं. ८/४७/११।

# श्रौतस्मार्तयज्ञेषु विज्ञानम्

**डॉ. महेन्द्रपाण्डेयः**
प्राध्यापकः, वेद-विभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



यज्धातोः निष्पन्नोऽयं यज्ञशब्दः, इज्यन्ते देवा अस्मिन्निति तदर्थः। चत्वारो वेदाः साङ्गाः सरहस्याः सच्छिष्येभ्यः सम्प्रदीयन्ते सदाचार्य्यैर्येन स यज्ञः। यजनं धर्मदेशजातिमर्यादारक्षायै महापुरुषाणामेकीकरणं यज्ञः। शतपथब्राह्मणे निगदितं सर्वेषां देवानाम् आत्मा यज्ञ इति। साम्प्रतिके युगे विज्ञानस्य महत्त्वम् अतीव प्रतीयते। विशिष्टं ज्ञानं विज्ञानं भवति।

अस्मिन् संसारे यावन्तो जङ्गमात्मकाः प्राणिनः सन्ति, तेषां मनुष्येषु परस्परोपकारभावो जायते। एतदर्थं हि प्रथमतो जगत्पिता देवान् संसृज्य अन्तरिक्षादिस्थानं सृष्टवान्। यज्ञेन देवाः सौख्यसाम्राज्यमनुभवन्ति, सर्वे मनुष्या यज्ञेन महद्वैभवं प्राप्नुवन्ति। यथा गीतायाम्—

> सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
> अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।
> देवान् भावयतानेन ते देवा भावयन्तु वः।
> परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।। (गीता-३/१०-११)

सर्वे विद्वांसो विदन्त्येव यद् वैदिकवाङ्मयेषु विज्ञानस्य मुख्यमवलम्बनं यज्ञोऽस्ति। सर्वेऽपि विज्ञानावलम्बिनः स्वमतं वेदप्रतिपादितैः प्रमाणैः परिपुष्टं कुर्वन्ति। न हि केवलं भारतीया एव श्रद्धालवः, अपि तु पाश्चात्त्या अपि वैज्ञानिका विद्वांसः श्रद्धानता दृश्यन्ते, यतो हि वैदिकवाङ्मये यज्ञादिकर्ममूलं विज्ञानमस्ति। पुरुषवृक्षनदीकूपादिप्रकृतिपारमार्थिकपदार्थानां सृष्टिस्थपृथिव्यन्तरिक्षद्युस्थानामैहिक-विषयाणां व्यवहाराणां प्रबोधनस्य च पर्याप्तान्युदाहरणानि लभ्यन्ते।

विज्ञानविषये पुरुषसूक्तं प्रसिद्धमस्ति। अत्र साङ्गवेदपुरुषयज्ञपुरुषकालपुरुषा इव वैज्ञानिकपुरुषोऽपि वर्तते।

सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः। स एव भूमिसृष्टेरनन्तरं तेषां जीवानां शरीराणि उत्पादितवान्। पुरुष एव यज्ञाद् दधिमिश्रमाज्यं सम्पादितवान्। तथा च गवाश्वादीन् पशून् उत्पादितवान्। तथा चैवं ब्राह्मणादीन् मनुष्यान् चन्द्रादिदेवान् अन्तरिक्षादिलोकान् वसन्तादीन् ऋतून् इति। स च जीवनव्यापारे ज्ञानार्थं धर्माधर्मव्यवहार-ग्राह्याग्राह्यलक्षणं कर्तव्याकर्तव्यकर्म च। कथितमपि—

'तस्माद्यज्ञात्सर्वहुत ऋचः' (शु.य. ३१.७)। यतो हि ऋग्यजुः-सामभिश्छन्दोभिश्च विना यज्ञा न सिद्ध्यन्ति। तथा ये सृष्टिसाधनयोग्यास्तान्यपि उत्पादितवान्। "यज्ञो वै कर्म" (शतपथब्रा. १.१.१.१) तथा च "यज्ञो वै सर्वकामधुक्", अतो भूलोके यज्ञस्य परमं महत्त्वं वर्तते।

प्रधानत्वेन परोपकारं जगत्कल्याणं चाभिलक्ष्यैव यज्ञादीनां विधानं मनीषिभिः कृतम्। सम्यगेवोक्तं ब्राह्मणग्रन्थेषु—

यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैव विद्वान् होता भवति।
(ऐत.ब्रा. १.२०)

यद्यपि प्रकृतिरियं स्वयमेव अग्न्यादिभिः पुष्पादिभिश्च दोषं शोधयति परं मानवनिर्मितं प्रदूषणं शोधयितुं सा नैव क्षमा। तत्रास्ति पुरुषप्रयत्ननिवार्यत्वम्। गोघृते गुग्गुलकेसरयुक्तकस्तूर्यादिद्रव्येषु च तादृशं सामर्थ्यं वर्तते यद् रोगान् रोगकारणानि तानि सद्यो घ्नन्ति। वायोर्यो दुर्गन्धियुक्तो विकारदोषः प्राणिकृतकर्मभिर्जायते सोऽपि होमेन दूरीभवति। वेदे निगदितं यत्—

यस्य कूर्मो गृहे हविस्तमग्ने वर्द्धया त्वम्।
तस्मै देवा अधिशुवन्नयं च ब्रह्मणस्पतिः।। (यजु. १७.५२)

यज्ञैश्च पर्यावरणरक्षा विधेयाऽस्ति, तथैव आन्तरिकपर्यावरणरक्षार्थमपि महान् प्रयत्नः कार्यः। सामाजिकपर्यावरणं कथं शुद्धं स्यादिति जिज्ञासायाम् अनेके वेदमन्त्रा दृष्टिपथमुपयान्ति। श्रेष्ठः समाजः कीदृक् स्यात् कथं वा व्यवहरेदाचरेद् वेति तल्लक्षणं तद्विधिश्चोत्तमरीत्या प्रतिपाद्यते। ऋग्वेदस्य दशम-मण्डलस्योपान्तिमसूक्ते त्रयो मन्त्रा इत्थं पठिताः—

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथापूर्वे संजानाना उपासते।।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानमन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।।

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति।।

एवंविधा अन्येऽपि बहवो मन्त्रा वेदेषूपलभ्यन्ते, यत्र व्यक्तिमारभ्य कुटुम्बसमाजराष्ट्रसार्वभौमपर्यन्तं जनेभ्यो बहुमूल्या उपदेशा उपदिष्टाः सन्ति। अतो यदि जगति वर्तमानानां पुरुषाणां सुखेन जिजीविषा वर्तते, तर्हि वेदे ये ये मन्त्राः परमेश्वरेण दत्तास्ते सर्वैरपि पुरुषैः स्वीकर्तव्याः। उक्तञ्च गीतायाम्—

यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।

तत् कर्म अपि श्रौतस्मार्तरूपं द्विविधम्। तत्र येषां यागानां श्रुतिषु विधानं लभ्यते, ते श्रौतयज्ञाः कथ्यन्ते। येषां यागानां विधानं गृह्यसूत्रेषु वर्तते ते स्मार्त-यज्ञाः कथ्यन्ते।

श्रौतादियज्ञकर्मणि नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं यज्ञकर्म प्रतिपादितमस्ति।

१. तत्र नित्यम्—यावज्जीवमग्निहोत्रं जुहोति, तस्य नियतनिमित्तत्वात्।
२. नैमित्तिकम्—यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, तस्य नियतनिमित्तत्वात्।
३. काम्यम्—'चित्रया यजेत् पशुकामः' इत्यादिकम्।
४. निषिद्धम्—तस्मान्मवद्वाससा न संवदेत् न सहासीत इत्यादिकम्।

तेषु नित्यनैमित्तिकानुष्ठानात्तदकरणे प्रत्यवायो भवति। यथा याज्ञवल्क्येन प्रोक्तम्—

'विहितस्याननुष्ठानान्निमित्तस्य च सेवनात्।
अग्निग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति।।' (या. स्मृतिः, ३/२/९)

श्रौतकर्माणि पञ्चधा विभक्तानि सन्ति। तथा हि अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमश्चेति। स्मार्तकर्माणि तु—औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासश्राद्धम्, श्रवणा, शूलगव इति सप्त पाकयज्ञसंस्थाः।

अग्निहोत्रं, दर्शपूर्णमासौ, आग्रायणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञादयो दर्विहोमा इति सप्त हविर्यज्ञसंस्थाः।

अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्यामिति सप्त सोमसंस्थाः।

तत्र दर्शपूर्णमासौ अमायां पूर्णिमायाञ्च कर्तव्यौ। अस्य च कर्मणः सम्पादने सपत्नीकेन यजमानेन सह चत्वार ऋत्विजो भवन्ति। तत्र पौर्णमासमनुष्ठाय ततो दर्शोऽनुष्ठेयः। दर्शपूर्णमासयागकर्मणि षड्यागा भवन्ति। तत्र पौर्णमास्यामाग्नेयोऽष्टाकपालः पुरोडाशयागः, अग्निषोमीय उपांशुयाग आज्यद्रव्यकः। अग्निषोमीय एकादशकपालः पुरोडाशयाग इति त्रयम्। दर्शे च आग्नेयोऽष्टाकपालः पुरोडाशयागः, इन्द्रदेवताको दधिद्रव्यको यागः, इन्द्रदेवताकः पयोद्रव्यको याग इति त्रयम्। दर्शपूर्णमासाविष्टीनां प्रकृतियागः। यत्र समग्राङ्गोपदेशः सा प्रकृतिः। यत्र चान्यतोऽङ्गप्राप्तिः, सा विकृतिरिति।

चातुर्मास्यम्—चतुर्षु मासेषु भवानि चातुर्मास्यानि कर्माणि। चातुर्मास्ययाग-कर्मणि चत्वारि पर्वाणि भवन्ति। वैश्वदेव-वरुणप्रघास-साकमेध-शुनाशीरीय-संज्ञकानि। यागस्यारम्भः फाल्गुन्यां पौर्णमास्यां कर्तव्यः।

अग्निहोत्रम्—अग्निहोत्रकर्मणि अग्निग्रहणं तु आधानेनैव भवति। आधानं च वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यो, वर्षासु वैश्यः, एतावता अग्निहोत्रकर्म त्रैवर्णिकान् प्रतिवर्णोद्देशेन विहितमिति। अनेनैव अग्न्याधानेन श्रौतानामग्नीनां सिद्धिः।

निरूढपशुबन्धः—प्रतिवर्षं वर्षर्तौ अमायां पौर्णमास्यां वा पशुना यागः कार्यः।

आग्रायणेष्टिः—अग्नेनवान्नोपत्यान्तरमयनमाचरणं यस्य तदाग्रायणाख्यम्। सा च शरदि वसन्ते च कर्तव्या। द्रव्यमत्र पुरोडाशश्चरुश्च।

सौत्रामणी—ऋद्धिकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो मुखेन सोमवामिनो राजच्युतनृपस्य पशुकामस्य च सौत्रामणीयागः। सा च नित्या काम्या नैमित्तिकी चेति त्रिविधा।

सोमयागः—अत्र द्रव्यं सोमरसः। सोमो नाम लताविशेषः। यागेऽस्मिन् षोडश ऋत्विजः, ते च गणचतुष्टयेन विभक्ताः सन्ति। यागोऽयं दिनैकसाध्यः, तथापि स्वाङ्गैः सहितैः पञ्चभिर्दिनैरनुष्ठीयते।

वाजपेयः—यागेऽस्मिन् ब्राह्मण-क्षत्रियमात्रस्यैवाधिकारोऽस्ति। सप्त-संस्थान्तर्गते वाजपेये तु वैश्यस्याप्यधिकारो भवति। कालश्चास्य शरदर्तुः। यागस्यारम्भेऽन्ते च बृहस्पतिसवो ज्योतिष्टोमो वा। अथवा वाजपेयस्य द्वादशसु शुक्लपक्षेषु द्वादशानामनुष्ठानम्।

राजसूयः—येन राज्ञा वाजपेययागो न सम्पादितस्तेन राजसूययागः कर्तव्यः। यज्ञेऽस्मिन् क्षत्रियमात्रस्याधिकारो भवति। अस्मिन् यागे अनुमत्याद्या इष्टयः,

मल्हाद्याः पशुयागाः, पवित्राद्याः सोमयागाश्च भवन्ति। यागस्यारम्भकालः फाल्गुनशुक्लप्रतिपद् भवति।

अश्वमेधः—यागेऽस्मिन् अभिषिक्तः सार्वभौमराजा एव अधिकारी भवति। अश्वस्य सवनीयपशुत्वादश्वमेधसंज्ञा। फाल्गुनशुक्लस्याष्टम्यां नवम्यां वा अथवा ग्रीष्मे यागस्यास्य प्रारम्भः कर्तव्यः।

अग्निचयनम्—चयनं नाम इष्टकाभिः सम्पादितः स्थण्डिलविशेषः। अतः अग्न्याधारत्वादस्य स्थण्डिलस्य अग्निचयनमिति। यागेऽस्मिन् वेद्या रचना १०८०० इष्टकाभ्यो भवति। वेद्या आकृतिः पतत्रप्रसारितपक्षिण इव भवति। अस्य च सोमयागत्वाद् वसन्तः कालः।

स्मार्तयज्ञेषु प्रथम औपासनहोमः—द्रव्यैर्हस्तेन क्रियमाणो होम औपासन-होम इति। कर्मण्यस्मिन् सायं प्रातः दध्ना तण्डुलैरक्षतैर्वा होमः क्रियते। होमोऽयं सपत्नीकेन पुरुषेण सायं प्रातः कालद्वयं यावज्जीवमनुष्ठेयः।

वैश्वदेवम्—पाकयज्ञेषु द्वितीयं वैश्वदेवम्। वैश्वदेवस्यैव च नामान्तरं महायज्ञ इति। तथा हि 'देवयज्ञः, भूतयज्ञः, पितृयज्ञः, मनुष्ययज्ञः, ब्रह्मयज्ञः।' (शतपथ-ब्रा. १/५/५/१)

पार्वणम्—इदं कर्म प्रत्यमायां कर्तव्यम्। नित्यमिदं कर्म।

अष्टकाश्राद्धम्—इदं हेमन्त-शिशिरसम्बन्धिनीषु चतसृषु कृष्णपक्षाष्टमीषु अपूप-गोमांस-शाकैरिन्द्र-विश्वेदेवप्रजापति-पितॄनुद्दिश्य क्रियमाणं कर्म।

मासश्राद्धम्—इदं कर्म मासि मासि क्रियमाणम्। 'मासि मासि वोऽशनम्।'

श्रवणाकर्म—इदं कर्म श्रावणमासस्य शुक्लपञ्चदश्यां (पौर्णमास्यां) कर्तव्यम्। तथा च इदं सर्पेभ्योऽर्थे क्रियमाणं बलिकर्म। "सक्तून्सर्पेभ्यो बलिं हरेदाग्रहायण्याः"। इदञ्च सकृत्कार्यं, कालसंयोगाभावात्।

शूलगवः—शूलगव इति गोद्रव्यकः कर्मविशेषः। गोः स्थाने स्थालीपाकस्यानुष्ठानम्। यथा आपस्तम्बगृह्यसूत्रे—'ईशानाय स्थालीपाकं श्रपयित्वा' (९/१३)।

एतावता इमे श्रौतस्मार्तयज्ञा भूतानां विलक्षणहितार्थं संवलिता सन्ति। तेभ्यो देवशुद्धिः, इन्द्रियशुद्धिः, अहङ्कारशुद्धिः, चित्तशुद्धिश्च भवति।

तथा च स्मृत्यादिषु गृहस्थेभ्यः पंञ्चयज्ञानां यदुल्लेखः, तदाश्रित्यैव कर्तव्यः। तथा हि मनुः—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिभूतो नृयज्ञोऽतिथिपूजनम्।।

एवं पञ्चयज्ञेषु कृतेषु मनुष्याणां सर्वविधमङ्गलं भवति। अद्यापि दृश्यते अनुभूयते यद् यज्ञेनैव प्राणिनामस्तित्वं सम्भवति। यज्ञेनैव भूतले विद्यमानानां प्राणिनाम् उत्पत्तिः सञ्जाता तथा च तेनैव जीवनस्य विकासोऽपि। एवञ्च देवपितृमनुष्याणां तर्पणेन आदित्यस्तुष्यति, तुष्टे चादित्ये मेघो वर्षति। अपि च अग्नौ हुतं द्रव्यं वाष्पीभूय गगनमण्डलं व्याप्नोति पुनातीति। हुतद्रव्यैश्च सर्वे प्राणिनः सुवासितेन वायुना शान्तिं पुष्टिमारोग्यं चानुभवन्ति। तद् हुतं द्रव्यं च वाष्पीभूय मेघरूपेण परिणमते पश्चाच्च वृष्टिरूपेण भूमौ आपतति। तदेव जलं व्रीह्याद्यन्नेषु वनस्पत्यादिषु च शक्तिरूपेण औषधिरूपेण च जायते। स एव जलात्मको रसः सर्वान्मनुष्यपश्वादीन् जीवयति शरीरादिकं दृढतरञ्च सम्पादयति।

श्रुतिश्चास्मिन्नर्थे भवति—"अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः"। (माध्यन्दिनीये उव्वटभाष्ये) तथा च गीतायामपि—

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः'।। (३/१४)

तथा हि माध्यन्दिनीये भाष्ये—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।। (१०/१०)

तथा च यज्ञाकरणे प्रत्यवायमाह माधवीये व्यासः—

"पञ्चयज्ञाँस्तु यो मोहान्न करोति गृहाश्रमी।
तस्य नाम न हि परो लोको भवति निन्दितः"।।

यज्ञविषये श्रीमद्भागवतेऽपि व्यासः—

"यस्य राष्ट्रे पुरि चैव भगवान् यज्ञपूरुषः।
इज्यते स्वेन धर्मेण जैनवर्णाश्रमान्वितैः।।

तस्य यज्ञे महाभाग भगवान् भूतभावनः।
परितुष्यति विश्वात्मा तिष्ठतो निजशासने।।" (४/१४/१८-२०)

एतावता यज्ञः प्राणिकर्मसु श्रेष्ठो भवति, येन कर्मणा सम्पूर्णविश्वं सौख्यं कल्याणमारोग्यञ्चाप्नोति।

यज्ञपुरुषनामा ईश्वरो जीवश्च। आधिदैविकः प्रजापतिः, आधिभौतिको जीवश्च। जीवोऽपि चैतन्यमेव। स अनेकेषु स्थानेषु विभिन्ननामरूपेषु च दृश्यते। प्रजापतेरुत्कृष्टरूपं जीव इति। यथा—

'मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरम्।
स मायी सृजतीत्याहुः श्वेताश्वतरशास्त्रिणः'।।

मनुस्मृत्यनुसारेण तु ऋषिभ्यः पितरः, पितृभ्यो देवदानवास्तथा देवेभ्यः सर्वं जगदासीदिति—

''ऋषिभ्यः पितरो जाता पितृभ्यो देवदानवाः।
देवेभ्यश्च जगत् सर्वं चरस्थाण्वनुपूर्वशः'।।

श्रुत्यनुसारेण तपस उत्पन्नत्वात्सर्वेऽपि जीव्यत्वात् सर्वाघाद् ऋतादेव समस्तब्रह्माण्डस्योत्पत्तिः, यस्मिन् सूर्यचन्द्रनदीसमुद्रकालादीनामुत्पत्तिरभूत्। यथा—

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रोऽर्णवः।।
समुद्रादर्णवादधि संवत्सरोऽजायत।
अहोरात्राणि विदधाद्विश्वस्य मिशतो वशी।।
सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः।। (ऋ.सं. १०/१९०/१-३)

वैदिकयागकर्मसु शान्तिपुष्ट्यादिकर्मसु विनियोगा लभ्यन्ते दृश्यन्ते च—

'द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्ति.....इत्यादयः'। (शु.यजु. ३६/१७)

वेदेषु सङ्ग्रामे शत्रोः प्रबलसेनासंहरणाय नृपतेर्जयाय चानेका अभिचारमन्त्राः सन्ति। व्याधिनाशाय विभिन्नप्रकारकाणामौषधीनां प्रयोगो मन्त्रैः सह समुपलब्धो भवति। ज्वर-यक्ष्मा-कुष्ठ-कुलक्रमागतरोगविषादीनां निवारणाय बहुविधौषधीनां प्रयोगा नानाविधानैः सह समुपलब्धा भवन्ति। वेदमन्त्रैर्मनुष्याणां कल्याणस्य भावनाः प्रस्फुटा भवन्ति।

यज्ञादुत्पन्ना एव गवादयः पशवः, ऋगादिवेदाः, ब्राह्मणादयो मनुष्याः, चन्द्रादयो देवाः, अन्तरिक्षादिलोकाः, वसन्तादयः ऋतव इति।

कामानामुपादेयत्वेनायमेव यथार्थयज्ञः कल्पितः। यथा—'यज्ञोऽयं सर्वकामधुक्' (अङ्गिरा)। यज्ञेनैव कल्याणप्रदं भवति, तथा हि—''यज्ञाः कल्याणहेतवः'' (विष्णुपुराणे)।

'अग्निहोत्रं जुहुयात् स्वर्गकामः।
नौ ह वा एषा स्वर्ग्या यदग्निहोत्रम्'।। (शत. २/३/३/१५)

यज्ञे कृते स्वराज्यस्य प्राप्तिर्भवति—

"यम् एवं विद्वान् वाजपेयेन यजति गच्छति स्वराज्यम्"।

जायमानो वै ब्राह्मणस्त्रिभिः ऋणवान् जायते—ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। अपि च—ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन। (बौधायनः)

दैनन्दिनषट्कर्माणि अपि बोधयति—

"सन्ध्यास्नानं जपश्चैव देवतानाञ्च पूजनम्।
वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने।।"

यज्ञ एव जीवनाधायकः सद्गमनस्य च जनिता "यज्ञो वै आपः। यज्ञो वै अन्नः। यज्ञो वै स्वरहरहर्देवाः सूर्यः यज्ञ एव सविता" (गोपथ-ब्रा.)। "सर्वेषां देवानाम् आत्मा वै यद् यज्ञः"। (शतपथ-ब्राह्मणे)

गीतायामपि—

'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः'।

तथा च—

'इष्टान् भोगान् हि यो देवाः दास्यन्ते यज्ञभाविताः'।।

यज्ञस्य लोकत्रयव्याप्तिं श्रीमद्भगवद्गीताऽपि समर्थयति—

'तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्'।

यज्ञनिमित्तेनायुर्जीवनकालः क्लृप्तो भवत्विति यजुर्वेदस्य माध्यन्दिनीये अष्टादशाध्याये मन्त्रेषूल्लेखः कृतः—

'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां.......अभूम वेत स्वाहा'। (१८/२९)

एतावता यज्ञः कर्मसु श्रेष्ठो भवति, येन कर्मणा सम्पूर्णं विश्वं सौख्यं कल्याणम् आरोग्यमाप्नोति। अतः श्रौतस्मार्तविहितानि यज्ञकर्माणि विश्वशान्तये सदैव कर्तव्यानीति।

●

# निरुक्ते शब्दशक्तयः

**डॉ. रामाशीषपाण्डेयः**
आचार्योऽध्यक्षश्च, संस्कृत-विभागस्य
मारवाड़ी-महाविद्यालये
राँची



'शब्द' इति पदे शब्द् भावे घञ् यद्वा शप् आक्रोशे + दन्प्रत्ययो वर्तते।[1] शक्तिशब्दः शक्लृ-शक्तौ + क्तिन्प्रत्ययेन निष्पन्नो भवति।[2] शब्दस्य शक्तिः शब्दशक्तिर्यद्वा शब्दे निहितार्थबोधिका या शक्तिः, सा शब्दशक्तिरिति। शब्दे यया प्रक्रियया शब्दार्थबोधो जायते, सा प्रक्रिया एव शक्तिरूपेण वृत्तिरूपेण वा व्यपदिश्यते। या शब्दशक्तिः, सा एव शब्दवृत्तिः। शब्दः स्वकीयमर्थं बोधयितुमेकाधिकां वृत्तिमाश्रयति। अत एवार्थबोधने प्रयुक्ताः शब्दस्य शक्तयः शब्दशक्तयः, प्रयुक्ता वृत्तयश्च शब्दवृत्तयः प्रसिद्धाः। शब्दस्य प्रयोगोऽर्थबोधाय भवति। वाक्यपदीये वर्णितम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[3]।।

अक्षरं शब्दतत्त्वमर्थभावेन विवर्तते। अर्थेनैव जगतो ज्ञानं जायते। अर्थस्य स्थितिः शब्दे भवति। अर्थेनैव शब्दो भवति प्राणवान्। अर्थं वाचः पुष्पफलमिति यास्कः।[4] शब्देन योऽर्थबोधो जायते, स शब्दस्य ज्ञानं तद्विषये वा ज्ञानं प्रस्तौति। अत एव शब्दविषयको बोधो शाब्दबोधोऽपि कथ्यते। प्रत्येकेषु कार्येषु कारणव्यापारकार्यरूपाणि त्रीणि तत्त्वानि भवन्ति। पदस्यावबोधे सूत्ररूपकारणस्य तस्य तन्तुसंयोगादिव्यापारस्य वस्त्ररूपस्य कार्यस्य च स्थितिर्दृश्यते। अनेनैव शब्दज्ञाने शाब्दबोधे वा पदज्ञानं कारणं शब्दशक्त्या पदज्ञानजन्य-

---

१. शाशपिभ्यां ददनौ—पा.सू.-४/९६।

२. स्त्रियां क्तिन्—अष्टाध्यायी-३/३/९४। (अमरकोशे-२/८/९)

३. वाक्यपदीये—१/१; ४. निरुक्ते—१/६।

पदार्थोपस्थितिर्व्यापारः, पुनश्च शाब्दबोधः फलमिति। भर्तृहरिमते तु अर्थ-प्रत्यायनस्यानादियोग्यता शब्दशक्तिरेवास्ति।[१] इयमेव शब्दशक्तिः शब्दवृत्तिरपि।

अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तमिति सायणाचार्याः। निरुक्ते प्रतिपादिताः शब्दा अर्थप्रत्यायने विवेचिताः। महाभाष्ये शब्दार्थसम्बन्धविषये प्रोक्तम्—'सिद्धे शब्दार्थसम्बन्धे', अनेन तयोर्नित्यत्वं सिद्धम्। सकलवस्तु-बोधनसमर्थः शब्द एवेति वाक्यपदीये।[२] आचार्यदण्डिनो विचारे शब्दप्रकाशेन प्रकाशितेयं पृथिवी।[३] वाक्यपदीये पुनः 'इतिकर्तव्यता लोके सर्वा शब्द-व्यपाश्रया'[४] तथा 'अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः'।[५] सर्वत्र शब्देष्वर्थस्यैव प्राधान्यमिति प्रतीयते। निरुक्तेऽपि शब्दानां स्थितिरर्थप्रकाशने विद्यमाना विद्यते। चत्वारि पदजातानि—नामाख्याते चोपसर्गनिपाता इति कथयता यास्केन चतुर्विधं पदजातं स्वीकृतम्।[६]

> चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
> गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति[७]।।

परा-पश्यन्ती-मध्यमा-वैखरीति चत्वारि वाक्पदानि विद्यन्ते। देहेऽपि मूलाधारेऽस्मिन् समुद्यति समीरणः, तेनैव संस्कृतेन वायुना व्यापकत्वेनावस्थितः शब्दब्रह्मात्मको रवः परावागाख्यो मूलाधारेऽभिव्यक्तो भवति। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तो रवो मनोविषयतामुपगतः पश्यन्तीपदेनाभिधीयते। हृदयपर्यन्तमागच्छता तेनाभिव्यक्तो रवो मध्यमावागिति एवं मुखकण्ठादिस्थानेषु तेन वायुनाऽभिव्यज्यमानो वैखरीपदाख्यः।[८]

---

१. इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता तथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।। (वा.प. ३/३/२९)

२. न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।। (वा.प. १/११७)

३. इदमन्धन्तमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।। (काव्यादर्शे)

४. वा.प. १/१२१; ५. तत्रैव—१/१२७।

६. नि. १/१; ७. ऋ.सं. १/१६४/४५।

८. मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः
पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः।
वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना
बद्धस्तस्माद् भवति पवने प्रेरितो वर्णसंज्ञः।।
परावाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।। (अलङ्कारकौस्तुभे)

शब्दार्थचिन्तकानां मतेषु शब्दे या शक्तिर्निहिता भवति, सा समस्त-व्यवहारस्य प्रवर्तिका वर्तते। निरुक्ते प्रतिपादितमस्ति—'व्याप्तिमत्त्वात्तु शब्दस्य[1] शब्दः स्वमर्थमभिदधत् स्वक्रियाप्रवेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वमात्मानमभिसम्बध्यते'।

अनादिकालादेव शब्दशक्तयः स्वीकृताः। वेदार्थप्रत्यायनायापि न केवलमभिधावृत्तिरेवोपयुक्ता। अभिधा तु साक्षात्सङ्केतितार्थस्य बोधनादग्रिमेति कथ्यते।[2] साक्षात्सङ्केतितमर्थं यया शक्त्या बोध्यते, साभिधा नाम। वैदिकशब्दानां प्रयोगो मुख्यार्थादतिरिच्यापि प्राप्यते। तत्र गुणसामान्येन वान्यसम्बन्धेन शब्दः संयुक्तो भवति। परिणामतोऽभिधावृत्तिमतिरिच्य गौणीवृत्तिं लक्षणावृत्तिञ्च स्वीकृतवन्तः। गुणवृत्त्याधारिता गौणीवृत्तिरन्यवृत्त्याधारिता लक्षणावृत्तिरिति।

मीमांसायां वेदार्थचिन्तनं विशेषेण जातम्। तत्र मीमांसका अभिधावृत्तिं गौणीवृत्तिं लक्षणावृत्तिञ्च स्वीकुर्वन्ति। **कुमारिलभट्टादयस्तात्पर्यशक्तिमपि स्वीकुर्वन्ति**। अनेन प्रकारेण भाट्टमतेन पदार्थबोधायाभिधाशक्तिः, वाक्यार्थबोधाय तात्पर्यावृत्तिः, गुणाधारिता गौणीवृत्तिरन्यसम्बन्धेन सम्बद्धा लक्षणावृत्तिश्च स्वीकृताः। **परं प्रभाकरमतानुयायिनस्तात्पर्याख्यां वृत्तिं न स्वीकुर्वन्ति**। नैयायिका अभिधा लक्षणा चेति वृत्तिद्वयं पुनर्वैयाकरणा अभिधा व्यञ्जना चेति वृत्तिद्वयं स्वीकुर्वन्ति। वैयाकरणाः स्फोटविचारे कथयन्ति—पूर्वपूर्ववर्णानुभवजनितसंस्कार-सहितान्तिमवर्णानुभवेन यः स्फोटोऽभिव्यज्यते, स तु व्यञ्जनया एव। साहित्ये पुनः शब्दस्य तिस्रः वृत्तयः स्वीकृताः—अभिधा लक्षणा व्यञ्जना च। तत्राभिधयाऽभिधेयार्थस्य मुख्यार्थस्य लक्षणया लक्ष्यार्थस्य व्यञ्जनाशक्त्या च व्यङ्ग्यार्थस्य प्रत्यायनं भवति।

**निरुक्तेऽभिधाशक्तिः**

वेदार्थचिन्तने निरुक्तस्य स्थानं महत्त्वपूर्णम्। अभिधाशब्दः—अभि + धा + अङ् + टाप्-प्रत्ययेन निष्पद्यते। अस्या अर्थो भवति—नामाभिधानादयः। साक्षात्सङ्केतितार्थस्य प्रत्यायनं यया शक्त्या भवति साऽभिधेति। निरुक्तेऽभिधा-शक्तिः स्वीकृता—'अणीयत्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके'[3] इति

---

१. नि. १/१।

२. साक्षात्सङ्केतितार्थस्य बोधनादग्रिमाभिधा। (का. प्र.)

३. नि. १/२।

प्रतिपादयता आचार्ययास्केन शब्दस्यार्थः सङ्केतेन गृहीतः। अत्र संज्ञाशब्दः सङ्केतस्य वाचकः संज्ञाकरणं सङ्केतग्रहणस्येति। संज्ञाशब्दस्य प्रयोगो न केवलं द्रव्याभिधानायापि तु विषयस्य वाण्या सङ्केतायापि भवति। वाक्येनानेन सङ्केत-ग्रहणस्य प्रक्रिया वर्णिता परं सङ्केतग्रहणस्य विषयाः सङ्केतार्थप्रकाराश्च साक्षान्न विवेचिताः। पदविभागप्रकरणे सत्त्वस्य भावस्य च विवरणं लभ्यते। सङ्केतितार्थस्यैव परिणामः—सत्त्वादिकरणं भावादिकरणञ्च।

यास्ककाले अभिधा शक्तिरूपेण स्वीकृता परं तदानीमभिधाशब्दस्य प्रयोगो नासीत्। अभिधायाः कृते संज्ञाशब्दस्य प्रयोगः प्राप्यते। अभिधाननामधेय-प्रभृतिशब्दानां प्रयोगो निरुक्ते प्राप्यते। संज्ञाकरणं सङ्केतग्रहणस्य प्रतीकमासीत्। कालान्तरे सङ्केतग्रहणार्थमभिधाशक्तिः स्वीकृता।

शक्तिग्रहस्य साधनानि व्याकरणोपमानकोषाप्तवाक्यव्यवहारादीनि लभ्यन्ते। वैयाकरणमतेन शब्दा द्विविधाः—व्युत्पन्ना अव्युत्पन्नाश्च। निरुक्ते वर्णितमस्ति यद् व्युत्पन्नशब्दानां निर्वचनं व्याकरणपद्धत्या करणीयम्। अतो व्याकरणपद्धत्या सङ्केतग्रहणं यास्कानुमोदितम्।[१]

निरुक्तकाले कोषग्रन्थरूपेण निघण्टुग्रन्थो विश्रुतः। तत्र वैदिकशब्दानां सङ्ग्रहो विद्यते।[२] शब्दसङ्ग्रहोऽयं विषयानुरूपः प्रकरणानुरूपश्च दृश्यते। गवादयः पृथिव्या एकविंशतिनामानि जातरूपादयो हिरण्यस्य पञ्चदशनामानि विषयक्रमेऽर्थ-प्रकाशने निरुक्ते स्वीकृतानीति।

निरुक्ते उपमाशब्द उपमानार्थे सादृश्ये च प्रयुक्तः। सङ्केतग्रहे उपमानस्य महत्त्वपूर्णं स्थानमस्ति। यास्कः कथयति—यदेतत् तत्सदृशमिति गार्ग्यः।[३] यथा—ब्राह्मणवत् = ब्राह्मण इव। सादृश्येनार्थप्रकाशने अश्वस्य बाहुमूलः कक्षः, तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्येति।[४] आप्तवाक्यविषये निरुक्ते वर्णितमस्ति—पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिमन्त्रो वेदे।[५] आम्नायवचनादहिंसा प्रतीयते[६]-प्रभृतिवाक्यैराप्तत्वं स्वीकृतमस्ति निरुक्ते। 'साक्षात्कृतधर्माण ऋषयो

---

१. यत्र स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि यथा—गौरश्वः पुरुषो हस्तीति। (नि. १/४)

२. समाम्नायः समाम्नातः, स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते। (नि. १/१)

३. नि. ३/३; ४. तत्रैव—२/१।

५. तत्रैव—१/१; ६. तत्रैव—१/५।

बभूवु:, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादु:'।[१] अत्रापि आप्तवाक्यत्वमनुमोदितम्।

अर्थविनिश्चये प्रकरणमपि साधनभूतम्। देवानां निर्वचनं निरुक्ते प्राप्यते तत् प्रकरणानुरूपमेवास्ति। देवा गुणकर्मणा नानानाम्ना विश्रुता भवन्ति। विविधदेवानां विशेषणे कर्मसादृश्येन साम्यं दृश्यते, तत्र यास्क: प्रकरणानुरूपमेवार्थं प्रकाशयति।

अर्थनिर्धारणे व्यवहारस्य स्थानं सुविदितम्। यास्कस्याभिमतमस्ति यद् यदा शब्दस्य व्यवहारो भवति, तदैव स विचारणीयो भवति। लोके प्रयुक्तानि नामानि व्यवहाराय भवन्ति।[२] देशभेदादपि अर्थविनिश्चयो भवति। एकैव शब्द एकस्मिन् प्रदेशे भिन्नमपरस्मिन् प्रदेशे भिन्नमर्थं दधाति। भवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्थेषु भाषन्ते शव इति, दातिर्लवणार्थे प्राच्येषु दात्रमुदीच्येषु।[३]

अभिधेयार्थस्य मुख्यार्थस्य वा बोधने अभिधाशक्तिरेवोपयुक्तेति यास्कस्य विचार:।

## निरुक्ते प्रयुक्ता लक्षणा

मुख्यार्थमतिरिच्य मुख्यार्थभिन्नस्यापि प्रतिपादनं या वृत्ति: करोति, सा लक्षणा नाम। मुख्यार्थस्य बाधे सति मुख्यार्थयोगे सति रूढित: प्रसिद्धे: प्रयोजनाद्वा मुख्येनामुख्यार्थबोधिका आरोपिता क्रिया लक्षणा अभिधाया: पुच्छभूता।[४] निरुक्ते मुख्यार्थभिन्नस्यार्थप्रकाशने लक्षणा व्यावहारिकरूपेण स्वीकृता। पशुवाचक-गोशब्दस्य मुख्यार्थे भवति गोत्वगुणविशिष्ट: पशुविशेष:। निरुक्ते गोशब्दस्य प्रयोगो विविधार्थेषु प्राप्यते। गोभिन्नस्यार्थस्य प्रत्यायनं यथा—गोभि: सन्नद्धो असि नीलयस्वेति[५] रथस्तुतौ स्नावा च श्लेष्मा च। पुन: गोभि: सन्नद्धा पतति प्रसूतेति इषु-स्तुतौ। पूर्वोदाहरणे गोशब्दस्यार्थो भवति चर्म श्लेष्मा, द्वितीयोदाहरणेऽपि गोशब्दश्चर्मशब्दस्य वाचक:। 'गोभि: श्रीणीत मत्सरम्'[६] इत्यत्र गोशब्दो गोर्दुग्धस्य वाचक:—गोभि: मत्सरं सोमं श्रीणीत। अनेन प्रकारेण ज्याऽपि गौरुच्यते।

---

१. नि. १/६; २. तत्रैव—१/१।

३. तत्रैव—२/१।

४. मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपितक्रिया।। (का.प्र. २/९)

५. ऋ.सं. ६/४७/२६।

६. नि. २/२, ऋ.सं. १/४६/४।

निरुक्तेऽमुख्यार्थस्य कृते भक्तिशब्दस्य प्रयोगो लभ्यते। काव्यशास्त्रेऽपि भक्तिशब्दस्य प्रयोगो लक्षणायाः कृते प्राप्यते।[१] निरुक्ते प्राप्यते यदिन्द्रपानशब्दस्य मुख्यार्थोऽस्ति इन्द्रस्य पानार्थं प्रदत्तं पात्रम्, यत्र सोमस्य रक्षणं भवति। पात्रस्य बोधस्तु भक्त्या एव भवति। पुनः द्रविणोदाः सोमपात्राय कृतेऽपि इन्द्रपानशब्दः प्रयुक्तो भवति। यथा एतत्तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं तद् भवति यथा—वायव्यानीति सर्वेषां सोमपात्राणाम्।[२]

बहुभक्तिवादीनि ब्राह्मणवचनानि,[३] तत्रैव दुर्गवृत्तौ—भक्तिर्नाम गुणकल्पना, येन केनचिद्गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति—पृथिवी वैश्वानरः, संवत्सरो वैश्वानरः, ब्राह्मणो वैश्वानरः।

पादशब्दस्यार्थो भवति चरणम्। पद्-गतौ धातोर्निष्पन्नः पादशब्दश्चलनार्थे प्रयुक्तो भवति। पशुपादप्रकृतिः प्रभागपादः। प्रभागपादसामान्यादितराणि पदानि।[४] पशुपादप्रकृत्या दीनारादिप्रभागः, दीनारपादसामान्यादितराणि श्लोकपादादीनि कथ्यन्ते। सादृश्यं तु लक्षणया एव गृह्यते। अन्यार्थस्य या प्रतीतिस्तस्याः कारणं रूढिरेव। अत एवात्र रूढिमूला लक्षणा प्राप्यते।

अश्वशब्दस्य निर्वचने—अश्नुतेऽध्वानमिति[५], तत्र गोमनुष्याणामपि मार्गे व्याप्तिर्दृश्यते, परं घोटकार्थे रूढोऽश्वशब्दो वर्तते। लक्षणया एवाश्वशब्दः प्रसिद्धः। मार्गव्यापनशीलत्वेऽपि नान्ये पशवोऽश्वशब्देनाख्यायन्ते। अतो रूढिमूला-लक्षणाबीजं निरुक्त एव प्राप्यते।

मुख्यार्थेन सह लक्ष्यार्थस्य सम्बन्धविषये निरुक्तस्य विचारो वर्तते यत् सादृश्यसम्बन्धेन सादृश्येतरसम्बन्धेन च लक्ष्यार्थस्य बाधो जायते। सादृश्यसम्बन्धस्योदाहरणे पर्वशब्दो द्रष्टव्यः। पर्वशब्दस्यार्थो भवति मासस्य पक्षयोः सन्धिः। पर्वमासयोः सन्धिरूपेण रूढो वर्तते।[६] अमावास्या पूर्णिमा च पर्व कथ्येते, पुनः सन्धिसादृश्येन अङ्गुलीनां सन्धिरपि पर्व कथ्यते। अत्र सादृश्यसम्बन्धेन रूढिमूला लक्षणा वर्तते। सादृश्येतरसम्बन्धेन लक्ष्यार्थस्य प्रतीतौ गोशब्दो द्रष्टव्यः। गोशब्दस्यार्थो भवति पशुविशेषः, परं चर्मश्लेष्मा, ज्याप्रभृतयोऽपि अर्थाः

१. भाक्तमाहुस्तमन्ये। (ध्वन्या. १/२)
२. नि. ८/१;
३. तत्रैव—७/७।
४. तत्रैव—२/२;
५. तत्रैव—२/७।
६. तत्रैव—१/७।

सादृश्येतरसम्बन्धेन प्रसिद्धाः।[१] इत्थं लक्षणायाः शुद्धा गौणी चेति भेदद्वयं निरुक्ते सङ्केतितमस्ति। निश्चितमेव साहित्यशास्त्रे प्रवर्तितो लक्षणाभेदो निरुक्तेन प्रदर्शितो विद्यते।

गौणीलक्षणा गुणसादृश्येन प्रयुक्ता भवति। सिंह-व्याघ्र-श्वा-काकप्रभृतिशब्दा गुणसादृश्यबोधने निरता वर्तन्ते। निरुक्ते प्राप्यते—सिंहो व्याघ्र इति पूजायाम्, श्वा काक इति कुत्सायाम्[२]। यो हि पूज्यो भवति स उच्यते सिंहः, यथा—कामेश्वरसिंहः, सिंहो माणवकः, सिंहगुणस्तत्र कश्चिदस्ति शौर्यादिः, माणवकः शौर्यादिसम्पन्नः। अनेनैव नरव्याघ्रादयः शब्दा द्रष्टव्याः। यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति, स एवमुच्यते श्वाऽयमिति, काकोऽयमिति, धार्ष्ट्यादिदोषसमुच्चयेन इत्थं कथ्यते।[३]

उपर्युक्तोदाहरणे प्रयोजनवती लक्षणा। सिंहोऽयं, व्याघ्रोऽयं, काकोऽयमित्यादिवाक्येषु मुख्यार्थस्य प्रतीतिर्न जायते, मुख्यार्थसम्बद्धस्यान्यार्थस्य बोधो जायते। मुख्यार्थेन सह सम्बद्धे लक्ष्यार्थे सादृश्यसम्बन्धो दृश्यते। स्तुतिनिन्दाभूतोऽन्योऽर्थो निश्चितमेवात्र दृश्यते। अतोऽत्र गौणीप्रयोजनमूला लक्षणा।

**निरुक्ते व्यञ्जनायाः स्थितिः**

व्यञ्जना व्यङ्ग्यार्थस्य प्रकाशिका वृत्तिर्विद्यते। यया शक्त्या व्यङ्ग्यार्थस्य प्रकाशनं भवति सा शक्तिर्व्यञ्जना। मम्मटानुसारेण—विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः। सा वृत्तिर्व्यञ्जना नाम....[४]।।

निरुक्ते व्यञ्जनशब्दस्य प्रयोगो विशेषणरूपेण लभ्यते। वृत्रहा-पुरन्दरप्रभृतीनीन्द्रस्य नामानि व्यञ्जनमात्राणि विशेषणमात्राणि सन्ति। व्यञ्जनमात्रं तु तत् तस्याभिधानस्य भवति।[५] सिंहो व्याघ्र इति पूजायां श्वा काक इति[६] कुत्सायामित्यादिकथने स्तुतिनिन्दाभूतमन्यार्थं प्रयोजनमिति व्यञ्जनाशक्त्या प्रतीयते। व्यङ्ग्यार्थेन निरुक्तमस्ति परिचितम्—'उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासा'[६]। वाग् अर्थज्ञाय तन्वं शरीरं विसस्रे ज्ञानस्य प्रकाशं करोति ज्ञानसमूहं प्रकाशयतीति व्यङ्ग्यार्थावगतिः। ज्ञानाभिप्रायं प्रकटयति वाक् तस्मै विदुषे।

---

१. नि. २/२;
२. तत्रैव—३/४।
३. तत्रैव—३/४;
४. का.प्र.।
५. नि. ७/३;
६. तत्रैव—३/४।

यद्यपि निरुक्ते व्यञ्जनाया विवरणं नोपलभ्यते[१]; परं मन्त्रस्य व्याख्यायां व्यञ्जनावृत्तेः प्रकाशः प्राप्तो भवति।

निष्कर्षतः कथनमिदं सङ्गतं भविष्यति यद् निरुक्ते अभिधा-लक्षणा-व्यञ्जनादि-बीजरूपं दृष्टिपथमायाति। एतासामभिधादिवृत्तीनां विकासः कालान्तरे जातः। काव्यशास्त्रचिन्तकैर्याः वृत्तयो विश्लेषितास्तासां मूलदर्शनं निरुक्ते प्राप्यत इति।



१. ऋ. १०/७१/४; नि. १/६।

# वेदाङ्गेषु च्छन्दः

**डॉ. ददन-उपाध्यायः**
सहायकसम्पादकः, प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



**वेदशब्दार्थः**

वेदानामङ्गानि वेदाङ्गानि, तेषु च्छन्दःशास्त्रस्य किं स्थानं, किं नाम च्छन्द इति प्रतिपिपादयिषया तत्र प्रथमं वेदशब्दार्थः पर्यालोच्यते। वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदा इति बहवृच्प्रातिशाख्यम्। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं वेदयति स वेद इति भाष्यभूमिकायां स आह। प्रमाणमपि तत्रैवोक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता[१]।।

श्रुतिपरम्परया प्राप्तत्वाच्छ्रुतिरपि कथ्यते। आम्नायः, आगमः, श्रुतिः, वेद इति सर्वे शब्दाः पर्यायभूताः।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते। या खलु रचना पद्यमयी, सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना, सा सामेति कथ्यते। तदुक्तं महामुनिना जैमिनिना—

'तेषामृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुःशब्दः' इति। (जै.मी.सू.२।१।३५-३७)

यास्कस्तु—'ता ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्चेति भेदात् त्रिविधाः। ऋक्शब्दोऽत्र मन्त्रवचनः। यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः। यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः, यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति।

---

१. ऋग्वेदभाष्यभूमिकायाम्, पृ. १७०।

अत यत्र कुत्रापि प्राचीनग्रन्थेषु वेदार्थे 'त्रयी' इति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम्।

यत्तु ऋग्यजुःसामाख्यास्त्रय एव वेदाः पूर्वमासन्। तद्यथा—

'अग्ने ऋचो वायोर्यजूंषि सामादित्यात्'। (छा.ब्रा. ६।१७)

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।

दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्।। (मनु. १।१३)

'अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽथर्ववेदनामोल्लेखदर्शनात्। भगवता पतञ्जलिनापि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम्। छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिक इति त्रित्वमेवोक्तम्, एवं परत्रापि। जैमिनिस्तु मन्त्राणां विप्रकारतामेव लक्षितवान्, न वेदसंख्यां व्यवस्थापितवान्। अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः। अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम्।

### वेदाङ्गानि

वेदानामङ्गानि वेदाङ्गानि। अङ्ग्यन्ते ज्ञायन्तेऽमीभिरित्यङ्गान्यनया व्युत्पत्त्याऽङ्गशब्दस्योपकारक इत्यर्थोऽस्ति। येन कस्यापि पदार्थस्य पारमार्थिकस्वरूपनिर्णयो भवति, तदेवाङ्गमिति कथ्यते। वेदस्तु भाषाभावयोरुभयोरपि दृष्ट्या ह्यत्यन्तं गहनं गभीरञ्चापौरुषेयं महावाक्यमस्ति। अत एवास्य वेदस्य स्वरूपनिर्णये यान्यतीवोपकारकाणि नियमनिर्देशकानि शास्त्राणि, तानि वेदाङ्गानीत्युच्यन्ते।

वेदानां स्वरूपसंरक्षणार्थं वेदाङ्गानां सूत्रपातः। तेषां वेदाङ्गानां सूत्रपातेन वैदिकविकासक्रमे नवीनस्य युगस्योदयो जातः। कालो ह्ययमुत्तरवैदिकयुगेन व्यवह्रियते। उत्तरवैदिकयुग एव वैदिकरीतिव्यवहारयोः शिक्षादीक्षयोराचारविचारयोश्च प्रतिष्ठा जाता। ब्राह्मणग्रन्थेष्वपि शिक्षासम्बद्धा नियमा यत्र तत्र दरीदृश्यन्ते। षट्संख्याकानि वेदाङ्गानि सन्ति, येषां प्रमुखमुद्गमस्थानं वेद एव। वेदानां स्वरूपमहत्त्वयोर्निरूपणमेव वेदाङ्गानां चरमं खलूद्देश्यम्। वेदानां स्वरूपसंरक्षणपूर्वकं वेदार्थज्ञानावबोधनञ्च वेदाङ्गानां ह्यन्यतमं प्रयोजनम्।

**वेदस्य षडङ्गानि**

यथा कस्यचित्पुरुषस्य हस्तपादनेत्रश्रोत्रनासिकादीन्यङ्गानि तस्य सहायकानि कार्यसाधकानि पूर्णाङ्गताप्राप्तये भवन्ति, तथैव वेदपुरुषस्य शिक्षाकल्पादीनि षडङ्गानि तस्य साधकानि हीनाङ्गतापूर्त्तये भवन्ति। यथैकेनापि हीनाङ्गेन पुरुषस्य काणत्व-कुब्जत्व-खञ्जत्व-व्यवहारस्तथैव वेदपुरुषस्यापि भविष्यति। तस्माद् वेदस्य पूर्णताप्राप्तये वेदाङ्गानामावश्यकता। अत एव भगवता पतञ्जलिना षडङ्गवेदाध्ययनाय शिक्षितम्। तद्यथा—

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'[१] इति। एषामङ्गानां विभागस्तु महामुनिना पाणिनिना सुष्ठु कृतः। यथा—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।। (पा.शि. ४१-४२)

वेदाङ्गानां समुल्लेखो गोपथब्राह्मणे[२] बौधायनधर्मसूत्रे[३] गौतमधर्मसूत्रे[४] रामायणप्रभृतिषु[५] चात्यन्तप्राचीनार्वाचीनेषु ग्रन्थेषु समुपलभ्यते। तानीमानि वेदाङ्गानि षडेव। तानि च सन्ति—शिक्षा, कल्पः, व्याकरणम्, निरुक्तः, ज्यौतिषम्, छन्दश्च। यथोक्तं कौटिल्यस्यार्थशास्त्रे—शिक्षा कल्पो व्याकरणं निरुक्तश्छन्दोविचिति-ज्यौतिषमिति चाङ्गानि[६]।

**षडङ्गानां शास्त्रत्वसिद्धिः**

शिष्यतेऽनेनेति शास्त्रमित्यनया व्युत्पत्त्या शास्धातोः ष्ट्रन्प्रत्यये कृते निष्पन्नः शास्त्रशब्द आज्ञासमादेश-नियम-विधि-वेदविधि-धार्मिकग्रन्थादिरूपमर्थं प्रतिपादयति। **'निदेशग्रन्थयोः शास्त्रम्'**[७] इत्युक्त्वाऽमरकोशोऽपि नियमप्रतिपादकानां ग्रन्थानां

---

१. महाभाष्ये पस्पशाह्निके; २. गो. ब्रा. १।२७।
३. बौधा. धर्म. २।१४२; ४. गौ. धर्म. १५।२८।
५. रामा. बाल. ७।१५; ६. कौ. अ. १।३।
७. अ. को. ३।३।१७९।

शास्त्रत्वं साधयति। पस्पशाह्निके महाभाष्ये शब्दप्रयोगविषयोदाहरणप्रसङ्गे शास्त्राणां नामग्रहणं कृतम्। तथा हि तत्रत्यं भाष्यम्—

'महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा नवधाऽऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः'[1]।

शास्त्रस्य किं लक्षणमिति जिज्ञासायामुच्यते—त्रिधा हि शास्त्रशरीरम्—उद्देशो लक्षणं परीक्षा च। उद्देशो नाम नाम्ना वस्तुसङ्कीर्तनम्। व्याख्याग्रन्थः सर्वत्र परीक्षापरः। लक्ष्यते (लक्ष्यपदार्थ इतरव्यावृत्ततया) ज्ञायतेऽनेनेति लक्षणम्। लक्षणमितरभेदकम्, इष्टं तावद्भेदकञ्च। लक्षणस्य लक्षणं तावत् तर्कसङ्ग्रहव्याख्यायामपि—लक्षणत्वमसाधारणधर्मत्वम्। केवलान्वयिभिन्नत्वे सति अव्याप्त्यतिव्याप्त्यसम्भवदोषत्रयशून्यत्वे सति लक्ष्यतावच्छेदकसमनियतत्वं वा[2]। लक्षितस्य लक्षणं सम्भवति न वेति विचारः परीक्षा। परीक्षाकरणेन लक्षणे दोषपरिहारो भवति।

निदेशग्रन्थयोः शास्त्रमित्यमरवचनाद् ग्रन्थशब्दः शास्त्रस्य पर्यायवाचीति सिद्ध्यति। अत एव पञ्चाङ्गकं वाक्यं ग्रन्थ इति शास्त्रलक्षणं लक्षितं विद्वद्भिः। तानि पञ्चाङ्गानि सन्ति—विषयः प्रतिपाद्यः। विशयः संशयः। पूर्वपक्षः। उत्तरपक्षः। निर्णयश्च। तदुक्तम्—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।।

(काव्यप्रकाशस्य श्रीविश्वेश्वरकृतटीकातः समुद्धृतः, पृ. ४)

महाभारतादौ पञ्चाङ्गानां कृष्णार्जुनसंवादादौ सत्त्वान्नाव्याप्तिः। यत्रापि कानिचिदेवाङ्गानि तिष्ठन्ति तत्रान्यान्यपि कल्पनीयानि। तथा च वैज्ञानिकसम्बन्धेन तत्र तद्वत्त्वम्। यद्वा सम्बन्धप्रयोजनज्ञानाहितशुश्रूषाजन्यश्रुतिविषयशब्दसन्दर्भो ग्रन्थः। सम्बन्धो वाच्यवाचकरूपः। श्रोतुमिच्छा शुश्रूषा। 'शुश्रूषा श्रोतुमिच्छायां परिचर्याप्रदानयो'रिति विश्वः। सन्दर्भो रचनासमूहः। यथोक्तम्—

१. महाभाष्ये, पृ. ३४।
२. तर्कसङ्ग्रहे, न्यायबोधिन्याम्, पृ. १२।

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।। इति।
(काव्यप्रकाशस्य विश्वेश्वरकृतटीकातः समुद्धृतः, पृ. ९)

शासनाप्राधान्यात् शब्दप्राधान्यात् शास्त्रस्य शास्त्रता, शब्दप्राधान्यात् प्रधानत्वेन श्रुतिस्मृत्योः शास्त्रपदप्रयोगः। यथा प्रभोराज्ञा न विचार्यते, तथाग्निष्टोमादिष्वपि कथमस्मात्, कर्मण इदं भविष्यतीत्यनालोच्यैव प्रवृत्तिरिति शब्दप्राधान्यं श्रुतिस्मृत्योः। अत एव तत्तच्छासनमात्रप्रधानतया तत्र शास्त्रपदप्रयोगः।

**शास्त्रस्य भेदाः**

तच्च शास्त्रं द्विविधम्—अपौरुषेयं पौरुषेयञ्च। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मणे। मन्त्रो विवृतक्रियातन्त्रः। मन्त्राणां स्तुतिनिन्दाव्याख्यानविनियोगादि-ग्रन्थो ब्राह्मणम्। ऋचो यजूंषि सामानि चाथर्वाणि इमे चत्वारो वेदाः। इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चत्वारश्चोपवेदाः। षौरुषेयं शास्त्रं तु पुराणम्, आन्वीक्षिकी मीमांसा स्मृतितन्त्रमिति चत्वारि। तानीमानि चतुर्दशविद्यास्थानानि कथ्यन्ते। तदुक्तम्—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश[1]।।

यथा वा वायुपुराणे—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश[2]।।

एतानि च तानि विद्यास्थानानि सम्पूर्णमपि त्रैलोक्यं व्यासज्य वर्तन्ते। यदाहुः —

विद्यास्थानानां गन्तुमन्तं न शक्तो
जीवेद्वर्षाणां योऽपि साग्रं सहस्रम्।
तस्मात्सङ्क्षेपादर्थसन्दोह उक्तो
व्यासः सन्त्यक्तो ग्रन्थभीरुप्रियार्थम्[3]।।

---

१. या. स्मृ. १।३।
२. वा. पु. ६१।७८।
३. का. मी., अ. २, पृ. ९।

ज्ञानार्थकाद् विद्-धातोः क्यप्टाबिति प्रत्ययद्वये निष्पद्यते विद्याशब्दस्तेन 'वेद्यते ज्ञायते तत्त्वं यया सा विद्या' इति फलितार्थः। ज्ञाते तत्त्वे नाज्ञानकृतबन्धः स्थातुमर्हतीति 'सा विद्या या विमुक्तये' इति तत्त्वदृशां निर्वचनमपि सङ्गच्छते। यथाहुः कठोपनिषद्व्याख्यायां भगवत्पादाः श्रीशङ्कराचार्याः—

या चाविद्या प्रेयोविषया विद्येति च श्रेयोविषया[१] इति। यायावरीयो राजशेखरो धर्मार्थयोर्वेदनाद् विद्याया विद्यात्वं मन्यते[२]। हितोपदेशस्य कर्ता नारायणभट्टो विद्यां सर्वस्य सुखस्य हेतुं स्वीकरोति। यथा—

विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततः सुखम्।।

**विद्याभेदः**

प्रसङ्गभेदाद् विद्याया नैके भेदा विविधैराचार्यैः स्वीकृताः। यथाह भगवान् मनुः—

त्रैविद्येभ्यस्त्रयीं विद्याद् दण्डनीतिञ्च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भश्च लोकतः[३]।।

उपनिषत्सु चान्यत्तात्त्विकं भेदद्वयमुपलभ्यते विद्यायाः। यद्यथा मुण्डकश्रुतौ—'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति। अथ परा यया तदक्षरमधिगम्यते'[४]।

औशनसास्तु 'दण्डनीतिरेकैव विद्या' इति मन्यन्ते। दण्डभयाद्धि कृत्स्नो लोकः स्वेषु स्वेषु कार्येषु प्रवृत्तो भवति। 'वार्ता दण्डनीतिर्द्वे विद्ये' इति बार्हस्पत्यम्। वार्ताविषयावृतिर्विनयग्रहणार्थं भवति, दण्डनीतिस्तु लोकयात्रायाः स्थितिहेतुः। 'त्रयीवार्तादण्डनीतयस्तिस्रो विद्या' इति मानवाः। त्रयी हि वार्तादण्डनीत्योरुपदेष्ट्री। कौटिल्येन आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्याः कथिताः। आन्वीक्षिक्या हि विवेचिता त्रयी वार्तादण्डनीत्योः प्रभवति।

---

१. तत्रैव, अ. २, पृ. १०।
२. कठो. २।२।४ इत्यत्र शाङ्करभाष्यम्।
३. म. स्मृ. ७।४३।
४. मुण्डको. १।१।४-५।

'पञ्चमी साहित्यविद्या' इति यायावरीयः। सा हि चतसृणामपि विद्यानां निस्यन्दभूता। महर्षियाज्ञवल्क्यश्चतुर्दशविद्यास्थानानि मन्यते—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश[१]।।

एतदेवोक्तं वायुपुराणेऽपि—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश[२]।।

यायावरीयो[३] राजशेखरः सकलविद्यास्थानैकायतनं काव्यं पञ्चदशविद्यास्थानं स्वीकरोति, गद्यपद्यमयत्वात्, कविधर्मत्वात्, हितोपदेशकत्वाच्च। काव्यानि शास्त्राण्येवानुधावन्ति। वायुपुराण एव चतुर्दशसु विद्यासु आयुर्वेदो धनुर्वेदो गान्धर्वश्चार्थशास्त्रकमिति चतुःसंख्यायोजनया आसामष्टादशत्वमप्याहुः। तद्यथा—

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृताः[४]।।

नलस्य विद्याशालित्वं वर्णयन् महाकविः श्रीहर्षोऽपि नैषधीयचरितेऽष्टादशानां विद्यानां चर्चां कृतवान्[५]।

### छन्दःशास्त्रस्य शास्त्रत्वम्

शास्त्रं हि नाम शासनकरणम्। शासनञ्चाधिगतार्थज्ञापनम्। ज्ञानविषयत्वाभाववदर्थबोधनम्। ज्ञानविषयतायाः केवलान्वयित्वेन तत्सामान्याभावस्यासम्भवेऽपि स्वानुपजीविप्रमाणाप्रयोज्यज्ञानाविषयत्वसामान्याभाववत्सकलपुमर्थसाधनार्थविषयकज्ञानसाधनत्वं तदिति ध्येयम्। स्वानुपजीवीनि प्रमाणानि न्यायवेदान्तप्रभृतीनि तत्प्रयोज्यज्ञानविषयता द्रव्यगुणादिषु ब्रह्ममायादिषु च तत्सामान्याभाववन्ति सकलपुमर्थसाधनानि अन्यानि चाभिधेयानि। छन्दोऽपि शास्त्रम्, वेदाङ्गत्वात्।

---

१. याज्ञ. स्मृ. १।३; २. वा. पु. ६१।७८।

३. शश्वद्गमनशीले यायावरः, पुनः पुनरतिशयेन याति, तच्छीलः (शब्दार्थचिन्तामणौ, भाग-४, पृ. २७)।

४. वा.पु. ६१।७९; ५. ह. च. १।५।

तत्र वर्णानां स्थान-करण-प्रयत्नादिभिर्निष्पत्तिनिर्णयिनी शिक्षा आपिशलीयादिका। नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं कल्पः, सा च यजुर्विद्या। शब्दानामन्वाख्यानं व्याकरणम्। निर्वचनं निरुक्तम्। छन्दसां प्रतिपादयित्री छन्दोविचितिः। ग्रहगणितं ज्यौतिषम्।

सर्वाङ्गपूर्णस्य मानवस्य कृते यथा सर्वेषामङ्गानां महत्त्वं निर्धार्यते, एकस्यापि चाङ्गस्य हीनत्वेन काणत्व-कुब्जत्व-खञ्जत्वव्यवहारः सूपपद्यते, तथैव काव्यमयशरीरस्य वेदपुरुषस्य षडङ्गैः पूर्णत्वप्राप्तिः। उपर्युक्तेषु वेदाङ्गेषु वैदिकच्छन्दोमीमांसकं छन्दःशास्त्रं वेदस्य पादस्थानीयम्। हस्तरूपं कल्पशास्त्रं वैदिककर्मकाण्डयज्ञानुष्ठानविधिप्रत्यायकम्। चक्षुःस्थानीयं ज्यौतिषशास्त्रं यज्ञानुष्ठानार्थमुचितकालनिर्णायकम्। श्रोत्ररूपं निरुक्तं वैदिकानां शब्दानां विशुद्धिव्युत्पत्तिनिर्वचनकारकम्। मुखस्थानीयं व्याकरणं शब्दज्ञानप्रक्रियावबोधकम्। शिक्षाशास्त्रं तु नासिकास्थानकम्। षडङ्गेनानेन वेदपुरुषः पूर्णाङ्गो भवति। एतदेवाह महामुनिः पाणिनिः स्वकीये शिक्षाग्रन्थे[१]।

एतेन तेषामङ्गानां वेदोपकारकत्वं सूपपादितं भवति। तत्रापि पादस्थानीयं छन्दःशास्त्रं विना वेदपुरुषः पदमेकमपि गन्तुं समर्थो न भविष्यति। तस्मात्तस्याङ्गत्वं न व्याहन्तुं शक्यते। मन्त्रः स्वरतो वर्णतो वा हीनः सन् वाग्वज्रो भूत्वा प्रयोगकर्त्तारं हिनस्ति, तस्मादध्येयं षड्वेदाङ्गम्। यथोक्तं महर्षिणा पाणिनिना—

दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्[२]।।

चतुरोऽर्थान् प्रतिपत्तुं शास्त्रमधीयते विद्वद्भिः। ते चार्थाः सन्ति— अविज्ञातज्ञापनम्, हेयार्थनिरसनम्, अशेषोद्रेकः, इतरवेदोपकारश्चेति। तत्रेदं छन्दोविज्ञानशास्त्रं सर्वान् अर्थान् संसाधयितुमीष्टे।

तत्र च्छन्दःशास्त्रेणाविज्ञातोऽर्थो विज्ञायते। यथा ऋङ्मन्त्रादिपाठाद् वैदिकानां काव्यादिपाठाद् लौकिकानां यावत्प्रयुक्तच्छन्दसां स्वरूपस्य प्रतिपत्तिः छन्दःशास्त्रेण

१. पा. शि. ४१-४२; २. तत्रैव–५२।

सम्यग्रूपेण भवति। वेदे प्रयुक्तानां लोके चाभिहितानां छन्दसां स्वरूपं ज्ञायतेऽनेन शास्त्रेण।

छन्दःशास्त्रस्य वेदोपकारकत्वं सम्भवति। अस्ति यज्ञो वेदः, योऽन्तरेण च्छन्दोविज्ञानमपर्याप्तः स्यात्। तथा हि गवामयने पूर्वस्मिन् पक्षसि एकचत्वारिंशदधिकशतसंख्याकेषु विशिष्टस्वरसामाभिधानेष्वहःसु ब्रह्मसाम्नोऽभिवर्तस्यैकत्वेऽपि प्रगाथाः प्रत्यहं भेदेन प्रयुज्यन्ते। तत्र के ते स्तोत्रीयाः प्रगाथाः? इत्याकाङ्क्षायाम्—'पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते। तेष्वाप्तेषु छन्दसी संयुज्यैतव्यम्। चतुरुत्तरैरेव छन्दोभिरेतव्यम्। तदाहुरनवक्लृप्तानि वा एतानि छन्दांसि माध्यन्दिने, बृहत्या चैव त्रिष्टुभा चैतव्यम्' इत्येवं ताण्डिश्रुतौ दाशतयीसमाम्नातेनाष्टाविंशतिशतप्रमितप्रगाथतृचसमुदायेन तावदहःसु प्रगाथलाभे तदतिरिक्तेषु त्रयोदशस्वहःसु प्रगाथलाभार्थं त्रयः पक्षा विधीयन्ते। ते चैते प्रगाथा न चान्तरेण शास्त्रमध्यवसितुं शक्याः, नापि वा तमन्तरेण प्रगाथप्रयोगं ज्योतिष्टोमः पर्याप्नोति, एवमितरत्राप्येकान्ततः छन्दोविज्ञानमपेक्ष्यते प्रतियज्ञम्। अत एव च 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते वा म्रियते पापीयान् भवति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्'[1] इति श्रूयते। स्मृतावपि स्मर्यते—

> मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान् ऋषीन्।
> कृत्तद्धितादींश्चाज्ञात्वा यजन्तो यागकण्टकाः।।
>
> अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च।
> योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः।।
>
> ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
> अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते।। इति।

भगवान् कात्यायनोऽप्याह—

छन्दांसि गायत्र्यादीनि एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजति याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति। अथान्तरा श्वगर्तं वापद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्—अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते[2] इति।

---

१. छा. ब्रा. ३।७।५।
२. कात्यायनश्रौतसूत्रे, ४.६.६।

तस्मात् सन्त्येव भूयांसि प्रयोजनानि च्छन्दःशास्त्रस्य, तद्विज्ञानमन्तरा चायं यज्ञवेदो निर्वीर्यो यातयामो भवति। यातयामश्च यातो गतो याम उपभोगकालो यस्य। परिभुक्तोज्झित इत्यर्थः। यथोक्तम्—यातयामं गतरसं पूतिपर्युसितञ्च यत्' इति। किन्तु मन्त्रा अयातयामा भवन्ति। यथा—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हरिरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः।।

(श.चि., भाग-४, पृ. २२)

एतेन च्छन्दःशास्त्रस्य वेदाङ्गता अक्षुण्णत्वं भजते, यज्ञवेदोपकारकत्वादिति।



# वेदतत्त्वमीमांसा

**डॉ. पतञ्जलिमिश्रः**
अंशकालिक-प्राध्यापकः
संस्कृतविभागे
महात्मगान्धीकाशीविद्यापीठस्य
वाराणसी



सनातनधर्मभारतीयसंस्कृतिस्तम्भभूतो विश्ववाङ्मये सृष्टौ प्रथमवाणीरूपः प्राचीनतमग्रन्थो वेद इति, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै'[१] इति श्रुतिनिदर्शनात्। ऐतिहासिकदृष्ट्याऽत्र पाश्चात्त्यविचारका नानेकमताः।

ज्ञानार्थक-विद्धातोर्घञि प्रत्यये कृते आद्युदात्तपवित्रज्ञानपरस्तथा चाऽन्तोदात्त-वेदशब्दः कुशमुष्टिवाचक इति। ज्ञानलाभसत्ताविचाराद्यर्थेषु विद्-विद्लृ-धातुप्रयोगः पाणिनिव्याकरणे समुपलभ्यते। अत एव विद्वरेण्यैर्वेदनिर्वचने विविधदृष्ट्या बहुविवेचितमस्ति। तद्यथाऽऽह ऋक्प्रातिशाख्ये वर्गद्वयवृत्तौ विष्णुमित्रः—'विद्यन्ते ज्ञायन्ते लभ्यन्ते एभिः धर्मादिपुरुषार्था इति वेदाः।'

आचार्यसायणेनेष्टप्राप्त्यनिष्टनिवारणायाऽलौकिकोपायनिदर्शको वेद इत्युक्तम्—'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति'[२]। अर्थाद् ज्योतिष्टोमयागादिष्टप्राप्तेः कलञ्जभक्षणत्यागादनिष्टनिवृत्तेश्च प्रत्यक्षानुमानोपमानादिरर्थावबोधो नैव जायते ऋते वेदात्। अत्रोच्यते—

> प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
> एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता[३]।।

आचार्यलौगाक्षिभास्करादयो मीमांसका वेदस्यापौरुषेयत्वं स्वीकुर्वन्ति—'अपौरुषेयं वाक्यं वेदः'[४] इति वचनात्। 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'

---

१. श्वेताश्वतरोपनिषद्-६/१८;  २. तै.सं.भा.भू. सायणः।
३. तै.सं.भा.भू.;  ४. अर्थसङ्ग्रहः।

इत्यापस्तम्बः[१]। दार्शनिकयाज्ञिकोभयसमन्वयपुरस्सरं श्रीकरपात्रस्वामिवर्या विलक्षणं वेदलक्षणं प्रतिपादयन्ति। तद्यथा—'शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयानतिरिक्तार्थको यो यस्तदन्यत्वे सति आमुष्मिकसुखजनकोच्चारणकत्वे सति जन्यज्ञानाजन्यो यः प्रमाणशब्दस्तत्त्वं वेदत्वम्'[२] इति।

श्रुतित्रयीच्छन्दोनिगमाऽऽम्नायस्वाध्यायादयो बहवो वेदपर्यायाः।

सृष्ट्या सहैव परमेश्वरस्य सहजनिःश्वासादाविर्भूता वेदा इत्युक्तं बृहदारण्यकोपनिषदि—'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः'[३]। एतत्कथनस्य सार्थक्यं सायणाचार्येणापि स्वोपज्ञवेदभाष्ये प्रोक्तम्—

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम्।।

यास्कमतानुसारं—'नियतानुपूर्व्या नियतवाचोयुक्तयः' इति वेदो नित्यः, तस्यानुक्रमः नित्यः, तस्य समुच्चारणविधिरपि नित्यः, वेदार्थोऽपि नित्यः। ब्रह्माग्निमत्स्यहरिवंशपुराणादिषु अनादिनित्या वाणी यज्ञनिष्पत्त्यर्थं परमेश्वरमुखाद् ऋग्यजुःसामरूपेणाविर्भूता[४]।

ओमित्याद्यक्षरस्य अ उ म् इति व्यस्तसूक्ष्मनादाद् ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः समुद्भूताः[५]। श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन प्रणवेन वेदोत्पत्तिर्जातेति प्रोक्तम्। यथा—

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु[६]।।
वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव[७]।।

---

१. आपस्तम्ब-श्रौत., अ. २४; २. वेदार्थपारिजाते।
३. बृहदारण्यकोपनिषद्-२/४/१०।
४. ब्रह्मपु.-१/४९, अग्निपु.-१०/३, मत्स्यपु.-१४२/२८, हरिवंशपु.-१/१/३९।
५. शिवपुराणे-७/६/२७; ६. श्रीमद्भगवद्गीतायाम्-७/८।
७. रघुवंशे-१/११।

इत्योङ्कारेण वेदानामाविर्भाव: कविताकामिनीविलासेन महाकविकालिदासेनाप्यनुमोदित:। कणादन्यायनयेऽपि शब्दसमवायिकारणत्वादाकाशात् शब्दरूपा वेदा: प्रकटिता:[१]।

सर्वप्रथमं वेधा तपश्चचार, तदनन्तरमीश्वरेण तस्मिन् साङ्गोपाङ्गवेदानां सन्निवेषानन्तरं तस्माद् वेदा ज़ाता:। तद्यथा—

तपश्चचार प्रथमममराणां पितामह:।
आविर्भूतास्ततो वेदा: साङ्गोपाङ्गपदक्रमा:।।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनि:सृता:[२]।।

वेदा ब्रह्मरूपेण सनातनस्वयम्भूरूपेण स्वीकृता: सन्ति मनुस्मृतौ। यथा—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजु:सामलक्षणम्[३]।।

'ब्रह्म स्वयम्भू:' इति तैत्तिरीयारण्यके प्रतिपादितमस्ति।[४] नारदपुराणवचनात्—'वेदो नारायण: साक्षात्' इति[५] वचनाद् वेदा: साक्षान्नारायणरूपेण स्वीकृता:। एवमेव 'वेदो नारायण: साक्षात् स्वयम्भूरिति शुश्रुम:'[६] इति श्रीमद्भागवतेऽप्युररीकृतम्। सच्चिदानन्दरूपत्वाद् वेदस्त्रिकालाबाध्यास्तित्वसम्पन्न: सत्यसनातन आत्यन्तिकसुखस्वरूप: चित्=ज्ञानसम्पन्नो विद्यते। 'विज्ञानमानन्दं ब्रह्म' इति बृहदारण्यकोपनिषन्निदर्शनात्[७]।

सत्यसनातनवेदस्य साम्प्रतं बहुशाखा: लुप्ता:, तर्हि कथं वेदानां सनातनत्वमिति जिज्ञासायां सूक्ष्मरूपेण तस्यास्तित्वं तिष्ठति नु, कालान्तरं समनुप्राप्य लुप्तानां श्रुतीनामपि ऋषिभि: समाधौ साक्षात्काराद् आद्यसृष्टिमारभ्याद्यपर्यन्तं ब्रह्मादिभि: सर्वा सत्यविद्या श्रूयते सा श्रुतिरित्यादिश्रुतेर्वेदानां नित्यत्वं सिद्ध्यति। तथा च 'नैव वेदा: प्रलीयन्ते महाप्रलयेऽपि' इति मेधातिथिवचनादपि वेदानां नित्यत्वं सिद्ध्यति।

---

१. अन्नम्भट्टस्य तर्कसङ्ग्रहे प्रत्यक्षखण्डे; २. मत्स्यपु. ३।२,४।
३. मनु. १।२३; ४. तैत्ति. आ. २।९।
५. ना. पु. ४।१७; ६. श्रीमद्भागवते–६।१।४०।
७. बृह. उ. ३।९।२८।

विविधपुराणेषु तत्तत्प्रतिपाद्यदेवेभ्यो वेदप्रसूतिर्निर्दिष्टाऽस्ति।

ब्रह्मोद्भवं कर्म वेदा अक्षरसमुद्भवाः।[१]

ॐ तत्सदिति पदैर्व्यपदिष्टा वेदा ब्रह्मणा सञ्जाता[२] इति श्रीमद्भगवद्गीतायां सुस्पष्टमेतद्ववचनं समर्थितम्।

स्वतःप्रमाणभूतो वेदः सर्वप्रथममेक एवासीत्, 'सर्वे वेदाः सर्वे घोषा एक एव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इति श्रुतेः।[३]

मत्स्यपुराणे द्वापरादियुगेषु व्यासेन एकस्य वेदस्य चतुर्धा विभागः कृतः—

'वेदश्चैकः चतुर्धा तु व्यस्यते द्वापरादिषु'[४]।

'एको वेदश्चतुर्धा तु यैः कृतो द्वापरादिषु'[५]।

इति विष्णुपुराणे प्रोक्तम्।

'त्रयी वै विद्या ऋचो यजूंषि सामानि'[६] इति शतपथब्राह्मणे वेदत्रयं स्वीकृतम्।

'ऋचो यजूंषि सामानि सामानि अङ्गानि च श्रुतिरिति'[७] ब्रह्माण्डपुराणेऽपि त्रयो वेदाः सङ्केतिताः।

काठकब्राह्मणे—'चत्वारि शृङ्गा' इति वेदा वा एतावदुक्ताः। कठब्राह्मणे—'चत्वारो हीमे वेदाः' इति श्रुत्या वेदचतुष्टयं स्वीकृतम्। महाभारते सनत्सुजात-पर्वणि महर्षिणा सनत्सुजातेन एको वेदः, द्वौ वेदौ, त्रयो वेदाः, ऋग्यजुः-सामाथर्वण इति चत्वारो वेदास्तथा चेतिहासः पञ्चमो वेदस्तथा चानन्ता वेदा इति निर्दिष्टम्। तद्यथा—

आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्चापरे तथा।।

द्विवेदाश्चैकवेदाश्चानृचश्च तथापरे।
एकवेदस्य चाज्ञानाद् वेदास्ते बहवोऽभवन्[८]।।

---

१. श्रीमद्भगवद्गीता–३।१५ (कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्)।
२. श्रीमद्भगवद्गीता–१७।२३ (ॐ तत्सदिति निर्देशो ब्राह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा।।)
३. ऐ. ब्रा. २।१०;
४. मत्स्यपु. १४४।१।
५. विष्णुपु. १।३।१९-२०;
६. श. ब्रा., ४।६।७११।
७. ब्रह्माण्डपु., १।३२।३६;
८. सन. सु. २।३६, ५।३७।

श्रीमद्भागवतमहापुराणानुमोदितं विवरणमग्रे प्रस्तूयते।

अस्मिन् वैवस्वतमन्वन्तरे ब्रह्मशिवलोकपालानुग्रहाकाङ्क्षया अखिलब्रह्माण्डाधारोऽनन्तानन्तगुणगणनिलयो भगवान्नारायणः धर्मसंरक्षणार्थमल्पमेधाल्पायुर्जनेषु वेदवाणीनिक्षेपणार्थं महर्षिपराशरसकाशात् सत्यवतीकुक्षादांशिककलया व्यासरूपेणावतीर्य पृथग् जातीयमणिगणा इव मन्त्रसंहिताप्रकरणानुसारं मन्त्रसङ्कलनपुरस्सरम् ऋग्यजुःसामाथर्वरूपेण विभज्य क्रमशः पैलाय ऋग्वेदं वैशम्पायनाय यजुर्वेदं जैमिनये साम सुमन्तवे अथर्ववेदमददात्। अत्रोच्यते—

अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये।।
पराशरात् सत्यवत्यामंशांशकलया विभुः।
अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम्।।
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव।।
तासां स चतुरः शिष्यानुपाहूय महामतिः।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः।।
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम्।।
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्।
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे।।
पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम्[१]।।

राजशेखरमते पौरुषेयापौरुषेयभेदेन शास्त्रं द्विविधम्। यथोक्तम्—

'तच्च द्विधा—अपौरुषेयं पौरुषेयञ्च। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मणे। विवृतक्रियातन्त्रा मन्त्राः। मन्त्राणां स्तुतिनिन्दाव्याख्यानविनियोगग्रन्थो ब्राह्मणम्। ऋग्यजुःसामवेदास्त्रयी, अथर्वणश्च तुरीयः। तत्रार्थव्यवस्थितपादा ऋचः। ताः

१. श्रीमद्भागवते १२।६।४८-५४।

सगीतयः सामानि। अच्छन्दांस्यगीतानि यजूंषि। ऋचो यजूंषि सामानि चाथर्वणं त इमे चत्वारो वेदाः। इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः। वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो गेयवेद इति द्रौहिणिः'।[१]

'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि'[२] इत्यनुसारं मन्त्रब्राह्मणमिति भागद्वयं कृतं वेदस्य। तत्र मन्त्राणां सङ्कलनं वेदसंहितासु विद्यते। यागादिषु मन्त्राः प्रयुज्यन्ते। यास्काचार्येण मननार्थक-मन्धातोर्मन्त्रशब्दस्य निष्पत्तिः स्वीकृताऽस्ति, 'मननात् मन्त्राः' इति निदर्शनात्। नामैकदेशग्रहणेन नामग्रहणमिति नयेन मतमभिमतवस्तु यो ददाति स मन्त्रः। मीमांसकाचार्यो जैमिनिर्मन्त्रलक्षणे आह— 'तच्चोदकेषु मन्त्राख्या इति'। याज्ञिकानामनुष्ठानस्मारकं दोषरहितं लक्ष्म मन्त्र इति। यथोक्तम्—

याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम्।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते[३]।।

लौगाक्षिभास्करानुसारमनुष्ठानसम्बद्धद्रव्यदेवतार्थस्मारका मन्त्राः। यथोक्तम्—

'प्रयोगसमवेतार्थस्मारका मन्त्राः'[४]।

'स्मृत्वा कर्माणि कुर्वीत' इत्यनुसारं मन्त्रस्मरणपूर्वकं कर्मकाण्डविधिः सम्पादनीयः। आचार्यशौनकानुसारं मन्त्रदर्शिभिर्मुनिभिर्दृष्टा मन्त्रात्तत्तद्देवानां प्रभावेण विभूतिस्तुतिदृष्ट्या नानाविधाः सन्ति, स्तुतिप्रशंसानिन्दासंशयपरिदेवनादिभेदात्। अत्रोच्यते—

मन्त्रा नानाप्रकाराः स्युर्दृष्टा ये मन्त्रदर्शिभिः।
स्तुत्या चैव विभूत्या च प्रभावाद्देवतात्मनः।।

स्तुतिप्रशंसानिन्दा च संशयः परिदेवना।
स्पृहाशीः कत्थना याच्ञा प्रश्नाः प्रैषः प्रवह्लिका[५]।।

दृष्टादृष्टभेदात् मन्त्राणां प्रयोजनद्वयम्। याज्ञिकदृष्ट्या करणक्रियानुवाद्यनुमन्त्रणजपभेदात् मन्त्राश्चतुर्धा।

---

१. राजशेखरः—काव्यमीमांसायाम्, अ. २; २. कौ. सू. १।३।
३. जैमि. न्या. मा. २।१।७।
४. अर्थसङ्ग्रहे; ५. बृहद्देवता—१।३४-३५।

प्रकृतिविकृतिभेदात् मन्त्राणां द्विविधः पाठः। तत्र संहितापदक्रमभेदात् त्रिधा प्रकृतिपाठो विधीयते। जटामालाशिखारेखाध्वजदण्डरथघनभेदादष्टौ विकृतयः सन्ति। तद्यथा—

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः[1]।।

वैदिकपरम्परायां सस्वरवेदपाठस्य माहात्म्यं स्वीक्रियते। तद्यथोक्तं याज्ञवल्क्यशिक्षायाम्—

स्वरवर्णान् प्रयुञ्जानो हस्तेनाधीतमाचरन्।
ऋग्यजुःसामभिः पूतो ब्रह्मलोकमवाप्नुयात्[2]।।

एवमेव पाणिनीयशिक्षायां निर्दिष्टमस्ति। तद्यथा—

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते[3]।।

हस्तस्वरविकृतौ वेदफलावाप्तिर्नैव जायते। अत्रोच्यते शिक्षाग्रन्थे—

हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते।
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्।।

कामनाहानिसन्तप्तो वियोनिमधिगच्छति।।

शब्दस्वरवर्णादिदोषैः प्रत्यवायभूतो वाग्वज्रो यजमानघाताय भवति। तद्यथा—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्[4]।।

अत्र अन्तोदात्तस्य स्थाने आद्युदात्तप्रयोगात् समुद्भूतवाग्वज्रादसुरस्य हानिर्जाता।

ब्राह्मणभागविचारणायां ब्रह्मन्शब्देन अण्प्रत्यये स्वादिकार्ये ब्राह्मणपदं वेदराश्यभिधायकम्। मन्त्रातिरिक्तवेदभागो ब्राह्मणमित्यभिधीयते, 'शेषे ब्राह्मण-शब्दः'[5] इति जैमिनिसूत्रनिदर्शनात्।

---

१. शु. य. प्रा. विकृतिप्रकरणे-१;
२. या. शि., पूर्वार्धे-४५-४६।
३. पा. शि. ५५;
४. तत्रैव-५२।
५. जै. सू. २।१।३३।

शतपथब्राह्मणे वेदचतुष्टयमन्त्राणां कर्मसु विनियोजकः कर्मविधायको नानाविधानादितिहासाख्यानबहुलो ज्ञानविज्ञानपूर्णो भागो ब्राह्मणभागः। यागकर्मणां तथा च मन्त्राणां विस्तृतं व्याख्यानं यत्र विद्यते तद् ब्राह्मणम्। यथोच्यते—

ब्राह्मणं नाम कर्मणस्तन्मन्त्राणाञ्च व्याख्यानग्रन्थः[१]।

ब्राह्मणग्रन्था विध्यर्थवादद्वयं प्रतिपादयन्ति। तत्र कर्मप्रेरणं विधिः 'चोदनेति क्रियायाः प्रवर्तकवचनमाहुः' इति शाबरभाष्ये। इत्थमेव आपस्तम्बाभिमते कर्मप्रेरणं विधिः, तदतिरिक्तोऽर्थवादः। तद्यथा—

कर्मचोदना ब्राह्मणानि। ब्राह्मणशेषोऽर्थवादः[२]।

उत्पत्तिविनियोगप्रयोगाधिकारविधिभेदाद् विधिश्चतुर्धा। यथोक्तं मीमांसान्यायप्रकाशे—

स च विधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति[३]। एतेषामवान्तरभेदा बहवः प्रपञ्चिताः, विधिशेषार्थवादा निषेधशेषार्थवादाश्च। बहुप्रपञ्चिता ब्राह्मणग्रन्थेषु।

शबरस्वामिना ब्राह्मणभागे हेतुनिर्वचननिन्दादयो दश विधयः प्रतिपादिताः सन्तीति निर्दिष्टम्, यथा—

हेतुनिर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना।।
उपमानं दशैते तु विधयो ब्राह्मणस्य तु।। इति।

वेदतत्त्वविषये यद्यप्यस्ति बहु विवेचनीयम्, तथापि अत्र निष्कर्षरूपेण इत्थमनुशीलनेन ऐहिकामुष्मिकफलावाप्त्यलौकिकोपायनिदर्शकालौकिकविशिष्टापूर्वाधिभौतिकाधिदैविकाध्यात्मिकतापत्रयनिवारकमन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति फलति।

●

१. तै. सं. १।५।१ भाष्ये; २. आप. परि. ३४।३५।
३. मी. न्या. प्र., पृ. ६१।

# तन्त्रागमीयतत्त्वसमीक्षा

**प्रो. रामकिशोरत्रिपाठी**

आचार्योऽध्यक्षश्च, वेदान्तविभागस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी



यमाश्रिता शक्तिरमुं प्रपञ्चं
तनोति सर्गस्थितिनाशहेतुः।
ध्यायन्ति यं योगरता मुनीन्द्रा-
स्तं नौमि तत्त्वं शिवमप्रमेयम्।।

नित्यानित्यविवेकहेतुरखिलं शास्त्रं हि वेदादिकं
तत्र न्यस्तसमस्तकर्मपरिधिर्लोकोपकारोन्नतः।
तेनैवात्र सुसाधयन्ति पुरुषा धर्मार्थकामाक्षया-
नर्थान् नित्यसुखेच्छया हि सकला भोगोत्सुका मानवाः।।

आद्यत्रयाणां फलमत्र नष्टं दृष्ट्वा परत्राप्यनुमानतो वै।
पूर्वान् हि धीराः सकलान् विहाय नित्याक्षयं ते सुखमाश्रयन्ते।।

कर्मक्षये यत् क्षयमेत्यनित्यं न तत्फलं स्यात् पुरुषार्थमुख्यम्।
अतः प्रसाध्यं मनुजैर्महत्तत् कैवल्यरूपं सुखमात्रमेकम्।।

तदर्थं साधनाभक्ती जीवात्मनोरभेदधीः।
सहकारिसाधनं शास्त्रमन्यन्नैवोपपद्यते।।

शास्त्रं हि प्रथमो वेदो दर्शनानि तदन्वयात्।
मोक्षस्य साधकान्याहुः सर्वतत्त्वविचक्षणाः।।

सत्यानृतमिथुनीकृतलोकव्यवहारे दर्शनानि हि कर्तव्याकर्तव्यविवेकज्ञानेन तत्त्वनिश्चयेन चोपकुर्वन्ति जनान्, तदर्थमेव तेषामुद्भवः। दृश्यते कर्तव्याकर्तव्ये

विविच्येते अनेन, यद्वा दृश्यते साक्षात्क्रियत आत्मतत्त्वमनेनेति व्युत्पत्त्या दृश्धातोः करणे ल्युट्प्रत्यये सति दर्शनशब्दनिष्पत्तिः। दर्शनानि खलु तथ्यातथ्यविवेचनपुरः-सरं तत्त्वबोधं प्रति नयन्ति पुरुषान्। तत्र कानिचिद् वेदप्रमाणभूतानि परलोकसत्ताप्रतिपादकत्वाच्च आस्तिकानि इत्युच्यन्ते। परलोकोऽस्तीति मतिर्यस्येति विग्रहे अस्ति इत्यव्ययात् 'अस्ति नास्ति दिष्टं मतिः'[१] इति सूत्रेण ठक्प्रत्यये सति आस्तिकशब्दनिष्पत्तेः। एवमेव परलोको नास्तीति मतिरिति विग्रहे नास्तिकशब्दो निष्पद्यते। आस्तिकानि तावद् न्यायः, वैशेषिकम्, पूर्वमीमांसा, उत्तरमीमांसा, सांख्यम्, योग इत्यादीनि। नास्तिकानि च चार्वाक-जैन-बौद्धप्रभृतीनि। एतानि सर्वाण्यपि स्वस्वसिद्धान्तदिशा जगदुद्भवलयविकारान् प्रतिपादयन्ति मूलतत्त्वं प्रतिबोधयन्ति च।

एतेभ्यः पृथक् प्रवृत्तानि शम्भुगिरिजासंवादभूतानि शैवदर्शनानि। तान्यपि शिवशक्त्योरनादितया तयोः संवादस्यानादित्वम्, संवादस्यानादित्वे तन्मूलक-दर्शनशास्त्राणामनादित्वं स्वतः सिद्धम्। शिवगिरिजासंवादस्य श्रुतिपरम्परया लब्धस्य स्वसजातीयोच्चारणसापेक्षोच्चारणविषयत्वेनापौरुषेयत्वेन पार्थक्येन वेदरूपत्वम् अतश्चागमपदवाच्यत्वम्। शम्भुपञ्चवक्त्रेभ्यो निःसृतानि पाशः पशुः पतिरित्यादिपदार्थत्रयबोधकानि अष्टाविंशतिरागमशास्त्राणि संस्कृतवाङ्मये प्रसिद्धानि सन्ति। सर्वेषामास्तिकानामागमानां मूलं वेद एवास्ति नात्र संशीतिलेशमात्रम्। त्त्रेयान् विशेषः—वेदाः परमेश्वरस्य निःश्वासभूताः स्वत एवाविर्भवन्ति, आगमास्तु परम्परया श्रुतिमूलत्वं भजन्ते। तत्र श्रुतिर्गिरिजाशम्भुसंवाद एवास्ति। भगवतः शिवस्य पार्वतीमुद्दिश्य कथितो रहस्यात्मकोपदेशः परम्परया महर्षिभिरधिगत आगम इत्युच्यते। अतः श्रुतिमूलकत्वादस्यापि वेदरूपत्वम्। उक्तञ्च स्वच्छन्दतन्त्रे—

> आगतं शिववक्त्रेभ्यो गतञ्च गिरिजामुखे।
> मतं हि वासुदेवस्य तस्मादागम उच्यते[२]।।

एतेनेदं स्पष्टं प्रतीयते, यद्वासुदेवस्य मतं वेदादिशास्त्रप्रतिपाद्यं तदेव परम-कारुण्यकेन शिवेन पार्वतीं प्रत्युपदिष्टम्। अथ चानुशासनकर्तृत्वाच्छास्त्रत्वमप्या-गमानाम्। आचार्या आगमोपदेशेन शिष्याननुशासतीति कृत्वाऽऽगमानां शास्त्रत्वमपि मन्तव्यम्। उक्तञ्च हरिणा—

> तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते[३]।।

---

१. पा.सू. ४.४.६०; २. स्वच्छन्दतन्त्रे।
३. वाक्यपदीये।

तत्रागमग्रन्थेषु शिवशक्त्योः काल्पनिकभेदः सन्नपि वास्तविकरूपेण तयोरभेद एव सिद्धान्तितः। आगमशास्त्रस्य तन्त्रशब्देनापि व्यवहारो दृश्यते।

**तन्त्रशब्दार्थविमर्शः, आगमेनाभेदकथनञ्च**

तन्यन्ते विस्तीर्यन्ते, ऐहिकामुष्मिकाभ्युदयनिःश्रेयससाधका उपाया अनेनेति व्युत्पत्त्य 'तनु-विस्तारे' इति तनादिकाद् धातोः करणेऽर्थे 'सर्वधातुभ्यः ष्ट्रन्'[1] इत्यौणादिकसूत्रेण ष्ट्रन्प्रत्यये सति तन्त्रशब्दो निष्पद्यते। यद्वा तत्रि-कुटुम्बधारणपोषणयोरित्यस्माच्चौरादिकाद् धातोः कर्मणि करणेऽधिकरणे वा 'अकर्तरि च कारके संज्ञायाम्'[2] इति पाणिनीयसूत्रेण घञ्प्रत्यये कृते सति तन्त्र्यते यद् येन यत्र वेति व्युत्पत्तिभिस्तन्त्रशब्दस्य साधुत्वं विधीयते। ततश्च समाजस्य धारकत्वं पोषकत्वं वा तन्त्रत्वमिति नियमविशेषनियन्त्रितलोकत्वं तन्त्रत्वमिति वा लभ्यते। तथा चोक्तम्—

> तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
> त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते।।
> व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
> इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते।।

पूर्वोक्त एव शम्भुसतीसंवादः श्रुतिप्रतिपाद्यतत्त्वप्रतिपादकत्वाद् वेदार्थविस्तार-कत्वाच्च तन्त्रमित्यभिधीयते।

**आगमशब्दस्य व्युत्पत्त्यर्थविचारः**

आङ्पूर्वकाद् भौवादिकाद् गत्यर्थकाद् गम्धातोः 'ग्रहवृदृनिश्चिगमश्च'[3] इति पाणिनीयसूत्रेण कर्मणि करणेऽधिकरणे वा अप्प्रत्यये आगम्यते यो येन यत्र वेति विग्रहे आगमशब्दो निष्पद्यते। धातूनामनेकार्थत्वाद् आङ्पूर्वकगम्धातोर्गतिः प्राप्तिर्ज्ञानमित्यर्थत्रयं स्वीक्रियते। परमशिवपदगमनम्, सम्यक्प्राप्तिसाधनम्, सम्यग्ज्ञानाधिकरणमिति विपुलार्थप्रतिपादकत्वादागमशब्दतन्त्रत्वम्। तन्त्रागमे शिवसायुज्यप्राप्तिः, दर्शनान्तरेषु मोक्षः, वेदान्तशास्त्रे ब्रह्मतत्त्वसाक्षात्कारश्च सम्यक्प्राप्तिविषयत्वमर्हति। अतः परमपुरुषार्थमोक्षतत्त्वं तत्साधनं वा आद्यविग्रह-द्वयप्रतिपन्नागमशब्दस्यार्थत्वेनाभिमते। तृतीयविग्रहेण च सम्यग्ज्ञानमात्मज्ञानमेव

---

१. उणादिसूत्रम्–५९८; २. पा.सू. ३.३.१९।
३. तदेव–३.३.५८।

तदधिकरणमात्मैवेति आगमपदार्थ इति वक्तुं शक्यते। एताभिर्व्युत्पत्तिभिर्मोक्षितत्त्वस्य साधकत्वं साधनत्वम् आत्मतत्त्वविवेकत्वं वा आगमशास्त्रत्वमित्यायाति। तच्च समाजस्य पोषणमन्तरा न सम्भवतीति। समाजपोषणनियमविशेषज्ञापकत्वे सति आत्मतत्त्वस्य ज्ञापकत्वमनुशासकत्वं वाऽऽगमत्वमिति पर्यवस्यति।

**तन्त्रागमयोरभेदविचारः**

समाजपोषकत्वं तन्त्रत्वमित्यत्र समाजपोषणं किमर्थमिति विचारे क्रियमाणे परमपुरुषार्थस्यैव सर्वजनसुखस्वरूपत्वेन वेद्यतयाऽऽत्मज्ञानमेव प्रयोजनत्वं भजते। तथा हि तन्त्रपदार्थस्य फलमागमपदार्थः, आगमपदार्थस्य च साधनभूतस्तन्त्रपदार्थः, द्वयोश्च साध्यसाधनभावेनैव पूर्णता। एकं साधनमेकञ्च साध्यम्। अतश्च योगरूढ्या तन्त्रागमशब्दार्थयोः साम्यं दृष्ट्वा तान्त्रिकैरन्यैर्वा विद्वद्भिरभेदेनानयोर्व्यवहारः कृतः। तद्यथा—मृगेन्द्रतन्त्रं मृगेन्द्रागमः, शैवतन्त्रं शैवागमः, भैरवतन्त्रं भैरवागम इत्यादि। तथा च 'मालिनीविजयवार्तिके' (पृ. ३६-३८) तदनुगामिनि तन्त्रालोकविवेके (भा. १, पृ. ३६-४१) शिवस्य पञ्चवक्त्रेभ्यो दशानां शैवागमानामष्टादशानां च रौद्रागमानां चतुःषष्टिसंख्याकानाञ्च भैरवागमानामाविर्भावप्रकारो निरूपितोऽस्ति। तेषु स्थलेषु आगमशब्देन तन्त्रस्य व्यवहारः सुस्पष्टतयाऽभिहितः।

उभयत्रापि शिवशक्तिसंवादस्य मूलकत्वम्। साध्यसाधनभावेन व्युत्पत्त्यर्थश्चोभयत्रापि समत्वं भजते। प्रतिपाद्यविषयोऽप्युभयत्रापि समानः। तत्र कानिचित् तन्त्रशास्त्राणि शक्तिप्रधानानि कानिचिच्च शिवतत्त्वप्रधानानि। शक्तिप्रधानशास्त्रेषु शक्तिरेव चराचरात्मकजगतः कर्त्री शिवश्च शक्तेराश्रयमात्रम्। शक्तित एवाविर्भूयेदं जगत् तत्रैव लीयते। शिवतत्त्वप्रधानेषु शिवतत्त्वमेव जगतः कारणत्वेनाभिमतम्। तत्रापि शिवशक्त्योश्चाभेदान्नास्ति काचित् विप्रतिपत्तिः। शक्तिश्च शिवस्वरूपमेवेति सर्वमग्रे सम्पादयिष्ये।

**आगमनिगमयोः सम्बन्धविचारः**

नित्यं सुखं ब्रह्मपदाभिधेयं कं कामयन्ते पुरुषाः सयत्नम्।
शास्त्रं हि तत्साधनतानुरूपं तनोति तथ्यं फलसिद्धियोग्यम्।।

शासनकर्तृभूतत्वाच्छास्त्रत्वं छन्दसो मतम्।
तदर्थमनुधावन्ति स्मृत्यागमादयः सदा।।

शास्त्राणां फलमुक्तं यत् पुरुषार्थचतुष्टयम्।
यल्लब्ध्वा न भवेदिच्छा स मोक्षः परमं फलम्।।

तत्प्रतिपादको वेद आगमास्त्वनुवर्तकाः।
स्वरूपचिन्तको वेद उपाया आगमाश्रिताः।।

पुरुषार्थचतुष्टयस्य साधनानि कर्मज्ञानोपासनादीनि, तेषाञ्च स्वरूपाणि वेदे निरूपितानि। तथा हि येन कर्मणैहिकामुष्मिकसिद्धिर्भवति, तत्कर्म किम्? इति कर्मस्वरूपप्रतिपादनमन्तरा न तत्र स्यात् प्रवृत्तिः साधकानाम्। तथा चोक्तं गीतायाम्—

'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'[१]।

एवं 'यज्ज्ञात्वा मोक्ष्यसेऽशुभादि'ति गीतावचनात् मोक्षसाधकत्वमुच्यते ज्ञानस्य; परन्तु तत्स्वरूपबोधं विना न कथञ्चिदपि सिद्धिरिति कृत्वा ज्ञानस्वरूपज्ञानमावश्यकम्। तथा चोपासनाया अपि शास्त्रेषु महत्त्वं वरीवर्ति।

वेदे प्रतिपादितस्वरूपाणां कर्मोपासनादीनामुपायप्रतिपादकानि आगमशास्त्राणि। तथा चोक्तमागमस्वरूपप्रतिपादनविधौ तत्त्ववैशारद्यां वाचस्पतिमिश्रेण—'आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः, स आगमः'[२]। वेदप्रतिपाद्यपुरुषार्थसाधनानामुपायपरिचिन्तकत्वाद् वेदागमयोरङ्गाङ्गिभावसम्बन्धः। अथ च श्रुतिसारभूताद्वैतवेदान्तदर्शनेन सयुक्तिकं यदद्वैततत्त्वं प्रतिपाद्यते, तत्साधकोपायपरिचिन्तकत्वाच्चागमोपनिषदोऽप्यङ्गाङ्गिभावः। एतेन वेदमूलकत्वमागमानामिति।

**आगमभेदाः**

आगमशब्दाभिधेयं तल्लक्षणञ्चोक्त्वेदानीं तद्भेदान् प्रतिपादये। तत्त्वपरिचिन्तनपराणां दर्शनानां तथ्यातथ्यविवेचनमेव प्रधानमभिधेयम्, तच्च जगत्स्थितिलयादिपरिज्ञानमन्तरा न सम्भवतीति कृत्वा दर्शनानि पूर्वं जगतः सृष्टिस्थितिलयादिकं समं वितन्वन्ति। तद्वदागमशास्त्रमपि पूर्वं जगत्सर्जनं लयञ्च प्रतिपाद्य तत्त्वसाधनोपायान् चिन्तयति।

विश्वोद्भवप्रतिपादनपरमागमशास्त्रं सृष्टिरूपत्वेन लोके ख्यायते। उद्भूतमिदं विश्वं कथं कुत्र च लीयत इति प्रतिपादकमागमशास्त्रं लयपदेनाभिधीयते। ततश्च

१. गीता–४.१६; २. योगसूत्रभाष्यटीका तत्त्ववैशारदी।

शास्त्रप्रतिपादितसाधनद्वारा निःश्रेयसाधिगमः। तत्र साधनानि देवार्चनम्। अस्मिन् विधौ देवानां सर्वाङ्गपूजाविधानमभिधीयते, तत्प्रतिपादकत्वेनागमशास्त्रं देवार्चनशब्देन ख्यायते। सिद्धयो हि तन्त्रशास्त्रस्य प्रधानसाधनानि, तत्प्रतिपादकत्वेन शास्त्रं सर्वसाधनपदेनाभिधीयते, अत्र शास्त्रे मारणमोहनोच्चाटनादिरूपा हि सिद्धयस्तत्प्रतिपादनपरं शास्त्रं पुरश्चरणपदेनाभिधीयते। सिद्धीनां साधकानि षट्कर्माणि—शान्तिः, वशीकरणं, स्तम्भनं, विद्वेषणम्, उच्चाटनं, मारणञ्चेति, तत्प्रतिपादनपरमागमशास्त्रं षट्कर्मपदेनाभिधीयते। एकाग्रमनसा स्वाभीष्टदेवतायाः स्वरूपचिन्तनेन देवानां प्राकट्यं भवतीति ध्यानयोगविधिरागमशास्त्रेषु वर्णितस्तत्प्रतिपादनपरत्वादागमशास्त्रं ध्यानयोगपदेनाभिधीयते। अतश्च सप्तभेदा आगमशास्त्राणाम्, तदुक्तम्—

> सृष्टिश्च प्रलयश्चैव देवतानां तथार्चनम्।
> साधनं चैव सर्वेषां पुरश्चरणमेव च।।
>
> षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
> सप्तभिर्लक्षणैर्युक्तमागमं तद् विदुर्बुधाः[1]।।

इमानि लक्षणानि यद्यप्यागमस्वरूपबोधकानि, तथापि आगमतन्त्रयोरभिन्नतया तन्त्रस्वरूपप्रतिपादकानि सन्ति। अत्र शास्त्रे प्रथमं देवतास्वरूपस्य दैवगुणानां तत्साधककर्मणाञ्च चिन्तनं क्रियते। ततश्च तद्विषयकमन्त्राणामुद्धरणं तदनन्तरं तन्मन्त्राणां यज्ञे समायोजनद्वारा देवध्यानस्य तदुपासनायाश्च वर्णनं क्रियते। उपासनेयं पञ्चाङ्गसमन्विता सती परिपुष्टिमेति। अङ्गानि तावत् पटल-पद्धति-कवच-सहस्रनाम-स्तोत्ररूपाणि। यैः संसाध्यत उपासनाविधिः। अतः क्रियाप्रधानं हि तन्त्रशास्त्रम्। वेदोक्तज्ञानस्य क्रियात्मकप्रतिपत्तिरागमशास्त्रस्य प्रतिपाद्यो विषयः।

**तन्त्रस्य श्रुतिमूलकत्वम्**

> मूलं वेदो हि तन्त्रस्य तस्माद्दर्शनमुच्यते।
> अत आस्तिकशास्त्रेषु गणना तस्य विद्यते।।
>
> वेदेषु पूर्वं प्रतिपादितो यस्तमेव भूयो वितनोति तन्त्रम्।
> श्रुतौ समासादितसारतत्त्वं प्रख्यान्ति नान्यच्छ्रुतिमूलकानि।।

द्विविधानि भारतीयदर्शनानि—श्रुतिप्रामाण्यानि वैदिकानि, श्रुत्यप्रामाण्यानि अवैदिकानि च। तन्त्रशास्त्रं यद्यपि गिरिजाशिवसंवादभूतत्वात् पृथक्

---

१. वाराहीतन्त्रे।

प्रामाण्यमाभजते, तथापि गिरिजाशिवयोरनादित्वात्तस्य संवादस्यानादित्वे श्रुतिपरम्परैव तस्य संरक्षिकेति मत्वा पृथक् श्रुतिमूलकत्वं तन्त्रशास्त्रस्य। मन्त्रब्राह्मणात्मको हि वेदः, तत्र ब्राह्मणान्तर्गता आरण्यकाः, अरण्ये अध्यापनशीलत्वात्त आरण्यका इत्युच्यन्ते। त एव ब्रह्मविद्याप्रतिपादकत्वादुपनिषत्पदेन व्यवह्रियन्ते। उप=समीपे नि=निश्चयेन सीदति यां विद्यामुपसद्य उपगम्य निश्चयेन संसारतामतिं सादयति विषादयति शिथिलयतीति वा दुःखजन्मप्रवृत्त्यादिमूलाज्ञानं सादयत्युन्मूलयतीति व्युत्पत्तेः। उक्तञ्च कठोपनिषच्छाङ्करभाष्ये—'सदेः धातोर्विशरणगत्यवसादनार्थस्योपनिषत्पूर्वस्य क्विप्प्रत्ययान्तस्य रूपमिदमुपनिषदिति'।

उपनिषत्सु प्रतिपादिता नैका विद्यास्तन्त्रागमेषु ख्यापिताः सन्ति। अतो वेदमूलकत्वं राराजते तन्त्रागमशास्त्रस्य। तद्यथा बृहदारण्यके षष्ठाध्यायस्य द्वितीयब्राह्मणे, अथ च छान्दोग्योपनिषदि पञ्चमाध्याये पञ्चाग्निविद्या 'योषा वाव गौतमाग्निः'[१]। इति मन्त्रात्मिका तन्त्ररहस्यमेवोपबृंहति। एवञ्च छान्दोग्योपनिषदि तृतीयाध्याये मधुविद्यारहस्यं तन्त्रसाधनामूलम्। योगिनः सविकल्पकसमाधौ निर्विकल्पकसमाधौ वा यन्मधु सेवन्ते, आनन्दातिरेकमनुभवन्ति, सैव मधुविद्यापदेनोपनिषदि ख्याताऽस्ति। अन्यो ह्यर्थोऽयं भानोरूर्ध्वरश्मय एव मधुनाड्या गुह्य आदेशश्च मधुकरः, ब्रह्म हि पुष्पम्, ततो निःसृतममृतं साध्यनामको देवो भुङ्क्ते। तदित्थममृतवर्णने यो हि गुह्यादेशः ख्यापितस्तत्तन्त्रमेव नान्यत् किञ्चिदिति।

अपि च वेदे शब्दो ब्रह्मस्वरूपत्वेनाभिमतः, शब्दराशिर्हि वेदः स च अनादिरपौरुषेयो ब्रह्मरूपश्चास्ति। प्रणवरूपशब्दादेव सर्वाः शब्दविकृतयो जायन्ते। प्रणवश्चैकोऽनादिः सन्नपि पूर्वम् ऋग्यजुःसामरूपेण ततश्च तत्तदर्थप्रत्ययाय तत्तच्छब्दरूपेणानेकधा विवर्तत इति शब्दविवर्तः। ततश्चार्थोऽभिन्नोऽपि भिन्न इव विवर्तत इत्यर्थविवर्तः। तन्त्रशास्त्रेऽपि शब्दो ब्रह्मरूपत्वेनाभिमतः, अतस्तन्त्रशास्त्रस्य वैदिकत्वमिति मन्मतम्।

**शब्दतत्त्वविचारः**

शब्दहिरण्यगर्भाभ्यां ब्रह्म हि द्विविधं स्मृतम्।
प्रथमादर्थलोकोऽयं द्वितीयाद्भूतसंसृतिः।।

---

१. छान्दोग्योपनिषदि–५.८.१।

जगदेतत् समुद्भूतं ब्रह्मणः कार्यरूपिणः।
व्यवहारात्मकार्थस्य शब्दब्रह्मण उद्भवः।।

शुद्धं सर्वक्रियाहीनं कार्यकारणवर्जितम्।
उपहितात् प्रपञ्चोऽयं शब्दाद्व्यवहृतिः स्मृता।।

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[1] इति श्रुतिबोधितं सर्वविकारातीतं शुद्धं ब्रह्म, जगत्सिसृक्षया 'तदैक्षत बहु स्यां प्रजायेय'[2] इति श्रुतिबोधितं सोपाधिकं कार्यरूपं हिरण्यगर्भमापद्यते, ततश्च सकलप्रपञ्चस्य समुत्पत्तिः। संसृष्टस्य जगतो व्यवहाराय तदेव ब्रह्म शब्दरूपत्वमाभजते। यतश्च शब्दार्थात्मकोऽयं लोकव्यवहारः, उक्तञ्च भर्तृहरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[3]।।

शब्दब्रह्मवादिनो वैयाकरणास्तान्त्रिकाश्च शब्दादेवार्थात्मकजगदुत्पत्तिं मन्यन्ते। तत्र स्फोटरूपशब्दादर्थरूपव्यवहारस्य विकासो भवतीति तन्मतिः। स्पन्दशून्यः सर्वविकारातीत उपसंहृतक्रमरूपः परावाग्रूपः शब्दः शुद्धब्रह्मस्वरूप इति तद् राद्धान्तः। स चार्थबुभुत्सया मध्यमामाहत्य कार्यरूपां वैखरीमापद्यते। कार्यरूपः शब्दो वैखरीवाग् इत्युच्यते। तयोत्साहितश्च मध्यमानादः स्फोटव्यञ्जक उच्यते। परायां वाचि शब्दार्थयोरुपसंहारः परिलक्ष्यते। चतुर्धा हि वाक् परापश्यन्तीमध्यमावैखरीरूपेण। तत्र केचन तिस्र एव वाचः स्वीकुर्वन्ति। तन्मते सूक्ष्मपश्यन्त्येव परावाग्।

वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा।
उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी[4]।।

तन्त्रागमे संविदाख्या परावाक्, यत्र शब्दार्थौ सममेव प्रस्फुरतः। शब्दार्थयोरभिन्नत्वादुभयात्मिका पराख्या संविदाख्या च चितिः परमेष्ठिनो हृदयं प्रोक्ता। ततः सा वाग् विशिष्टशब्दविशिष्टविवक्षा स्फुरणात्मिका औन्मुख्यतश्चिन्तामयी भवति। ततश्च शब्दात्मकत्वेन विवर्तार्थमयी भवति। एवं संवित्स्वरूपस्य सर्वप्रकाशकस्य प्रमैव प्रकाशनशक्तिर्या वागन्तःसङ्कल्परूपा, वर्णपदवाक्यजीवभूता सैव बहिर्भवतीति स्वानुभवप्रसिद्धमेव प्रबुद्धानाम्। उक्तञ्च—

---

१. छान्दो. ६.२.१;	२. तत्रैव–६.२.३।
३. वा.प. १.१२३;	४. परमलघुमञ्जूषाटीकायाम्।

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्।।

स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते[१]।।

परपरामर्शात्माऽनुत्तरः प्रकाश एव परं तत्त्वम्, स एव स्वीयस्वातन्त्र्याख्यशक्त्या विश्वस्यावभासनेच्छया प्रथमं स्वात्मनि शिवशक्तिरूपतामवभासयति, अकारादिहकारान्तां मातृकामुल्लासयतीति यावत्। अनुत्तरलिपिरत्राकारः, विमर्शलिपिश्च हकारः। अयमेवार्थः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः[२]।।

किमपि शास्त्रं स्वसिद्धान्तं प्रतिपादयदेव परमपुरुषार्थरूपं मोक्षतत्त्वं निर्दिशति। तन्त्रशास्त्रं हि पतिपाशपश्वादिपदार्थप्रतिपादनद्वारा परमतत्त्वमवबोधयति। तत्र पतिः साक्षाच्छिवः, पाशो मलाख्यो बन्धः, अविद्या वा, पशुश्च जीवः। तत्रादौ पतिस्वरूपत्वमुच्यते—

सच्चिदानन्दरूपोऽसौ सर्वशक्तिसमन्वितः।
शिवः पतिस्त्रिलोकस्य जीवः कर्मवशः सदा।।

कर्मफलान्वितः पाशः प्राणिनां बन्धकारणम्।
मुच्यते शिवसङ्कल्पात्तस्मात्पतिरिरिति स्मृतः।।

शिवांशभूतत्वाज्जीवः सर्वतन्त्रस्वतन्त्रोऽपि कर्मफलवशीभूतो जनिजरामृत्य्वादिकं भजते। स च पाशरूपः संसारबन्धः शिवानुग्रहेण नाशमुपगच्छति। तथा चोक्तम्—

न दृश्यमातिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
मनीषिणो ये मनसाभिक्लृप्तमेनं विदुस्ते ह्यमृता भवन्ति[३]।।

स च शिवोऽवेद्यत्वे सत्यपरोक्षविषयत्वात् स्वतः स्वप्रकाशरूपः। न क्षीयते क्षरति वाऽक्षरम्, अक्षराणामकारोऽस्मीति गीताप्रतिपाद्याकारपदवाच्यः शिव एव। विश्वस्य भरणाद् वमनात् सृष्टिस्थितिसंहारकारी भैरवः परमः शिवः। भैरवो भयङ्करः सर्वनियन्तोच्यते।

---

१. स्पन्दप्रदीपिका, पृ. ११३; २. सङ्केतपद्धतौ।
३. पारमेश्वरागमे, २१.२८।

विश्वतो भरितत्वेन विकल्पानां विभेदिनाम्।
मलं कवलनेनापीत्यन्वर्थादेव भैरवः[१]।।

त्रयस्त्रिंशत्कोटिदेवेषु परमश्रेष्ठभूतत्वाद् देवाधिदेवमहादेवपदवाच्यः शिव एवास्ति। जगदुद्भवेऽपि निमित्तं शिव एव।

**तन्त्रशास्त्रीयसृष्टिप्रक्रिया**

यस्माज्जातानि भूतानि खं वाय्वग्निभूमयः।
यस्मिंश्च लयतां यान्ति स सततं जयताच्छिवः।।

विकारहीनोऽपि सिसृक्षयाऽसौ रजोमयीं शक्तिमुपाश्रितश्च।
शिवासमाराधितचित्तवृत्तिस्तनोति विश्वं स्वविलासहेतोः।।

अग्नेः स्फुलिङ्गा इव अनादिनिधनस्वरूपाच्छिवतत्त्वादेवापृथग्-रूपेणाविर्भवति जगत्। शिवतत्त्वस्य व्यापकत्वात्तस्यैव शरीरभूतमेतत् प्रपञ्चजातम्। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः'[२] इति श्रुतिस्थतत्पदवाच्यः सर्वव्यापक-त्वाच्चात्मपदवाच्यः शिव एवास्ति। शिवतत्त्वादेव आकाशादिमहाभूतानि जायन्ते, तत्रैवान्ते लीयन्ते। तथा च श्रुतिः—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति'[३]। शिवाश्रिता तदभिन्ना च शिवशक्तिः शिवतत्त्वाभिन्नतयैवैतज्जगद् रचयति। अतः शिवशरीरमेवोच्यते जगत्। तथा चोक्तम्—

तिष्ठन्ती या मम तनौ यच्छरीरमिदं जगत्।
जगदित्यहमित्यन्य इति भेदो न कश्चन[४]।।

सृष्टिकालेऽपि शिव उदासीनः साक्षिभूत एवास्ते। न किञ्चिदपि विचेष्टते। तस्य शक्तिरेव सर्वं साधयति।

न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च[५]।।

शिवशक्तीनां प्राधान्येन भेदद्वयम्—समवायिनीशक्तिः, परिग्रहशक्तिश्च। निर्विकारा चिद्रूपा समवायिनीशक्तिर्नित्यं परमशिवे समवेता। परिग्रह-

१. योगिनीहृदयस्य दीपिकायाम्;
२. तै.उप. २.१।
३. तत्रैव–३.१;
४. पारमेश्वरागमे–२१.९०।
५. श्वेता.उप. ६.८।

शक्तिस्त्वचिद्रूपाऽपि परिणामशालिनी, सैव बिन्दुरित्युच्यते। शिवसामर्थ्यमेव शक्तिः, तच्च शिवस्वरूपम्। यथा वस्तुनोऽभिन्नं वस्तुस्वरूपं तथैव शिवस्वरूपं शिवाभिन्नमेवास्ति। कथञ्चिदपि वस्तुतत्स्वरूपयोर्भेद आकलयितुं न शक्यते। शुद्धाशुद्धात्मना बिन्दुरूपायाः परिग्रहशक्ते रूपद्वयं प्रसिद्धम्। तत्र शुद्धबिन्दुरूपिणी महामाया, अशुद्धबिन्दुरूपिणी माया, अनयोश्चेयान् भेदः—सात्त्विकजगदुपादानं महामाया, प्राकृतजगदुपादानं मायेति व्यवहारः। अचिदात्मकस्य परिणामशालिनो बिन्दोश्चिदात्मके शिवे समवायसम्बन्धो नैवाभिमतः, अन्यथा शिवस्यापि अचिदात्मकतापत्तिः स्यात्।

जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते।
स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम्[१]।।

**परमशिवस्य बिन्दुस्वरूपनिरूपणम्**

सर्वविकारशून्यत्वादव्ययो बिन्दुरुच्यते।
मात्रा ततो भवेच्छक्तेः क्रियावृत्त्यवधारणात्।।

सोपाधिकः शिवो बिन्दुः शुद्धश्च परमः शिवः।
बिन्दुस्वरूपमासाद्य जगदेतत् प्रवर्तते।।

सृष्टिप्रक्रियाप्रतिपादने पूर्वप्रवर्तनारूपत्वात्प्रलयोऽप्यनुसन्धेयः। तत्र प्रलयो नामानन्तशक्तिकस्य ब्रह्मणः स्वरूपमात्रे कञ्चित्कालमवस्थानम्। तद्यथा सुषुप्तिकाले जीवा अज्ञानान्धकारे निमग्ना न किञ्चिदपि विदुः, पुनश्चोत्थिता यथापूर्वं संसारमनुभवन्ति, तद्विषये च सुषुप्तिश्चाल्पो लय इत्युच्यते, तत्र जाग्रत्स्वप्नोभयविधप्रपञ्चस्य सुषुप्तिकाले लयात्। ब्रह्मणः सुषुप्तिकाले हि समेषां जीवानां प्रपञ्चोपशमनात् महालय उच्यते। तत्रेयान् भेदः—तत्तज्जीवानां सुषुप्तिकाले तत्तत्प्रपञ्चोपशमः। ब्रह्मणः सुषुप्तिकाले तु सर्वप्राणिनां प्रपञ्चोपशमः। पूर्वसृष्टिदशायां ज्ञानविरहादमुक्ता जीवास्तददृष्टानि पञ्चमहाभूतानां सूक्ष्मरूपाणि च कार्पासबीजे पटा इव सूक्ष्मरूपेण सुषुप्तिमापन्ने प्रलयकालिकब्रह्मणि तिष्ठन्ति। जागृते च ब्रह्मणि यथापूर्वं भूतानि प्रपद्यन्ते, मानवाश्च स्वे स्वे कर्मणि प्रवर्तन्ते। स च लयः परमशिवस्वरूपः, शेते विश्वं यस्मिन्निति व्युत्पत्तेः। लयस्थानी शिवो बिन्दुस्वरूप एवास्ति। बिन्दुस्वरूपे शिव एव सर्वं विश्वं लीयते।

संस्थिते मय्यधिष्ठाने निस्तरङ्गसुखाम्बुधौ।
सञ्जायन्ते विलीयन्ते नामरूपात्मबुद्बुदाः[२]।।

---

१. रत्नत्रये, का. २२; २. पारमेश्वरागमे–१३.२।

निरवच्छिन्नः शुद्धो बिन्दुः परमशिवरूपः शक्त्युपहितश्च जगदुत्पत्तौ निमित्तम्। तस्मिन्नेव सोपाधिके बिन्दुरूपे शिवे घटपटादिबाह्यविषया भासन्ते। तत्रापि शिवाभिन्ना शक्तिरेवोपादानम्। शक्तिरेव बिन्दौ वासनावशात् क्षोभमुत्पादयति। ततश्च बिन्दोस्त्रिकोणचक्रं जायते, तच्च चक्रं त्रिधा विभज्यते। त्रिधा विभक्तस्य पुनरेकैकरूपस्य त्रित्रिरूपत्वं प्रतिपद्यते। एकमेव त्रिकोणं सृष्टिलयभेदेन शक्तिवह्नित्रिकोणतामुपगतं धर्माधर्मभेदेनात्मभेदेन मातृमेयभेदेन प्रमाभेदेन च नवधा भवति।

बैन्दवं चक्रमेतस्य त्रिरूपत्वं पुनर्भवेत्।
धर्माधर्मौ तथाऽऽत्मानो मातृमेयौ तथा प्रमा।।
नवयोन्यात्मकं चक्रं चिदानन्दघनं महत्।
चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम्[१] ।।

त्रिगुणात्मिकया शक्त्या बिन्दुः पूर्वं त्रिधा विभज्यते। सत्त्वरजस्तमोरूपास्त्रयो हि प्रकृतिगुणाः। तत्र रजः क्रियात्मको गुणस्तत्सम्बलिता क्रियात्मिका शक्तिः महाकालीतीत्युच्यते। तया सम्मोहिता आब्रह्म देवा असुरा मानवाश्च। सम्मोहात् क्षोभ उत्पद्यते, क्षोभः सृष्टेः कारणम्। तथा हि तया शक्त्या बिन्द्वात्मके शिवे क्षोभ उत्पाद्यते, स च क्षुब्धः क्रियात्मको बिन्दू रजोगुणप्रधानो हिरण्यगर्भ इत्युच्यते। तस्यैव प्रथमोद्गमः। ततश्चाकाशादिमहाभूतानामुत्पत्तिः। तथा चोक्तमृग्वेदे—

'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्'।

हिरण्यगर्भ एव प्रथमः शरीरी स वै पुरुष इत्युच्यते। स हि आदिकर्ता भूतानाम्। तस्य विराट्-पुरुषस्य सर्वभूतान्तरात्मत्वं प्राणात्मना सर्वभूतानामात्मन्य-वस्थानात्। प्राणो हि बिन्दुस्तदन्तर्भूताश्चाकाशादिमहाभूताः। बिन्दुतत्त्वात् प्रथमं ज्योतिःपुञ्जमग्नितत्त्वं जायते। स च परमप्रकाशभूतत्वाद् विराडित्युच्यते विशेषेण राजत इति व्युत्पत्तेः। बिन्दुतत्त्वं सर्वत्र व्यापकत्वादधिपुरुष इत्युच्यते। पर आसीदिति व्युत्पत्त्या पुरुषः परमशिवः। पुरि देहे शेते इति व्युत्पत्त्या शिवांशभूतो जीवः पुरुषः। पुरुषेष्विति विग्रहे विभक्त्यर्थेऽव्ययीभावे समासे सति अधिपुरुषशब्दो निष्पद्यते। एतेन सर्वभूताभिव्यापकत्वं बिन्दोः संसिद्ध्यति। तस्माद्विराट्पुरुषादेव महाभूतानां जडजङ्गमजीवानाञ्चोत्पत्तिः। स चानादित्वात् सर्वविकारशून्यत्वाच्च परमशिवपदवाच्यः, शक्त्युपहितश्च विराडित्युच्यते।

---

१. योगिनीहृदये–१०.१२१.१।

**बिन्दुतत्त्वादेव शब्दार्थात्मकव्यवहारः**

बिन्दुतत्त्वात् समुद्भूतं शब्दतत्त्वं शिवात्मकम्।
अर्थो व्यवहृतिर्लोके तयोश्चाभेद उच्यते।।

शक्तिः शब्दः शिवो वाच्यो व्यवहारो जगद् भवेत्।
ज्ञानेनापहृते लोके शिव एकोऽवशिष्यते।।

शिवात्मके बिन्दुतत्त्वे माया क्षोभमुत्पादयति, क्षुब्धो बिन्दुः शब्दत्वमापद्यते। सा च शक्तिर्वासनामयत्वादर्थरूपतामाभजते। व्यक्ताव्यक्तभेदेन बिन्दो रूपद्वयम्। तत्राव्यक्तबिन्दुर्निरुपाधिकः परमशिवः, मायोपहितश्च शब्दार्थात्मकव्यवहारे कारणम्। तत्राव्यक्तो बिन्दुर्वैयाकरणनये स्पन्दशून्या सर्वविकल्पातीता शब्दार्थोपसंहृतरूपा परावागित्युच्यते, सा च परब्रह्मस्वरूपा।

शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः।
सङ्कल्पपदवीरूढः स्फुरत्यन्तःस्थितः स्फुटम्[१]।।

नादादेव व्यक्तबिन्दुरुत्पद्यते, स च कारणं वर्णात्मकसृष्टेः। प्रथमं शिवेच्छया महामायायां क्षोभो भवति, ततो नादोत्पत्तिः, नादाद् बिन्दुः, बिन्दोरक्षरम्, अक्षरान्मातृका चेति। तथा हि—

नादः सूक्ष्मो भवेद्बिन्दुः पश्यन्ती मध्यमाक्षरम्।
मातृका वैखरी ज्ञेया नादाद्यास्तु शिवादयः[२]।।

आसां वृत्तीनामाश्रयभूता निवृत्त्यादयः पञ्च कला बिन्दुभूतशिवस्य कार्याणि। एषा च महामाया शब्दवस्तूभयात्मिका भवति। शब्दात्मकानां वर्णपदमन्त्राणां कलातत्त्वभुवनानां वस्तुरूपाणां चोत्पत्तिकारणम्। अव्यक्तबिन्दुः परमात्मा सर्वनिरपेक्षो व्यापको निर्गुणश्च, तत्र वाक्प्रवृत्तिर्न भवति, 'यतो वाचो निवर्तन्ते'[३] इति सिद्धान्तात्। व्यक्तबिन्दुविषयिकैव वाक्प्रवृत्तिः। वर्तुलरेखाकृतोपाधिना परमशिवस्य सगुणत्वमायाति। बिन्दुशब्दोच्चारणेनैव मनस्येका वर्तुलाऽऽकृतिः प्रादुर्भवति। तथैव हस्तेन पत्रपटादिषु आकारो निष्पाद्यते। लेखन्या यदेकं महच्छून्यं विलिख्यते तद्बिन्दोः स्थूलाऽऽकारोऽस्ति। स चाकार एषः ० अस्ति। तस्मिन्नाकारे या कृष्णरेखा दृश्यते न सा बिन्दुः; किन्तु तदन्तर्गतश्वेतभागो बिन्दुः। बाह्यया वर्तुलरेखया तस्य बिन्दुत्वं सम्पादितम्। बाह्यसीमा वृत्तरेखा तदन्तःपाती भागो

१. स्पन्ददीपिकायाम्, पृ. ८९; २. सिद्धान्तरत्नसारे–५३।
३. तै.उप. २.४.१।

बिन्दुः। इदमेव बिन्दोर्व्यक्तस्वरूपमिति। रेखायां तिरोहितायां तु बिन्दोरव्यक्तं स्वरूपमायाति। तथा चोक्तम्—

व्यापिका बिन्दुविलसत्त्रिकोणाकारतां गता।
बिन्दुद्वयान्तरालस्था ऋजुरेखामयी पुनः।।
समना बिन्दुविलसदृजुरेखा तथोन्मना।
शक्त्यादीनां वपुः स्फूर्जद् द्वादशादित्यसन्निभम्[१]।।

व्यक्तबिन्दुश्च स्वस्थानमपरित्यजन् गतिरूपोपाधिनाऽव्यक्तरेखात्रयात्मकोऽव्यक्तरेखारूपो भवति। यथा नदी स्वयं प्रवाहरूपेण मध्यरेखा भूत्वा द्वाभ्यां पक्षाभ्यां द्वे तटे रेखारूपे कृत्वा रेखात्रयवती सती प्रवहति, तथैव या एका रेखा दृष्टिपथमायाति, सा तिसृणामव्यक्तरेखाणां जननी, उभयोः पार्श्वयोर्द्वे रेखे मध्ये चैवेति सिद्धान्तात्। एवमेव सगुणपरमात्मा 'सोऽकामयत बहु स्याम्' इत्युत्थानरूपेणोपाधिनाऽव्यक्तगुणत्रयात्मकमायारूपेणाविर्भवति।

व्यक्तबिन्दुश्च प्रकृतिपुरुषोभयात्मकः। स्वस्थाने निश्चलोऽयं बिन्दुस्तस्मिंश्च मायास्थिततमोगुणरूपजडोपाधेः सत्त्वात्तत्रोपाधौ परमात्मनः सदंशोऽभिव्यज्यते। यदा स एव बिन्दुर्गतिं प्राप्य रेखारूपोऽभवत्, तदा मायास्थचलनवलनात्मकरजोगुणवशात् परमात्मनः सदंशेन सह चेतनांशोऽप्यभिव्यक्तो भवति। तदनु रेखाया विकृतिरूपोपाधिना बिन्दुरक्षररूपोऽभवत्। तत्र तत्र मायास्थसत्त्वगुणोपाधिना परमात्मन आनन्दांशोऽप्यभिव्यज्यते। यथा शक्तिविशिष्टः स्फोटात्मकशब्दस्तथा बौद्धार्थोऽपि शक्तिविशिष्टस्तयोरभेद इति शक्तिविशिष्टाद्वैतमित्युच्यते। शक्तिशक्तिमतोरभेदाच्छिवशक्त्योरप्यभेदः।

**प्राणिनां मैथुनसृष्टिरपि बिन्दुतत्त्वादेव**

स्त्रीपुरुषसंयोगाच्छुक्रशोणितमिश्रणम्।
बिन्दुद्वयोद्भवो गर्भः स शिवांश इति स्मृतः।।
शिवरूपः सदा बिन्दुः शोणितः शक्तिरूपभृत्।
शक्तेः शिवस्वरूपत्वादुभयत्र शिवांशता।।

स्त्रीपुरुषयोः सामरस्यदशायां यदा ब्रह्मरन्ध्रस्थितः शुक्रबिन्दुः काममन्दिरं प्रविष्टः शोणितबिन्दुनैकीभवति, तदैव बाह्याभ्यन्तरभानहीनमानन्दमात्रावशेषं ब्रह्मैव

१. योगिनीहृदये–१.३२-३३।

भासत इत्यनुभवसिद्धम्। सुषुप्तिदशायामानन्दात्मिकाऽज्ञानवृत्तिर्न सा सामरस्यानन्देन समा। तथा च श्रुतिः—'यथा प्रियया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'[1]। तादृशसामरस्यनिष्ठस्यानन्दात्मकत्वे सति गर्भोत्पादकत्वरूप-साधारणधर्मस्य सृष्टिप्राक्कालिकशिवशक्तिसामरस्येऽपि दर्शनाल्लौकिक-प्रक्रियैवाप्यूह्या।

तत्र यो ब्रह्मरन्ध्रस्थितो बिन्दुः, स निःशेषेण न कामालयं प्रविशति, किन्त्वंशरूपेण, अन्यथा पुनः सामरस्यानापत्तेः, ततश्च विधिबिलस्थितो बिन्दुस्तुरीयबिन्दुरभिधीयते। तदंशो मन्दिरस्थितस्तु कामाख्यो बिन्दुर्यः कामेश्वर इत्युपासकैश्चिन्त्यते। अत एव काममन्दिरनामधेयादीनि सम्भवन्ति। कामबिन्दोः शोणबिन्दुना सह परस्परानुप्रविष्टत्वे सति गर्भोत्पादकत्वसाधारणधर्मस्य सृष्टिप्राक्कालिकशिवशक्तिसामरस्येऽपि दर्शनाल्लौकिकप्रक्रियैवाप्यूह्या।

कामबिन्दुशोणबिन्द्वोः संयोगाद् बिन्दुद्वयात्मकः सर्गः सम्पद्यते। शिवमात्रस्य शक्तिमात्रस्य वा सृष्ट्यादिजनकत्वायोगात्। स च सर्गः शिवांशात्मकोऽन्यथा परशिवाङ्गीकारस्यैव वैयर्थ्यापत्तेः। उक्तञ्च कामकलाविलासे—

शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति।
सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसङ्कुचत्प्रसरम्।।

**शिवांशभूतजीवतत्त्वविमर्शः**

यथा स्फुलिङ्गा ज्वलनप्रवाहादभिन्नरूपाः प्रसरन्ति वह्नेः।
तथा हि जीवाः शिवतत्त्वमूलास्तदंशभूताः प्रचरन्ति लोके।।

शैवागमे भगवतः शिवस्य निमित्तकारणत्वमेवाभ्युपेयते। यथा घटादिकार्ये कुलालस्य निमित्तकारणता दण्डचक्रादीनां सहकारिकारणता मृदादीनामुपादानत्वम्। तद्वदत्रापि कारणत्रयं प्रसिद्धम्। शिवो निमित्तकारणम्, शक्तिः सहकारिकारणम्, बिन्दुश्चोपादानकारणमिति। बिन्दुरेव जडात्मना जगद्रूपेण चैतन्यात्मना च जीवरूपेण परिणमते। बिन्दुतत्त्वस्य शिवाभिन्नतया जगदेतच्छिवशरीरं जीवश्च शिवांश इत्युच्यते। आब्रह्म कीटपतङ्गादयो यावन्तः प्राणिनः समेऽपि शिवांशभूता एव सन्ति। तथा चोक्तम्—

देवता यक्षरक्षांसि मनुष्याः पशवः खगाः।
कृमिकीटपतङ्गाद्या अहमेव वरानने[2]।।

---

१. बृह. ४.७.५; २. पारमेश्वरागमे ३८.२१।

शिव इव जीवोऽपि व्यापकोऽनश्वरश्चेतनश्चास्ति। परञ्च शिवोऽनीश्वरस्तदतिरिक्तस्यैश्वर्याभावात्। जीवश्च शिवाधीनतया सेश्वरः। शिवः सर्वज्ञो जीवश्चाल्पज्ञः। अज्ञानेनावृतात्मतया समलोऽपि जीवः। कर्तव्याकर्तव्यकर्मफलमपि जीवो भुङ्क्ते। शिवो जीवानां पालकत्वाद् रक्षकत्वाच्च पतिरुच्यते। जीवश्च कर्मबन्धपरिबद्धत्वाद् अज्ञानेनावृततया पशुरित्यभिधीयते। इयानेव भेदः शिवजीवयोरिति।

देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः।
स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः[१]।।

**पशोस्त्रैविध्यम्**

स च जीवोऽणुर्दृक्क्रियारूपचैतन्यस्वरूपश्चास्ति। तच्चैतन्यमनावृतत्वान्न प्रकाशते। विज्ञानाकलप्रलयाकलसकलभेदेन पशुस्त्रिविधः कीर्त्यते। तत्र भोगादिना कर्मक्षये सति कलादिभोगसम्बन्धाभावात् केवलमलमात्रयुक्तो विज्ञानाकल इत्युच्यते। प्रलयेन कलादेरुपसंहाराद् मलकर्मयुक्तः प्रलयाकलः। मलमायाकर्मात्मकबन्धत्रययुक्तः सकल इति व्यवह्रियते। केवलसकलामलादिभेदेन पशोरवस्थात्रयं प्रतिपद्यते। उक्तञ्च स्वायम्भुवागमे—

अथात्माऽविमलो बद्धः पुनर्भुक्तश्च दीक्षया।
विज्ञेयः स त्रिधाऽवस्थः केवलः सकलोऽमलः।।

अत्रात्मशब्दो जीवपरः, स चात्मा केवलः, सकलः, अमल इत्यवस्थात्रयसहितो वर्तते। तत्र केवलावस्थापन्नो विमलो न भवतीत्यविमलोऽत्यन्तमलिन इत्यर्थः। सकलावस्थापन्नश्च कलादिबन्धनेन बद्धः कर्मानुरक्तश्चास्ति। पुनश्च दीक्षया कलादिबन्धान्मुक्तोऽमलावस्थापन्नः शुद्ध इत्युच्यते।

अमूर्तः स पशुर्नित्यो निर्गुणो निष्क्रियोऽप्रभुः।
मायोदरगतो व्यापी भोगोपायेष्वशक्तितः।।
स केवलस्त्विति प्रोक्तः स्वापवान् मलबन्धनात्[२]।।

केवलावस्थो जीवो व्यापकः सन्नपि मायोदरे स्थितो भोगोपायेष्वशक्तः प्रोच्यते। स च भोगैकरसिकः कर्मवशतो भुवनजदेहेषु सर्वेषु भ्रमति। केवलावस्थायां जीवस्य कलानां राहित्यं भवति। कलानां निलयो यस्मात्तेनासौ केवलः स्मृतः।

---

१. पराख्यसंहितायाम्; २. तत्त्वसङ्ग्रहे।

सकलावस्थायां जीवो बद्धोऽहमिति मत्वा भवबन्धनिवृत्तये परिचिन्तयति। इदमेव वैशिष्ट्यं केवलावस्थातः सकलावस्थायाः।

संसारी विषयी भोक्ता क्षेत्री क्षेत्रज्ञ एव च।
शरीरी चेति बन्धात्मा सकलः प्रोच्यते बुधैः।।

बन्धविमुक्तये सततं यतमानं जीवात्मानं यदा परमेश्वरः शिवोऽनुगृह्णाति तदा जीवो विगतसकलकल्मषतयाऽमलो भवति। स चामलावस्थापन्नो जीवो मुक्त इत्युच्यते।

अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा।
तदा भवति शान्तात्मा सर्वतो विगतस्पृहः।।

स च जीवः सर्वत्र शक्तिविशिष्ट एवास्ति। शक्तिविशिष्टजीवात्मनः शक्तिविशिष्टशिवेन सहाभेदः।

**पाशस्वरूपविमर्शः**

शिवरूपं सदा जीवं पाशो बध्नाति कर्मभिः।
बद्धः पशुत्वमापन्नो यावत्कर्मक्षयो भवेत्।।
सृष्टिस्थितिलयानां हि पाशः कारणमुच्यते।
मलकर्मादिभेदेन तस्य रूपचतुष्टयम्।।
बीजभूतो मलः प्रोक्तो यतो जगत् प्रवर्तते।
कर्मणा तस्य रक्षा स्यान्माया जगद्विनाशिका।।

शिवस्य शक्तिस्वरूपा एव पाशाः। तत्र मलाख्यपाशो देहाद्युत्पत्तौ कारणम्। यथा व्रीह्यादीनां तुषमङ्कुरजनने कारणम्, अङ्कुरोत्पत्तौ सत्याञ्च स्वयमेव निवर्तते। एवं मलाख्यपाशो देहादिसमुत्पत्तौ कारणम्। यथा ताम्रपात्रसंलग्नो मलो जम्बीररसेन निवर्तते, तथैव जीवात्मसम्बन्धिमलः शिवसायुज्यरसेन निवर्तते। विहिताविहितकर्मवशात् प्राणिनां जनिः, अतः कर्माण्येवानुबन्धकत्वात् पाशाः। प्रलये सर्वं जगदस्यां माति क्षयं याति, यद्वा सर्वं यतो मयति, उत्पद्यते सा माया, इति व्युत्पत्तिद्वयेन द्विविधो मायापदार्थो लक्ष्यते।

शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये।
विकृतौ व्यक्तिमायाति सा कार्येण मलादिना[१]।।

---

१. सर्वदर्शनसङ्ग्रहे।

उत्पत्तौ लये च कारणीभूता मायाऽपि बन्ध एव। वस्तुतस्तु पशुपत्यतिरिक्ता यावन्तोऽपि जागतिकाः पदार्थाः समेऽपि बन्धभूतत्वात् पाशा एव सन्ति। रागमोहादयो विवेकावरोधकत्वान्मला उच्यन्ते।

मोहो मदश्च रागश्च विषादः शोष एव च।
वैचित्यश्चैव हर्षाख्यः सप्तैते सहजा मलाः[१]।।

यावन्तोऽपि विषया रागमोहाद्युत्पादकाः समेऽपि पाशा एव सन्ति। उक्तञ्च—

चतुर्विंशतितत्त्वानि माया कर्म गुणा अपि।
विषया इति कथ्यन्ते पाशा जीवबन्धनात्[२]।।

इमे पाशाः शिवाधीनाः शिव एव पाशमोचकः। शिवांशभूता जीवाः पाशबद्धत्वात् पशव उच्यन्ते।

ब्रह्मादिस्तम्बपर्यन्तान् पशून् बद्ध्वा महेश्वरि।
पाशैरेतैः पतिश्चाहं कार्यं कारयति स्वकम्[३]।।

**आभासस्वरूपविमर्शः**

अचिन्त्यमव्यक्तमनेकरूपं शिवादभिन्नं जगतः स्वरूपम्।
बिभर्ति तत्त्वे निहितात्मभेदमण्डे मयूरस्य यथा शरीरम्।।

यथा मयूरस्य चित्रविचित्रं पिच्छकलापं मयूराण्डेऽभिन्नरूपात्मतया निहितं कालशक्त्या परिच्छिन्नं पश्चात्तत आविर्भूतं सत् प्रकाशते। तथैव समस्तं जगद् महेश्वरेऽविभिन्नरूपतया विद्यमानं शिवशक्त्याऽऽविर्भूतं पृथग्भूतमिव भासते। सकलस्यापि जगतोऽधिष्ठानं चितिः संविदेवास्ति। चित्रविचित्रः परिवर्तनशीलोऽयं जगत आभासश्चितेराविर्भावमात्रम्। जगतो यानि प्रकटरूपाणि प्रमेयः, प्रमाता, ज्ञानं, ज्ञानसाधनम्, इन्द्रियाणि चेति परमचितेराभासमात्रम्। आभासो नाम ईषत् सङ्कुचितं भासनं प्रकाशनं वा सर्वविधाविर्भावः। जगति यत्किमपि विद्यमानं वर्तते, तत्सर्वमाभासस्य विन्यासमात्रमेवास्ति। आभासरूपा एव जडचेतनपदार्थाः।

यथा स्वच्छे दर्पणे चित्रविचित्रनगराणि ग्रामादीनि च प्रतिबिम्बितानि भवन्ति। तेषां प्रतिबिम्बानि दर्पणादभिन्नान्यपि परस्परं दर्पणाद्भिन्नानीव प्रतीयन्ते।

---

१. तत्त्वनिर्णये; २. पारमेश्वरागमे-१२.६३।
३. तत्रैव-१२.६४।

निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः।
अमिश्रास्तद्वदेकस्मिन् मात्रे विश्ववृत्तयः[१]।।

तत्रोभयोरियान् भेदः, दर्पणोऽचेतनस्तस्य स्वान्तःस्थितस्य प्रतिबिम्बित-वस्तुनो बोधो नैव भवति। किन्तु महेश्वरस्तु चेतनः परमसंविद्विमर्शशक्त्या सर्वं जानाति।

अन्तर्विभाति सकलं जगदात्मनीह
यद्वद् विचित्ररचनामुकुरान्तराले।
बोधः पुनर्निजविमर्शनसारयुक्त्या
विश्वं परामृशति नो मुकुरस्तथावत्[२]।।

तत्र मुकुरायमाणा चितिः शिवस्य पराख्यशक्तिरेव तस्यामेव प्रतिबिम्बते जगत्। बिम्बभूतः शिवः प्रतिबिम्बश्च जीवः, स च शिवाभिन्नोऽपि भिन्न इव प्रतिभाति। सर्वभोगेषूपरतोऽसङ्गः शिवः कर्तृत्वकरणत्वादिहीनः साक्षिमात्रम्। जीवश्च कर्मफलभोक्ता भोगेष्वासक्तः कर्ता चेत्युच्यते। औपाधिको भेदो बिम्बप्रतिबिम्बयोः। कर्तृत्वाद्युपाधिना प्रतिबिम्बो जीवः, निरुपाधिको बिम्बः शिवः।

त्वयि दर्पणभूतायां बुद्धो जीवोऽहमीश्वरः।
असङ्गः प्रतिबिम्बोऽस्मि न भोक्ता केवलः शिवः[३]।।

चितिरेव भगवती स्वच्छन्दस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरति। यद्यपि कार्यकारणयोर्भेदः सर्वसिद्धान्ताभिमतः, कार्यं हि कारणाद्भिन्नं भवति, तयोरेकत्वे कार्यकारणभावासम्भवः। तदुच्यते कार्यात् पूर्वनियतवृत्तिः कारणमिति नियमोऽत्र नाभिमतः चितेः स्फुरणं जगदुन्मेष उभयं यौगपद्येन सम्पद्यते, नास्ति कश्चित् क्रमः।

**चितेः प्रकाशः सर्वत्र**

सर्वमपि प्रपञ्चजातं चिदात्मकमेव तन्त्रागमेषु प्रसिद्धम्। तथा च चिदात्मैव शिवोऽन्तःस्थितं प्रपञ्चजातं स्वेच्छया स्वमितौ स्वाधारे स्वस्मिन् स्वप्रकाशे च बहिः प्रकाशयति। बहिः प्रकाशनमत्रान्तरवस्थितस्य प्रकटीकरणम्। तत्र यथा योगी सङ्कल्पमात्रेणैव यत्किमपि वस्तु बहिराभासयति, स किमप्युपादानं नापेक्षते, तथैव चितिरपि विनोपादानेनैवान्तःस्थितमर्थजातं बहिराभासयति।

---

१. तन्त्रालोके–३.४; २. ई.प्र.वि.वि., पृ. १६८।
३. पारमेश्वरागमे–२१.५१।

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्।।
स्वामिनश्चात्मसंस्थस्य भवजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते[१]।।

यथा कुम्भकारो मृत्तिकामादायैव घटनिर्माणे प्रवर्तते, तथा नात्र व्यवस्था। बाह्याभासो महेश्वरकल्पनानां बहिः प्रक्षेपमात्रमेवास्ति। ये पदार्था महेश्वरस्य ज्ञानस्वरूपाः सन्ति, ते च तस्येच्छया ज्ञेयरूपात्मनि बहिः प्रकटतां यान्ति। ते चाहंस्वरूपाः सन्ति, ते चेदमात्मनि विश्वस्वरूपे वा आविर्भवन्ति। जीवानां भोगसंसिद्धये महेश्वरस्य ज्ञानरूपपदार्था ज्ञेयरूपतामुपगच्छन्ति। उक्तश्च पदार्थस्योदयक्रमः—

यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते।
क्रियाकरणसंयोगात् पदार्थस्योदयो भवेत्[२]।।

शिवस्वरूपा शक्तिरेव चितिर्यस्यां प्रतिबिम्बते सर्वम्। सा च शिवाद्भिन्नाऽपि शिवस्वरूपभूतत्वात्तद्रूपैव। न च बिम्बभूतशिवाद्भिन्नः प्रतिबिम्बभूतो जीवः, प्रतिबिम्बस्य बिम्बातिरिक्तसत्ताशून्यत्वात्। बिम्बभूतः शिव एव कर्तृभोक्तृत्वाद्यु-पाधिना प्रतिबिम्बितचैतन्यं जीवः। अविद्याकल्पितो हि जीवेशयोर्भेदः, न तु वास्तविकः।

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि।
तदन्यकल्पना ज्ञानमज्ञानं प्रकृतेर्गुणः[३]।।

अन्तर्निहितं पदार्थजातं बिन्द्वात्मना बिम्बीभूतं चिदात्मके शिवस्वरूपे भासते। तत्र शिवस्य चित्स्वरूपं तस्मिंश्चान्तर्भूता जडपदार्था बाह्यरूपेण प्रकाशन्ते, अतस्ते शिवस्य शरीरत्वमादधते। यश्च चैतन्यसहितः प्रतिभासः स जीवः। तत्र चितिरेव शिवस्योभयरूपतां प्रकुरुते। सैव सृष्टेः सहकारिकारणं तदात्मकमेव सर्वं जगत्।

शिवोऽहं त्वमुमे शक्तिस्त्वमेवाहमहं त्वमु।
स्त्र्यात्मा त्वं वै पुमात्माहं शिवशक्त्यात्मकं जगत्[४]।।

शिवोऽद्वितीयः सर्वव्यापकः सर्वनियन्तेत्युच्यते। तस्यैव स्वरूपवैभवमविद्या मायाशक्तिरित्यभिधीयते। स्वीययैवेच्छाशक्त्या एकः सन्नप्यनेकरूपतामापद्यते।

---

१. स्पन्दप्रदीपिकायाम्, पृ. ११३;  २. तत्रैव, पृ. ९०।
३. पारमेश्वरागमे–२१.६६;  ४. तत्रैव–२१.५०।

सर्वव्यापकत्वादेतद्विश्वं तस्य वपुः। तदन्तर्भूताश्चेतनांशविशिष्टत्वाज्जीवास्तदंशाः। अतो जडचेतनोभयात्मकं जगत् शिवतत्त्वरूपमेव न तद्भिन्नं किञ्चित्।

सृष्ट्वा तमेकमात्मानमनेकं कुरुते पुनः।
एकीकृत्य ग्रसति यस्तस्मै रुद्र नमोऽस्तु ते[1]।।

**शिवाद्वैतविमर्शः**

शक्तिः शिवस्वरूपैव तन्निर्मितजगत्तनुः।
कर्तृत्वादिविशिष्टोऽसौ तदंशो जीव उच्यते।।

अविद्यावशगो जीवस्तन्निवृत्तौ स्वयं शिवः।
अतस्तयोर्न भेदोऽस्ति नांशिनोंऽशः पृथक् क्वचित्।।

सर्वं हि शिवमयं न तद्भिन्नं क्वचित्। माया अविद्या शक्तिरिति नामभिर्लोके ख्याता जगत्सृष्टिस्थितिसंहारनिमित्तं मूलप्रकृतिः शिवस्वरूपमेवास्ति। वस्तुतत्स्वरूपयोरभेदात् शिवाभिन्ना शक्तिः। प्रपञ्चस्तु शिवशरीरत्वेनोच्यते शरीरशरीरिणोरभेदात्तदपि शिवाभिन्नमेव। औपाधिकभेदेन शिवतत्त्वस्यैव जीवपदेन व्यपदेशः। स च जीवस्तदंश एव अंशांशिनोरभेदात्तयोरभेद इत्युच्यते। यत् किमपि जगति प्रतीयते तत्सर्वं शिवतत्त्वमेवास्ति। उक्तञ्च—

अहमेकः परमानन्दः परमात्मा सदाशिवः।
सृष्ट्वा मायामयीं शक्तिं तथाऽहं षड्विधोऽभवम्[2]।।

अत्र सिद्धान्ते पक्षद्वयमुरीकृतम्। शिवाद्वैतसिद्धान्तपक्षः शक्तिविशिष्टाद्वैत-सिद्धान्तपक्षश्च। तत्र शिव एव सर्वत्रानेकशो भासते, प्रतीयमानं सर्वं पदार्थजातं शिवाभिन्नमिति पक्षे शिवाद्वैतवादः प्रतिपद्यते।

**शक्तिविशिष्टाद्वैतविमर्शः**

चिदात्मशक्त्या परमेश्वरोऽसौ सर्वज्ञतारूपमुपेत्य नित्यः।
अचित्स्वभावेन शिवो हि शक्तेः कर्तृत्वमासाद्य सदा नियन्ता।।

शिवांशभूतः सबलोऽपि जीवः स्थूलात्मशक्त्या परितोऽनुबद्धः।
विशिष्टयोः शक्तिभिदा न काचित् नान्यस्तथा जीवपरात्मभेदः।।

---

१. पारमेश्वरागमे–१५.१।
२. तत्रैव–६.५।

शैवागमेषु वीरशैवनाम्ना प्रसिद्धः शक्तिविशिष्टाद्वैतसम्प्रदाय आगमशास्त्रेषु सुमहत्त्वं बिभर्ति। अयञ्च शैवदर्शनसिद्धान्तप्रतिपादनपरत्वादागमत्वं भजमानोऽपि वेदान्तशास्त्रस्य मुख्याङ्गत्वेन ख्यातो लोके। तत्र शिवाभिन्ना तत्स्वरूपा सूक्ष्मचिदचिद्विशिष्टा स्थूलचिदचिद्विशिष्टा हि शक्तिः शिवस्वरूपं शिवांशभूतं जीवञ्च ज्ञानेच्छाक्रियादिना व्याप्नोति, अतः शक्तिविशिष्टः शिवः शक्तिविशिष्टो जीवश्चोच्येते। तयोरद्वैतं शक्तिविशिष्टाद्वैतमित्यभिधीयते। उक्तञ्च—

ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।
पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः[१]।।

शिवस्वरूपा सूक्ष्मचिदचिद्विशिष्टा शक्तिर्धर्मः, धर्मी शिवः, धर्मधर्मिणो-रभेदाच्छिवाभिन्ना चास्ति। आशक्ति पृथिवीपर्यन्तं सकलं हि जगत् शिवतत्त्वादेव समुत्पद्यते। तत्र चराचरात्मकमिदं जगत् शक्तिस्वरूपमेव, नान्यत् किञ्चित्। अग्नितद्गतदाहजनकत्वशक्तिवच्छिवशक्त्योरभेदः। सूक्ष्मचिदचिदात्मिका शक्ति-र्विमर्शरूपा। तत्र चिदात्मिका सर्वज्ञतारूपा, अचिदात्मिका च सर्वकर्तृत्वरूपा। अनयोराश्रयभूता विमर्शशक्तिरित्युच्यते। सा जगन्निमित्ततया चराचरात्मिका सत्त्वरजस्तमोगुणा चास्ति। तयोपहितं शिवतत्त्वमिति।

सैव शक्तिस्तमोगुणप्रधाना जडात्मिका मायेति कथ्यते। यथा सूर्यरश्मयः सूर्यकान्तसमन्विता अग्निरूपतामापद्यन्ते, तथैव शिवस्य विमर्शात्मिका शक्ति-र्मायाशक्तिमभिश्रिता सुखदुःखमोहाद्युत्पादिका त्रिगुणात्मिका प्रकृतिरित्युच्यते। तद्विशिष्टः शिवप्रकाशरूपः शिवांशभूतो हि जीवः। अतः शक्तिविशिष्टः शिवः शक्तिविशिष्टश्च जीवः, अंशांशिनोः प्रकाशप्रकाशकयोश्चाभेदात् शक्तिविशिष्टा-द्वैतमिति सिद्ध्यन्ति।

तथ्यातथ्यविचारणाश्रितमिदं तन्त्रागमस्यान्वितं
तत्त्वं सारसमन्वितं बुधवरैर्यत् ख्यापितं सिद्धये।
गूढं शास्त्रनिगूहतामधिगतं तच्छोधलेखे महत्
सारल्येन विभावितं जनिजुषां बोधोपकाराय वः।। इति।



१. नि. १८ का.।

# वाक्यस्वरूपविचारः

**डॉ. राममनोहरमिश्रः**
·उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



लोकेऽर्थबोधजनकस्य वाक्यस्य स्वरूपविषयिणी चर्चा प्राचीनकालत एवोपलभ्यते। यद्यपि तत्स्वरूपविषये[1] बहवो वादाः प्रचलिताः सन्ति, तथापि कात्यायनकृतवाक्यलक्षणमेवाद्यमिति मन्यते मनीषिभिः। कात्यायनेन तु वाक्यस्वरूपमित्थं प्रतिपादितम्—

'आख्यातं साव्ययकारकविशेषणं वाक्यम्। एकतिङ्'[2]।

इदमेव वाक्यलक्षणमाद्यमिति स्वीक्रियते पतञ्जलिना, अत एव तत्कृतेऽपूर्वशब्दस्य प्रयोगो विहितस्तेन। तथा चोक्तम्—

'इदमाद्यापूर्वं क्रियते वाक्यसंज्ञासमानवाक्याधिकारश्च'[3]।

महाभाष्यकारोक्तौ प्रयुक्तेनापूर्वशब्देन ध्वन्यते यद् एतत्पूर्वं वाक्यस्य स्वरूपं तथोपलब्धं नासीत्, यथा कात्यायनेन लक्षितम्। एतदेव वाक्यलक्षणं मनसि निधाय कात्यायनोऽयं वाक्यकारेति नाम्नाऽऽख्यायते जनैः। व्याकरणसम्प्रदाये वार्तिकशब्दो वाक्यशब्दश्च पर्यायेण प्रयुज्येते। उक्तञ्च हर्षचरितटीकायां शङ्करेण—

'वाक्यं विवरणं वार्त्तिकञ्च। यत् करणात् कात्यायनो वार्त्तिककार उच्यते'[4]।

---

१. आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्त्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः।।
पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्।। (वाक्यपदीयम्–२।१-२)

२. वार्त्तिकं, म. भा. , २।१।१;    ३. म. भा. २।१।१, पृ. ३३८।

४. शङ्करः, हर्षचरितटीका, पृ. १३३।

जैमिनिना प्रोक्तं वाक्यलक्षणमप्यतीवप्राचीनतममित्यत्र नास्ति कश्चन विवादः, अतो द्वयोर्जैमिनिकृतकात्यायनकृतवाक्यलक्षणयोः पूर्वापरविचारः, मादृशां कृतेऽतीव दुष्करः, तथापि महाभाष्यकृता पतञ्जलिना कात्यायनकृताय वाक्यलक्षणाय कृतेनाद्यापूर्वशब्दप्रयोगेण कात्यायनकृतमेव वाक्यलक्षणं प्राचीनतरं, शास्त्रीयञ्चेति वैयाकरणसम्मतिः।

लौकिकं वाक्यस्वरूपन्तु कात्यायनात् पूर्वमेव व्याडिना स्वकीये सङ्ग्रहे विचारितम्; किन्तु तच्छास्त्रीयं नास्तीति विदुषां मतिः। जैमिनिना कात्यायनेन च कृतमपि वाक्यलक्षणं शास्त्रीयं लौकिकं वेति विषये विवादो दृश्यते विचारकाणाम्। तत्र मीमांसासूत्रस्य प्राचीनतरैष्टीकाकारैर्जैमिनिना प्रोक्तं वाक्यलक्षणं लौकिकमेवेति मन्यते स्म; किन्तु कुमारिलभट्टैस्तदनुयायिभिश्च तल्लक्षणं शास्त्रीयमेव मन्यते। व्याकरणसम्प्रदाये तु भर्तृहरि[1]-कैयट[2]-भोज[3]- विठ्ठलाद्याचार्यैः[4] कात्यायनकृतं वाक्यलक्षणं शास्त्रीयमेव स्वीक्रियते। नागेशेन[5] तु तस्य लौकिकत्वं, लोकशास्त्रोभयसाधारणत्वं वा स्वीकृतं वर्तते।

महाभाष्यकृता तु वार्त्तिककारोक्तस्य वाक्यलक्षणस्य व्याख्यानं कुर्वता 'सक्रिया विशेषणञ्चेति। वक्तव्यम्' इत्युक्तम्। तेन सुष्ठु पचति, दुष्ठु पचतीत्यादीनां वाक्यत्वं सिद्ध्यति। एवमेव, उच्चैः पचति, ओदनं पचति, मृदु विशदमोदनं पचति, ब्रूहि ब्रूहि इत्याद्युदाहरणानि बोध्यानि।

अत्र लक्षणे साव्ययकारकविशेषणमित्यत्र प्रत्येकं, समुदितं वा वाक्यमित्यत्र नास्ति कश्चनाग्रहः। यद्यपि तत्राव्ययस्यापि कारकत्वं विशेषणत्वञ्च सम्भवति, तथापि तस्य पृथगुक्तिः स्पष्टप्रतिपत्त्यर्थमेव। सक्रियाविशेषणञ्चेति प्रत्यासत्त्या कारकस्यैव यद् विशेषणं तद् गृह्यते, न तु क्रियायाः। आख्यातशब्देन च क्रियाप्रधानत्वं लक्ष्यते, तेन देवदत्तेन पठितव्यमित्यादौ वाक्यत्वं सिद्ध्यति।

---

१. निघातादिव्यवस्थार्थं शास्त्रे यत् परिभाषितम्। (वाक्यपदीयम्–२।३)

२. नानाकारकात् निघातादिनिवृत्तये, क्वचित् प्रवृत्तये च समानवाक्ये निघातयुष्मदादेशा वक्ष्यन्ते। तत्र लौकिकवाक्यग्रहणनिषेधार्थं वाक्यं परिभाष्यते। (प्रदीपः, म. भ. २।१।१)

३. वार्त्तिककारस्तु....अन्यदेव लौकिकात् पारिभाषिकं वाक्यलक्षणमारभते। न च तेन लौकिको व्यवहारः सिध्यतीति उपेक्ष्यते। (शृङ्गारप्रकाशः, पृ. १।३६)

४. वाक्यसंज्ञा पारिभाषिकी महाभाष्ये उक्ता। (प्रक्रियाप्रवादः, प्रथमो भागः, पृ. ७१)

५. परे तु आख्यातं सविशेषणं वाक्यमिति लक्षणं लौकिकमेव, पचति भवतीत्येतत् साधारणम्। यत्तु कैयटेनास्य पारिभाषिकत्वमुक्तं तत् प्रमादात्।.....तस्माद् आद्यलक्षणं वाक्यस्य टेरित्येतत् शास्त्रलोकसाधारणम्। (उद्द्योतः, म. भा. २।१।१, पृ. ४५)

सविशेषणमित्यस्य साक्षात्परम्परया वा यद् विशेषणं तत्सहितमित्यर्थो बोध्यः। तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्या इत्यादेः समानवाक्यस्थत्वं सिद्ध्यति। एतदेवाभिप्रेत्यामरकोशे कारकान्वितक्रियावाचकस्य सुबन्तचयतिङन्तचयसुप्तिङन्त-चयान्यतमस्य वाक्यत्वं प्रतिपादितम्। उक्तञ्च—

'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता'[१]।

कारकञ्च तिङन्तवाच्यं तदतिरिक्तवाच्यं वेति न कोऽप्याग्रहः। एतदेवैकोद्देश्यकैकविधेयकत्वगर्भमेकवाक्यलक्षणं भर्तृहरिणापि प्रतिपादितम्। भणितञ्च तेन—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते[२]।।

तत्र वाक्यमित्यस्यैकं वाक्यमित्यर्थः। अत एव 'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति' जैमिनिसूत्रम्, उद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेद इति मीमांसकोद्घोषश्च सङ्गच्छते।

वाक्यलक्षणभूतेऽस्मिन् वार्त्तिके 'आख्यातमिति' पदमाश्रित्य नागेश-कैयटयोर्मतभेदो दृश्यते। कैयटस्तु आख्यातमित्यत्रैकत्वस्य विवक्षणात् पचति भवतीत्यादौ आख्यातद्वित्वस्थले 'तिङ्ङतिङः'[३] इत्यनेन निघातं नेच्छति। तथा चोक्तं प्रदीपे—'आख्यातमिति चैकत्वं विवक्ष्यते, लक्षणविधानसामर्थ्यात्।....भवति पचतीत्यादौ सत्यपि साध्यसाधनभावे आख्यातयोर्द्वित्वात् समानवाक्यत्वा-भावान्निघाताप्रसङ्गात्'[४]।

नागेशास्तु—आख्यातमित्यत्रैकत्वस्य विवक्षणे 'व्यक्तिपक्षे न ब्राह्मणं हन्यादित्यादावेकं ब्राह्मणमहत्वा कृती स्यात्' इति भाष्योक्तन्यायेनैकस्यैवाख्यातस्य वाक्यत्वं स्यान्नाख्यातान्तरस्येत्यादिदोषात् कैयटोक्तं खण्डयन्ति। भणितञ्च—

[५]'यदप्याख्यातमित्यत्रैकत्वविवक्षां कृत्वा पचति भवतीत्यत्र वाक्यत्ववारणं तेन कृतम्'। तदपि न, आख्यातत्वपर्याप्त्यधिकरणमेकमेवेति प्रागुक्त-भाष्यरीत्यैकत्वविवक्षायाः फलाभावात्। किञ्च व्यक्तिपक्षे न ब्राह्मणं हन्यादित्यादावेकं ब्राह्मणमहत्वा कृती स्यादिति भाष्योक्तन्यायेनात्रैकत्वविवक्षायामेकस्यैवाख्यातस्य

---

१. अमरकोषः–१।६।२;
२. वाक्यपदीयम्–२।४।
३. पा. सू., ८।१।२८;
४. प्रदीपः, म. भा., २।१।१, पृ. ३३६।
५. उद्योतः, म. भा., २।१।१।

वाक्यत्वं बोधितं स्यान्नाख्यातान्तरस्येति दोषात् कात्यायनेनोक्ते शास्त्रीये वाक्यलक्षणे विप्रतिपत्तिरेका समापतति। तथा हि—उक्तलक्षणानुसारेण 'व्रजानि देवदत्त' इत्यत्र देवदत्तस्याव्ययकारकविशेषणत्वाभावेन वाक्यत्वाभावात् 'आमन्त्रितस्य च' इत्याष्टमिकेन पाणिनिसूत्रेणेष्टनिघातो न स्यात्।

अपरा चापत्तिरियमेव प्रतिभाति, यत् 'पूर्वं स्नाति पचति ततो व्रजति' इत्यत्र 'तत इति पदानन्तरं व्रजति-क्रियायाः प्रयोगेण वाक्यभेदान्निघातो न सम्भवति; किन्तु इमे आपत्ती अविचारितरमणीये एव, यतो हि—लक्षणे साव्ययं सकारकञ्चेति सामान्येनैवाभिधीयते, अतः सक्रियाविशेषणमप्याख्यातं वाक्यत्वं भजत एव। यतो हि—'देवदत्त व्रजानि' इत्यत्र देवदत्तं सम्बोध्य व्रजति-क्रियायाः प्रयोगात् सापि विशिष्टैव। अतो देवदत्तपदं क्रियाविशेषणम्। यद्यपि 'व्रजति देवदत्तः' इत्यत्र प्रयुक्ता व्रजति-क्रिया 'व्रजानि देवदत्त' इत्यत्र प्रयुक्त-व्रजति-क्रियातो भिन्ना वर्तते, तथापि क्रियाविशेषणमपि द्विविधं दृश्यते, समानाधिकरणा-समानाधिकरणभेदात्। सामानाधिकरण्यरूपेण क्रियाविशेषणं 'शोभनं करोती'त्यादौ, वैयधिकरण्यरूपेण व्रजानि देवदत्तेत्यादौ च। अतो व्रजानि देवदत्तेत्यादौ देवदत्तपदस्य क्रियाविशेषणत्वेन वाक्यत्वसम्भवात् निघातोऽपि सम्भवतीति नास्ति काचिद् विप्रतिपत्तिः।

एवमेव 'पूर्वं स्नाति, पचति ततो व्रजति' इत्यादावपि स्नानादिक्रिया व्रजति-क्रियाया विशेषणम्। यथा अनेके क्त्वान्तशब्दास्तिङन्तस्य विशेषणं, तथैव तिङन्तमपि तिङन्तस्य विशेषणं सम्भवत्येव। एवञ्च—'स्नात्वा, भुक्त्वा, पीत्वा व्रजति' इत्यादौ स्नानादिना व्रजनक्रिया विशिष्टा भवतीति तत्र वाक्यभेदो न भवति, तथैवापद्यमानेऽपि वाक्ये स्नानादिक्रियाया व्रजतिक्रियाविशेषणत्वाद् वाक्यभेदा-भावेनेष्टो निघातो भवत्येवेति न कश्चन दोषः, कात्यायनोक्ते वाक्यलक्षणे।

व्याकरणशास्त्रे वार्तिककारोक्तवाक्यलक्षणातिरिक्तस्य जैमिनिना प्रोक्तस्य वाक्यलक्षणस्यापि चर्चा दृश्यते। यजुषोऽवसाननिश्चये वाक्यं परिभाष्यते जैमिनिना—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्'[१]।

तस्यायमर्थः—एकार्थकः पदसमूहो वाक्यम्, स च विभक्ते सति साकाङ्क्षः स्यात्।

मीमांसासूत्रकारेणोक्तं वाक्यं व्याकरणशास्त्रे नाद्रियते, यतो हि तत्स्वीकारे 'अयं दण्डो हरानेन', 'ओदनं पच, तव भविष्यति' इत्यादौ प्रयोज्यस्यैक्येन

१. मीमांसासूत्रम्।

वाक्यत्वसम्भवात् तत्रानिष्टोऽपि निघातः स्यात्। अमुमेव दोषं मनसि निधायोक्तं पुण्यराजेन—

'तस्माद् वार्त्तिककारीयमेव वाक्यलक्षणं ज्यायः'[1]।

कैयटास्तु जैमिनिनोक्तं वाक्यलक्षणं लौकिकं वार्त्तिककारोक्तञ्च वाक्य-लक्षणं शास्त्रीयमित्युद्घोषयन्ति स्म। उक्तञ्च तैः—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यादिति लौकिकं वाक्यलक्षणम्। इह तु वाक्यं पारिभाषितम्, आख्यातं साव्ययकारकविशेषणमिति'[2]।

एवञ्च वाक्यलक्षणमुद्दिश्य लौकिकं शास्त्रीयञ्चेति द्वैविध्यं प्रतिपादितमाचार्यैः। तत्र वार्त्तिककारोक्तं वाक्यलक्षणं शास्त्रीयमिति तद्व्याख्यातम्। इदानीं लौकिकं वाक्यलक्षणमपि प्रस्तूयते।

**लौकिकं वाक्यलक्षणम्**

लोकव्यवहारे स्पष्टार्थप्रतिपादकस्य वाक्यस्य स्वरूपविषये प्राचीनकालत एवाचार्याणां विवादो दृश्यते। आचार्यभर्तृहरिणा तावत्कालपर्यन्तं प्रसिद्धानां वाक्यसिद्धान्तानां सङ्क्षेपः स्वकीये वाक्यपदीये प्रकटितः। वाक्यवादान् परिहरन्नाह भर्तृहरिः—

आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्त्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः।।
पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्[3]।।

कारिकाद्वयव्याख्यात्रा पुण्यराजेनाष्टौ वाक्यविकल्पास्तत्र प्रदर्शिताः—

१. आख्यातशब्दो वाक्यम्।
२. सङ्घातो वाक्यम्।
३. सङ्घातवर्त्तिनी जातिर्वाक्यम्।
४. एकोऽनवयवः शब्दो वाक्यम्।
५. क्रमो वाक्यम्।

---

१. पुण्यराजः, वा. प., २।३; २. प्रदीपः, म. भा., ८।१।१८।
३. वा. प., २।१-२।

६. बुद्ध्यनुसंहृतिर्वाक्यम्।

७. आद्यपदवाक्यम्।

८. पृथक्साकाङ्क्षसर्वपदवाक्यम्।

एते वाक्यविकल्पाः केषां दार्शनिकानामिति विषयेऽपि विवदन्ते वादिनः। तत्र पुण्यराजोऽष्टविकल्पेषु केषाञ्चित् सम्बन्धं मीमांसादर्शनेन स्वीकरोति। तन्मतानुसारेण सङ्घातवादः क्रमवादश्चेति वाक्यविकल्पद्वयमभिहितान्वयवादिनाम्; आख्यातशब्दवादः, आद्यपदवादः, पृथक्साकाङ्क्षसर्वपदवादश्चेति वाक्यविकल्पत्रयमन्विताभिधानवादिनां वर्तते। किन्तु प्रसिद्धमीमांसकाः कुमारिलभट्टशालिकनाथसुचरितमिश्रादय एतेषां वाक्यविकल्पानां सम्बन्धं व्याकरणदर्शनेनैव स्वीकुर्वन्ति, वाक्यपदीय एव तेषां चर्चादर्शनात्। भवतु नाम, केषाञ्चिदपि दार्शनिकानां भवन्तु एते वाक्यविकल्पाः; किन्तु व्याख्यानमेतेषामपेक्ष्यत इति कृत्वा तेषां स्वरूपं यथामति विचार्यते।

**आख्यातशब्दो वाक्यम्**

वाक्यविकल्पेष्वाख्यातशब्दवाद एव प्रथमो विकल्पः। तत्राख्यातशब्देन क्रियाऽभिलक्ष्यते। तस्मात् क्रियैव वाक्यमिति तत्तात्पर्यम्। भर्तृहरिमतानुसारेण स्पष्टार्थप्रतीतिर्वाक्येनैव भवति, सापि तदैव स्यात्, यदा वाक्ये क्रिया प्रयुज्यते। तच्च क्रियापदं श्रूयमाणमनुमेयं वेत्यन्यदेतत्; किन्तु वाक्यार्थस्य स्पष्टप्रतीत्यै क्रियासत्ताऽनिवार्यरूपेणापेक्ष्यत इति तत्सिद्धान्तः। उक्तञ्च—

'तस्मात् श्रूयमाणक्रियापदमनुमीयमानक्रियापदं वा वाक्यमेव सर्वव्यवहारेषूपपद्यत इति'[१]।

एकत्वनित्यत्ववादिनस्तु विशिष्टा क्रियैव वाक्यमिति प्रतिपादयन्ति। शब्द एक एव, सा च क्रिया, अर्थोऽप्येक एव, सा क्रियैव। अपोद्धारेण च व्यवहारायैकैवानेकरूपेण परिकल्प्यत इति भर्तृहरिणा प्रतिपादितम्। तथा हि—

'एकत्वनित्यत्ववादिनस्तु मन्यन्ते, विशिष्टा हि क्रिया यथासम्भवं कालसाधनद्रव्यपुरुषोपग्रहादिभिरनुगता वाक्येनाभिधीयते। स चैकः शब्दो व्यवहाराय प्रविभक्तोद्देशः सर्वविशेषणविशिष्टः परिकल्पितविशेषणविशेष्यभेद एकस्मिन्नर्थे वर्तते। तस्य शक्तिमपोद्धृत्य व्यावहारिको विभागोऽनुगम्यते'[२]।

---

१. हरिवृत्तिः, वा. प. २।४३०;  २. हरिवृत्तिः, वा. प. २।४४७-४४८।

तत्र काचित् क्रिया नियतसाधना भवति, अतस्तस्याः प्रयोगेण कर्तुः कर्मणश्च भानं स्वत एव भवति। यथा 'वर्षति' इति क्रियाप्रयोगे 'देवो जलं वर्षति' इति कर्ता कर्म च स्वत एवाक्षिप्यते। आख्यातशब्दो वाक्यमिति वादस्यान्यपक्षोऽपि प्रतिपादितो भर्तृहरिणा। तदनुसारेण एकैव क्रिया सम्पूर्णं वाक्यम्, तथैव कानिचिद् विशिष्टानि पदान्यप्यन्तर्भूतक्रियाणि वाक्यरूपेण मन्यन्ते। भणितिश्चैतद्विषये भर्तृहरेर्वाक्यपदीये—

'वाक्यं तदपि मन्येत यत्पदं चरितक्रियम्।
अन्तरेण क्रियाशब्दं वाक्यादेव हि दर्शनात्'[१]।।

एवञ्चैतस्मिन्नाख्यातशब्दवादे विभिन्नकारकपदेभ्यो भिन्नत्वेऽपि तच्छक्तियुक्तो विशिष्टशब्दरूपः सम्पूर्णवाक्यार्थप्रतिपत्तौ समर्थ आख्यातशब्द एव वाक्यम्।

अयञ्चाख्यातशब्दवादः 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' इति कात्यायनोक्तं वाक्यलक्षणमाश्रित्यैव प्रचलित इत्यनुमीयते। यतो हि अव्ययकारकविशेषणविशिष्टमाख्यातमेव वाक्यमिति कात्यायनेन स्वीकृतमासीत्।

आख्यातशब्दवादिनस्तु सविशेषणमिति परिहृत्य केवलमाख्यातमेव वाक्यमिति स्वीकुर्वन्ति स्म। यतो हि—सविशेषणमिति पदाभावेऽपि आख्यातस्य सम्बन्धेन सत्यवसरे कारकादिविशेषणानि स्वभावतोऽध्याह्रियन्ते। यत्र तु विशेषणानामावश्यकता नानुभूयते, तत्र केवलमाख्यातमेव वाक्यमिति तेषां सम्मतिरिति प्रतीयते।

**सङ्घातो वाक्यम्**

'पदसङ्घातजं वाक्यम्' 'वर्णसङ्घातजं पदम्' इति प्राचीनोक्तिमाश्रित्यैवायं वादः प्रचलितः प्रतीयते। एकत्वानुयायिन एकार्थप्रतिपादकः पदसमूहो वाक्यमिति स्वीकुर्वन्ति। यथा सर्वाणि साधनानि मिलित्वा पाकक्रियां जनयन्ति, भृत्याश्च शिविकामुद्यच्छन्ति, तथैव पदान्यपि मिलित्वैव वाक्यार्थं प्रतिपादयन्तीति तेषामभिमतिः। उक्तञ्च शृङ्गारप्रकाशे—

'तत्र यथा त्रयोऽपि ग्रावाण उखां धारयन्ति, चत्वारोऽप्युद्यन्तारः शिविकामुद्यच्छन्ति, सर्वाण्यपि कारकाणि पाकं साधयन्ति, तथा पदान्यपि सर्वाणि वाक्यार्थमन्ववगमयन्ति'[२]।

---

१. वाक्यपदीयम्–२।३२६; २. शृङ्गारप्रकाशः, पृ. २७६।

सङ्घातवादेऽस्मिन् पदानि स्वतन्त्राण्यस्वतन्त्राणि वेति विवादमाश्रित्यैव मीमांसादर्शनेऽभिहितान्वयवादोऽन्विताभिधानवादश्चेति सिद्धान्तद्वयं प्रचलितमासीत्।

यद्यपि सङ्घातवादोऽयमभिहितान्वयवादानुरूप इति पुण्यराजाभिमतिर्वर्तते; किन्तु कुमारिलभट्टैस्तदनुयायिभिः सुचरितमिश्रैश्च समीक्षितोऽयं सङ्घातवादः भट्टानुसारेण परस्परमनुग्रहाद्यभावेन पदसङ्घातस्य वाक्यत्वं न सम्भवति। उक्तञ्च श्लोकवार्त्तिके—

'एवमाद्यन्तसर्वेषां पृथक्सङ्घातकल्पने।
अन्योन्यानुग्रहाभावात् पदानां नास्ति वाक्यता'[१]।।

तद्व्याख्यानं कुर्वता सुचरितमिश्रेण च तत्रैव काशिकाख्यटीकायामुक्तम्—

'पदानां पृथग्भूतानां सङ्घातवर्त्तिनां वा न वाक्यत्वम्। पृथग्भूतेषु हि तावद् वाक्यबुद्धिरेव नोत्पद्यते। सङ्घातकल्पनेऽपि न पृथक् सङ्घो विशेषः, तदानीमप्यन्योन्यानुग्रहस्य तेष्वनवगमात्। असति चाग्रहे वाक्यत्वे कल्पनामात्रम्, एकैकस्यापि तत्प्रसङ्गात्'।

व्याकरणसम्प्रदाये सङ्घातवादोऽयं भर्तृहरिणा चर्चितः। तत्र कुत्रचित् समीक्षितः, कुत्रचिच्च समर्थितश्चेत्ययं वादो भर्तृहरिणा। यथा—

'सामान्यार्थतिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्'[२]।।

किन्तु अग्रे यथा सावयवा वर्णा निरर्थका अपि समुदिताः सन्तः सार्थका भवन्ति, तथैव पदानि समुदितानि वाक्यरूपेण सार्थकानि भवन्तीति भर्तृहर्यभिमतिः। उक्तञ्च—

'यथा सावयवा वर्णा विना वाच्येन केनचित्।
अर्थवन्तः समुदिता वाक्यमप्येवमिष्यते'[३]।।

## सङ्घातवर्त्तिनी जातिर्वाक्यम्

सिद्धान्तेऽस्मिन् एकः शब्द एव वाक्यम्, स च शब्दो जातिनिबन्धनः स्वीक्रियते। एवञ्च शब्दजातिरेव वाक्यमिति तदभिप्रायः। यथा—आक्षेपविशेषजनिते भ्रमणे कम्पनरेचनोत्प्रेक्षणादिभेदसम्भवेऽपि तत्र एकैव भ्रमणत्वजातिरभिव्यज्यते,

१. श्लोकवार्त्तिके, वाक्याधिकरणम्, श्लोक-सं. ४९।
२. वाक्यपदीयम्-२।१५; ३. तत्रैव-२।५४।

तथैव वर्णपदवाक्यान्यपि ध्वनिव्यञ्जितानि भवन्ति। तत्र वर्णोऽपचितध्वनिव्यङ्ग्यः, तत्सदृशैरन्यैश्च ध्वनिभिर्निरवयवं पदं व्यज्यते। प्रचिततमैस्तुल्यातुल्यैश्च ध्वनिभिर्वाक्यं व्यञ्जितं भवति। उक्तञ्च हरिवृत्तौ—

'शब्दजातेरेव वाक्यत्वे भ्रमणत्वादयो दृष्टान्तत्वेनोपन्यस्ताः। अपचितध्वनिव्यङ्ग्यस्तावदेको वर्णः। तस्याभिव्यक्तिनिमित्तैः सदृशैरन्यैश्च श्रुतिभिन्नैरेकं निरवयवञ्च पदं व्यज्यते। तथैव तुल्यातुल्यैः प्रचिततमैर्वाक्यमिति'[१]।

पुण्यराजेन तु शब्दाकृतिवाक्यवादोऽयं जातिस्फोटरूपेण मन्यते स्म। उक्तञ्च—

'तेन भिन्नप्रयत्नोदीरितध्वन्यभिव्यक्तोऽयं जातिस्फोटो विलक्षण एवेति बोद्धव्यम्'[२]।

**निरवयवः शब्दो वाक्यम्**

एतत्सिद्धान्तानुसारिणो वाक्यस्यैकत्वं निरवयवत्वमविच्छिन्नत्वञ्च प्रतिपादयन्ति। तत्रावयवास्तु काल्पनिका एव। यथा चित्रमेकमेव निरवयवं पूर्णञ्च भवति। सर्वप्रथमं चित्रं परिपूर्णमेव दृष्टिपथमायाति, पश्चाच्च भिन्न-भिन्नभागेषु गच्छति द्रष्टुर्दृष्टिः। चित्रस्य ज्ञानाय ज्ञापनाय च तस्यावयवेषु विभिन्नस्वरूपेषु च दृष्टिपातो भवति, तथैव वाक्यमपि परिपूर्णं निरवयवं निराकाङ्क्षञ्च भवति, तस्य ज्ञानाय शब्दानां परस्परं सम्बन्धेन वाक्यं विश्लिष्यते। किन्तु मूलरूपेण वाक्यं निर्विभागमेव भवति। उक्तञ्च भर्तृहरिणा—

'चित्रस्यैकरूपस्य यथाभेदनिदर्शनैः।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः।।
तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः।
शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते'[३]।।

पुण्यराजस्तु वाक्यस्याक्रमरूपं स्फोटरूपेण, अनवयवपक्षं व्यक्तिस्फोटरूपेण च स्वीचकार। अभिहितञ्च तेन—

'परमार्थतस्त्वसावक्रम एव स्फोटात्मा प्रतिभासः। उपाधिवशात्तु तत्र बुद्धिर्विततेवानुगम्यत इति बोद्धव्यम्। अनेन एकोऽनवयवः शब्द इत्युद्दिष्टस्य व्यक्तिस्फोटस्य स्वरूपमुक्तम्'[४]।

---

१. वाक्यपदीयम्–२।२१, हरिवृत्तिः; २. तत्रैव–२।२१।
३. तत्रैव–२।८-९; ४. तत्रैव पुण्यराजटीका–२।१३।

वाचस्पतिमिश्रेणापि वाक्यस्य निरवयवत्वमेव प्रतिपादितम्। तत्र वर्णपद-विभागो मायाकृत एवेति तस्याभिमतिः। उक्तञ्च तत्त्वबिन्दौ—

'अनवयवमेव वाक्यम्। अनाद्यविद्योपदर्शितालीकवर्णपदविभागमस्या निमित्तमिति केचित्'[१]।

आचार्यधर्मकीर्त्तिना तु समीक्षितोऽयं निरवयववादः। तन्मते वाक्यस्यैकत्वं निरवयवत्वञ्च स्वीक्रियते चेत्तदा तत्र क्रमाभासो न सम्भवति, कालभेदोऽपि न सिद्ध्यति, एकस्यैव वस्तुनः क्रमेण ज्ञानासम्भवात्। किञ्च वाक्येऽवर्णपक्षश्चेत्तर्हि अपूर्णवाक्यश्रवणेऽपि पूर्णवाक्यज्ञानं स्यादिति। प्रतिपादितञ्चैतत्सर्वं प्रमाणवार्त्तिके।

तथा हि—'एकत्वेऽपि ह्यभिन्नस्य क्रमशो गत्यसम्भवात् कालभेद एव न युज्यते। न ह्येकस्य क्रमेण प्रतिपत्तिर्युक्ता, गृहीतागृहीतयोरभेदात्। गृहीता-गृहीताभावात्। क्रमेण च वाक्यप्रतिपत्तिर्दृष्टा। सर्ववाक्यव्याहारश्रवणस्मरण-कालस्यानेकक्षणनिमेषानुक्रमपरिसमाप्तः। वर्णरूपासंस्पर्शिनश्चैकबुद्धिप्रतिभासिनः शब्दात्मनोऽप्रतिभासनात्। वर्णानुक्रमप्रतीतेस्तदविशेषेऽप्यनुक्रमकृतत्वाद् वाक्यभेदस्यानुक्रमवती वाक्यप्रतीतिः। वर्णानुक्रमोपकारानपेक्षणे तैर्यथाकथञ्चिद् प्रयुक्तैरपि यत् किञ्चिद् वाक्यं प्रतीयेत। विना वा वर्णैस्तैरनुक्रमवद्भि-रक्रमस्योपकारायोगात्। अक्रमेण च व्याहर्त्तुमशक्यत्वात्, गत्यन्तराभावाच्च। नैव वाक्ये वर्णाः सन्ति। तदेकमेव शब्दरूपं व्यञ्जकानुक्रमवशादनुक्रमवद् वर्णविभागवच्च प्रतिभातीति चेत्, अनुक्रमवता व्यञ्जकेनाक्रमस्य व्यक्तिः प्रयुक्ता, व्यक्ताव्यक्तविरोधात्। अवर्णभागे च वाक्येऽसकलश्राविणोऽसकलवाक्यगतिर्न स्यात्, एकस्य शकलाभावात्। सकलश्रुतिर्न वा कस्यचित्'[२]।

निरवयववादमाश्रित्य धर्मकीर्त्तेराक्षेपाणां खण्डनं मण्डनमिश्रेण कृतं वर्तते स्फोटसिद्धौ। तत्र धर्मकीर्त्तेरुक्तौ द्विविधापत्तिर्दर्शिता। अखण्डवाक्यत्वे वर्णानां क्रमप्रतीतिर्न सम्भवतीति प्रथमा, एवञ्च वाक्यस्यैकांशश्रवणे तस्य ज्ञानापत्तिरथवा पूर्णवाक्यस्य ज्ञानापत्तिश्चेति द्वितीया। द्वयोरापक्षेपयोः खण्डनं चिकीर्षुणा मण्डनमिश्रेणोक्तम्—

'एकत्वेऽपि क्रमशो मतिरनुपाख्येयोपाख्येयाकारप्रलयभेदेन पुरस्तात् प्रपञ्चिता। व्यञ्जकसादृश्यात्तु शब्दान्तरग्रहणाभिमानिनः, तेन नाश्रवणं सकलश्रवणं वेति'[३]।

---

१. तत्त्वबिन्दुः, पृ. ६; २. प्रमाणवार्त्तिकम्, पृ. १२८-१२९।
३. स्फोटसिद्धिः, पृ. २३८-२३९।

एवमेव द्वितीयाक्षेपस्यापि खण्डनं तत्रैव टीकायामुक्तम्—'तेन कारणेन परमार्थभागपक्षेऽपि भागशो ग्रहणमुपपद्यत एव, न पुनः अश्रवणं वा सकलश्रवणं वापद्येतेति'[१]।

**क्रमवाक्यवादः**

क्रम एव वाक्यमिति सिद्धान्तानुसारिणामाचार्याणां मते क्रमातिरिक्तं वाक्यं नास्ति। ध्वनिसमूहैः पदसमूहैर्वा योऽर्थः प्रतिभासते, तत्र क्रम एव कारणं, न तु वाक्यम्। अत एतन्मते वाक्यस्य सत्तैव न स्वीक्रियते। क्रमस्तु कालसम्बन्धिशब्दाद् भिन्नमेव वस्तु किञ्चित्। काले प्रतिबन्धाभ्यनुज्ञेति शक्तिद्वयं शब्दस्य बाह्याभिव्यक्तौ कारणभूतम्। अतः श्रोतुः शब्दश्रवणं यथार्थानुभवश्च कालवृत्त्यधीनमेव। शब्देषु च यः क्रमबोधः, तत्र कालशक्तेः सन्निवेशो बोध्यः, यतो हि कालशक्तेर्भिन्नं क्रमवस्तु नास्ति। उक्तञ्च हरिवृत्तौ—

'क्रमो हि शब्देषु कालशक्तिरूपविशेषस्य निवेश एव। स कालात्मनो न व्यतिरिच्यते'[२]।

पदानां नियतसन्निवेशजन्यो विशेष एव वाक्यमिति चेत्तदा विशेषस्य क्रमजन्यत्वात् क्रम एव वाक्यम्। एतन्मते पदेष्वेवार्थसत्ता मन्यते, वाक्यं तु प्रलापमात्रमेव। उक्तञ्च—'तेन वाक्यमित्यवस्तुकमेवेदमभिलापमात्रं पदमेवार्थवदिति'[३]।

क्रमवाक्यवादोऽयं बहुदोषदुष्टत्वात् समीक्षितो मीमांसकैः। तथापि पदानां क्रम एव वाक्यमिति स्वीकारे पदक्रमभेदे वाक्यभेदापत्तिः। यथा—'गौः शुक्लः, शुक्लो गौरिति वाक्ययोः पदक्रमभेदाद् वाक्यभेदेऽर्थभेदापत्तिः'[४]।

'तेन वाक्यं न विद्यते'[५]।

'पदाख्या वाक्यसंज्ञा च शब्दत्वं नेष्यते तयोः'[६]।

इत्याद्युक्तिभिः क्रमस्य वाक्यत्वं खण्डितं भर्तृहरिणा। किन्तु अन्यदर्शनेषु वाक्यमिव, एतन्मते क्रमोऽपि तत्कार्यवाहक इति कृत्वा क्रमो वाक्यमित्युच्यते, न तु क्रमो वाक्यम्। यतो हि वाक्यं तु शब्दसम्बन्धि, क्रमस्तु कालसम्बन्धीति भेदः। शब्दधर्मभूतं वाक्यं, कालधर्मस्तु क्रमोऽशब्द एवेति भर्तृहरिणा क्रमवादस्याभिप्रायो वर्णितः।

---

१. स्फोटसिद्धिः, टीका, पृ. २३९; २. वाक्यपदीयम्, २।५० हरिवृत्तिः।
३. तत्रैव; ४. श्लोकवार्त्तिकम्, वाक्याधिकरणम्, श्लो. ५५।
५. वाक्यपदीयम्, २।५०; ६. तत्रैव, २।५२।

एवमेव बुद्ध्यनुसंहारवादः, आदिपदवाक्यवादः, पृथक्सर्वपदवाक्यवादश्चेति बहवो वाक्यविकल्पाश्चर्चिताः सन्ति तत्तद्दर्शनाचार्यैः; किन्तु लोकव्यवहारेषु एकार्थकस्य पदसमूहस्यैव वाक्यत्वं स्वीकृतं, समर्थितञ्च विभिन्नविचारकैर्वैयाकरणैश्चेति कृत्वाऽन्ये वाक्यविकल्पा लोकव्यवहारविरुद्धत्वात् प्रतिष्ठापदं न जग्मुः, अत एतद्दृष्ट्या केषाञ्चिदाचार्याणां वाक्यलक्षणं लोकव्यवहारप्रतिष्ठितमत्र प्रतिष्ठाप्यते। यथा—

'पदसङ्घातजं वाक्यमिति' व्याडिः।
'पदसमूहो वाक्यमर्थसमाप्तौ शक्तम्'।
(कौटिल्यः, अर्थशास्त्रम्, पृ. १७९)

'एकार्थः पदसमूहो वाक्यम्'। (काशिका, ८।१।८)
'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता'।
(अमरकोशः, काण्डः १, शब्दादिवर्गः)

'पदसमूहो वाक्यम्'। (न्यासः, ४।४)
'विशिष्टैकार्थप्रतिपादकनिराकाङ्क्षपदसमूहो वाक्यम्'।
(वैद्यनाथपायगुण्डे, चन्द्रालोकटीका, पृ. ८)

एतेषु वाक्यविकल्पेषु वैयाकरणसिद्धान्तप्रवर्तकानामाचार्यभर्तृहरीणां निरवयव-शब्द एव वाक्यमिति पक्षे पक्षपातः पुण्यराजेन वर्णितः। पुण्यराजानुसारेण निरवयव-शब्दवाक्यवाद एव स्फोटः, स च बाह्यरूपेणान्तरिकरूपेण च वाक्यमिति। अभिहितञ्च—

'टीकाकारश्चामुमेव पक्षं सूत्रकारस्याभिप्रायसमाश्रयेण युक्तियुक्तं मन्यमानो बाह्यरूप आन्तरो वा निर्विभागः शब्दार्थमयो बोधस्वभावः शब्दः स्फोटलक्षण एव वाक्यम्'।

यद्यपि भर्तृहरिणा तु वाक्यविचारप्रसङ्गे स्फोटशब्दस्योल्लेखो न कृतः, तथापि हेलाराजेनापि निरवयववाक्यवाद एव समर्थितः। उक्तञ्च—'वाक्यस्यैव निरंशस्य वाचकत्वादन्तरापदप्रतिपत्तिर्विभ्रम इति'[2]।

एवञ्च पूर्वप्रपञ्चितानां वाक्यविकल्पानां समीक्षणेन तत्तद्विशेषणविशिष्टः पदसमूह एव वाक्यमिति प्रतीयते। पदञ्च सुबन्तं तिङन्तञ्चेति, 'सुप्तिङन्तं पदम्'[3] इति पाणिनिनियमात्। सुप्प्रत्ययोत्पत्तिश्च प्रातिपदिकात्, तिङामुत्पत्तिश्च धातोरिति पाणिनिव्याकरणसिद्धान्त इति शम्।

●

१. पुण्यराजः, वा. प. २।६; २. हेलाराजः, वा. प. ३।१।
३. पा. सू., १।४।१४।

# नूतनदृष्ट्याऽन्वेषिता विश्लेषिताश्चाधिकौमुदि केचित् प्रश्नाः

**पण्डितश्रीमनुदेवभट्टाचार्यः**
नव्यव्याकरण उपाचार्यः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः,
वाराणसी



शब्दाशब्दविचारबीजजननः स्फोटालवालोदयो
धातुप्रत्ययकाण्डयुग्मलसितस्सन्ध्यादिशाखान्वितः।
भूयः साधुसुशब्दपत्रमहितो वाक्यैः फलैर्मण्डितो
जीयाद् व्याकरणाभिधस्सुरतरू रम्यद्विजाधिष्ठितः।।१।।

श्रुत्वा व्याकरणस्य केशरिमणेस्सङ्गर्जनं भीषणं
भीमस्फूर्जथुघोरघोषतुलितं काष्ठोपकाष्ठातिगम्।
ते ते शास्त्रगजा भयेन महता सन्त्रस्तचित्ताञ्चला
जग्मुस्सत्वरमेव चत्वरमहो आयातु कस्तत्पुरः।।२।।

**मुनित्रयमिति।**

चिन्त्यमिदम्, संख्याया अवयवार्थे तयप् इति कथम्? नहि मुनीनां त्रयाणां श्रीपाणिनिकात्यायनपतञ्जलिमहोदयानां परस्परं कदाऽप्यवयवरूपता सङ्गच्छते, सर्वे मुनयः स्वतन्त्राः।

समुदायस्य अन्यपदार्थत्वेऽपि त्रयाणामप्यमीषां कालिकदेशिकवैयधिकरण्यात् परस्परं समुदायत्वाभावाद् अवयवत्वासम्भवः। कथासरित्सागरोक्तैतिह्यानुसारं पाणिनिकात्यायनयोरेककालिकत्वेऽपि सर्वथा भिन्नत्वादवयत्वासम्भवः, अपि च— शालातुरीयस्तत्रभवान् पाणिनिः, प्रियतद्धिता[४] दाक्षिणात्याः इत्यधिभाष्यं स्पष्टमुक्तत्वाद् देशिकवैयधिकरण्यं तु सार्वजनीनमेव। आचार्यस्य पतञ्जलेस्तु

द्वाभ्यामाचार्याभ्यां परकालिकत्वमैतिहासिकसमयानुसारं ससारं जगत्प्रसिद्धम्। गोनर्दीयः इत्युक्त्या दैशिकवैयधिकरण्यमपि स्पष्टमेव।

बौद्धः समुदाय इति चेद्? न, व्यावर्त्याभावात्। आरोपितोऽसाविति चेद्? न, दत्तोत्तरत्वादिति दिक्।

**तदुक्तीः इति**। चिन्त्यमिदम्, 'तेषामुक्तीः' 'ता उक्तीः' इति समासद्वयाश्रयणस्यासाधुत्वात्, स्वरे भेदात्, स्वरविधौ छन्दोऽधिकाराभावात्। 'इन्द्रशत्रुः', 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभते' इति व्याकरणप्रयोजनाधिकरणीयमहाभाष्यविचारलोपापत्तेश्च। किञ्च—

तच्छब्दस्य बुद्धिस्थपरामर्शकत्वे प्राचीनपरामर्श इत्यपि चिन्त्यमेव, शब्दमात्रस्य बुद्धिस्थपरामर्शकत्वाविशेषात्, पूर्वपरामर्शोऽपि बुद्धिस्थपूर्वपरामर्श एव, अन्यथा—प्रसङ्गान्तरीयपरामर्शापत्तेः। अतो विशेषादर्शनान्न पक्षान्तरम्। किञ्च—

बुद्धिस्थपरामर्शकत्वपक्षेऽपि प्राचीनानां परामर्शकत्वे का विनिगमना? सर्वस्य जगतो बुद्धिस्थत्वाविशेषात्! यथाप्रसङ्गं सेति चेद्? अलं बुद्ध्या, सर्वं वा बुद्ध्येति व्यावर्त्याभावः। किञ्च—

जाम्बवतीहरण-पातालविजय-स्वर्गारोहण-चरकसंहिता-योगदर्शनादीनामपि मुनित्रयोक्तित्वाऽविशेषात्तदविचाराद् चान्द्र-कातन्त्र-भोजादि-मुनित्रयेतरोक्तीनामपि तत्र तत्र कौमुद्यां विचारादतिव्यात्त्यव्याप्ती इति। किञ्च—ग्रन्थभिन्ना अपि आजीवनं तेषां स्वनिष्ठो व्यवहार-व्याहार-हार-समाहार आसीदेवेति तेषामपि तदुक्तित्वाविशेषात् तद्व्यावृत्तौ यत्नो विधेयः।

किञ्च—**अस्यां वृणीष्व मनसा परिभाव्य कञ्चिद्** इति नैषधीयोक्ते कवीनां निरङ्कुशत्वेन न तत्प्रमाणकोटिमाटीकते। किञ्च-धातूनामनेकार्थत्वम्-दिवुँ-अवँ-वी-प्रभृतिषूपदेशे दर्शनेनापूर्वत्वाभावाद् निर्दिष्टार्थातिरिक्तार्थवत्त्वम्, तच्च उपसर्गादियोगे स्पष्टमेवेति, न तत्र काव्यप्रामाण्यं प्रयोजकम्। न वा परिभावयतेः बहुलतरोऽपि तथाप्रयोग इति चिन्त्यमद इति दिक्।

तथा चाह महाभाष्यप्रदीपव्याख्यायां श्रीजैयटमभट्टाचार्यपुत्रः काश्मीरकः श्रीमम्मटभट्टाचार्यानुजस्तत्रभावान् श्रीकैयटभट्टाचार्यः—को हि नाम धातु-प्राति-

पदिकादीनामर्थानुपदेष्टुं शक्तः, अर्थनिर्देशस्योपलक्षणत्वात्, तत्र धातूनामनेकार्थत्वे मुख्यं प्रमाणन्तु—

कुर्दँ खुर्दँ गुर्दँ गुदँ क्रीडायामेवेत्येवकारनिर्देशः। (द्र. २।१।१)।

सम्पूर्णश्लोकस्त्वित्थम्—

अभ्यागमद् मखभुजामिह कोटिरेषा येषां पृथक्कथनमब्दशतातिपाति।
अस्यां वृणीष्व मनसा परिभाव्य कञ्चिद् यञ्चित्तवृत्तिरनुधावति ताककीना।
(द्र. नैषधीय-चरितम ११।८)

**परिभाव्येति**—यत्तु 'परौ भुवोऽवज्ञाने' इति ज्ञापनाद् धातूनामनेकार्थत्वमिति प्राञ्चो नागेशभट्टाचार्या एतद्व्याख्यायामुपाचेरुस्तच्चिन्त्यम्, सेधतेर्गतौ-गुपेर्निन्दायाम्-कलिबली कामधेनू-वनु न नोच्यते-उपसर्गद्योतकत्वपक्ष-प्रभृति-प्रमाण-बाहुल्ये जागर्तावपि कुर्दँ खुर्दँ गुर्दँ गुदँ क्रीडायामेव इति एवकारस्यैव मुख्यप्रमाणत्वेन स्वीकारात्तदनुक्तिश्चिन्त्या। किञ्च-तदुक्तीः परिभूय च इत्येतावतैव भवदीप्सितसकलार्थलाभसम्भवे तथाप्रयोगोऽपि शिष्यदन्धनमेवेति दिक्।

**वैयाकरण इति**। चिन्त्यमिदम्, व्याकरणं विदतां सिद्धान्तस्त्वखण्ड-वाक्यस्फोट एव, न तु ग्रन्थेऽत्र प्रतिपादितप्रकृतिप्रत्ययजालजालजङ्गलमिति सर्ववादिसिद्धान्तसिद्धतया प्रकृते च तददर्शनात्। तस्मात् व्याकरणे भवा वैयाकरणाः प्रकृतिप्रत्ययास्तेषां सिद्धान्तेति व्याख्येयम्। स्वार्थेऽणि व्याकरणमेव वैयाकरणमिति। भावे वा ल्युट्।

**अथ इति।** चिन्त्यमिदम्। ग्रन्थादावेव अथशब्दप्रयोगौचित्त्यात्, तस्य मङ्गलद्योतकत्वेन तत्रैव तत्प्रयोगोपयोगात्। ग्रन्थस्य आदिमध्यावसानेष्वेव मङ्गलस्यानिवार्यत्वस्य भाष्यसमयत्वेन, प्रतिप्रकरणादि तत्करणे भाष्यसिद्धान्तापलापप्रसङ्गात्। नन्वधिसञ्जीवनि मल्लिनाथश्रीचरणैः प्रतिसर्गादि मङ्गलमाचरितमिति चेद्? न, न चोदाहरणमादरणीयमिति बृद्धोक्त्यैव समाधानात्। अत एव रघुवंशादौ घण्टापथ-सर्वङ्कषा-मेघदूत-कुमारसभव-नैषधादौ मूले व्याख्यासु वा प्रतिसर्गादि मङ्गलाभावः सङ्गच्छतेरूपमिति दिक्।

न च—**'अथ सञ्ज्ञाप्रकरणम्' इत्युक्तौ** 'मङ्गलाऽन्तरारम्भकृत्स्नकार्येष्वथो अथ' इत्यमरीयनामलिङ्गानुशासनीयफणित्या आरम्भार्थकत्वेन समाधिरिति

चेन्नोच्चैर्वाच्यम्, तथात्वेऽपि अथस्य मङ्गलार्थकत्वेऽबाधात्तस्य च प्रकृतानुपयोगात्, अर्थान्तरप्रयुक्त एवाथशब्दः श्रुत्या मङ्गलवाचकः। (द्र. शारीरकमीमांसा-जिज्ञासाधिकरणम्)। तस्मात्सञ्ज्ञाधिकारः सञ्ज्ञासम्प्रत्ययार्थ इत्यत्रैव तस्य स्वतस्सिद्धत्वेन उल्लेखानुपयोगाद्, इति यत्किञ्चिदेतत्।

**इयम् इति।** चिन्त्यमिदम्, 'इदमस्तु सन्निकृष्टम्' इत्याद्युक्त्या, इदानीं कौमुद्या अप्रणयनादविद्यमानात्सन्निकृष्टत्वस्य खपुष्पायमाणत्वात्। बौद्धं[1] तदिति चेद्? हन्त, लब्धो विश्राम इति मनुषे? व्यावर्त्याभावाद्धास्यास्पदं पदम्। इत्थं बौद्धरीत्याश्रयणापेक्षायां तच्छब्दप्रयोग एव लुप्येत!! सर्वस्य बुद्ध्या विषयीकरणमिति तव बुद्धेरौदारी!

**किञ्च**—बुद्ध्या विषयीकृत्य अप्रणीताऽप्रत्यक्षाऽविद्यमानकौमुदीदमा विमृश्यते, तर्हि हा हन्त! कथं न पूर्वसिद्ध-पूर्वप्रणीत-प्रत्यक्ष-विद्यमान-विषयताक्रान्तमुनित्रय-पूर्वाचार्यास्तद्ग्रन्थाश्च तेनेदमा परामृश्यन्ते? विद्यमानानामपि, तदिति परोक्षे विजानीयात् इति तदा तदा[2] विमर्शः, अविद्यमानकौमुद्याः कथमिदानीमिदमा इति सम्भाल्यताम्।

**सञ्ज्ञाप्रकरणम् इति।** चिन्त्यमिदम्, शक्तिग्राहकात्मकसञ्ज्ञानामपृक्त-प्रातिपदिक-भ-पद-सर्वनाम-सर्वनामस्थान-विभक्ति-प्रभृतीनामत्रासङ्ग्रहात्। यत्तु-प्राञ्चो नागेशभट्टाचार्याः प्राहुः—सन्धिकार्योपयोगिनीनां प्रथमाध्यायस्थितानामित्यादि व्याख्याय, उपलक्षणतया नेयमिदमिति, तत्तु पुनस्तरां चिन्त्यम्, तथात्वे प्रातिपदिकादीनामिव यथाप्रसङ्गं निरूपणीयत्वेन कतिपयनामासां पृथङ्निरूपणी बालीवाचालीचापलि एवेति निश्चप्रचम्। प्रथमाध्यायस्थितानामित्याद्यपि भूयस्तरां चिन्त्यम्, वैदिकप्रतिद्वन्द्वितया बौद्धाचार्यधर्मकीर्तिकीर्तितार्षपरिपाटीपाटीरोत्पाटन-पटुरूपावतारग्रन्थदर्शनदर्शितदशादिशा एव ग्रन्थयितव्ये, काले गते बहुतिथे पुनर्भुक्तोज्झितामिव तां परिपाटीमेवाश्रित्य अष्टाध्यायीक्रमं न्यक्कृत्य, तत्रापि प्रथमाध्यायस्थत्वोल्लेखः सर्वथा हास्यास्पदं पदमिति मन्मतं मतमिति निर्विवादो वादोऽस्तीति निर्विशयो विषयोऽभिचाकशीतितमामिति बुधेलिमम्।

---

१. बौद्धार्थवादोऽयं नागेशोपज्ञमेव, भाष्ये तु ईदृशे विषये भाविसञ्ज्ञानिर्देशपक्षमाश्रित्य सूत्रशाटकन्यायेन वा समाधिः।

२. तदुक्तीरित्येतद्घटकेन।

**प्रकरणम् इति।** चिन्त्यमिदम्।

शास्त्रैकदेशसम्बन्धं शास्त्रकार्यान्तरे स्थितम्।

आहुः प्रकरणं नाम ।। इति।।

लक्षितलक्षणस्य प्रकृतेऽभावात्।

सञ्ज्ञाप्रकरणमिति न शास्त्रैकदेशोऽपि तु ग्रन्थैकदेश इति स्पष्टमेव, आतश्चाधिभाष्यं सञ्ज्ञाधिकारः सञ्ज्ञासम्प्रत्ययार्थ इति कात्यायनस्तत्रभवान् सङ्गच्छते इति दिक्।

**अइउण् इति।** चिन्त्यमिदम्, मुनित्रयोक्तीः सूत्रवार्तिकभाष्याणि विमृशतां सताम् 'अयोगवाहानामट्सु णत्वम्' इति भाष्यसिद्धान्तापलाप स्पष्ट एव। एषां मुनित्रयोक्तित्वाभावेऽपि कण्ठताल्वाद्यभिघातनिषयत्वेनोपदेशत्वेऽपि इदन्दोषः प्रसरीसरीति सरीति।

**हयवरट् इति।** चिन्त्यमिदम्, अधिभाष्यं हरयवट् इति न्यासान्तरस्यापि निर्दोषोपस्थापनात् तदनुल्लेखो भाष्यापलाप एवेति।

**लण् इति।** चिन्त्यमिदम्, भवद्रीत्या अत्र प्रत्याहारार्थमित्सञ्ज्ञावश्यकत्वेन 'लँण्' इति सानुनासिकपाठस्यैव युक्तत्वात्। इतोऽप्यधिकं लँणसूत्रेऽकारश्चेत्यत्र समुपाचरिष्यतेतमामित्यधुनात्रैव सन्तोष्टव्यम्।

**ञमङणनम् इति।** चिन्त्यमिदम्, भाष्ये अत्र अन्त्यं प्रत्याख्याय, तत्प्रत्याहाराणां झभञ्ञकारेण संसाध्य, दोषराहित्या, **'ञमङणनझभञ्'** इत्यस्यैव यथोत्तरं मुनीनां प्रामाण्याच्च मुनित्रयोक्तिसाम्मत्यमिति दिक्।

**शषसर् इति।** चिन्त्यमिदम्, 'अयोगवाहानां शर्षु भष्भावजश्त्वे' इति भाष्यसिद्धान्तात् प्रकृते तथाऽनुल्लेखाद् तदपलाप स्पष्ट एवेति दिक्।

**इति माहेश्वराणि सूत्राणि इति।** चिन्त्यमिदम्, मुनित्रयं प्रणत्य, माहेश्वरसूत्रोल्लेखः कथम्? कथं वा महेश्वरप्रणामाऽनवसरः? भगवतो महेश्वरस्य मुनित्रयेणापि नमस्कार्यत्वात्। किञ्च—

माहेश्वराणि नाम-महेश्वरादधिगतानि, महेश्वरोपज्ञातानुबन्धवन्ति च।

**'तदुक्तीः परिभाव्य'** अत्र द्वयोरप्यर्थयोर्महेश्वरसूत्राणामसङ्ग्रहादनौचित्याच्च। किञ्च-**माहेश्वराणि**-महेश्वरादागतानीत्यर्थें प्राग्दीव्यतोऽणि रूपम्। वस्तुतो **'ननाद ढक्काम्'** इत्याद्युक्त्या, ढक्काया आगतानि, डमरोरागतानीति ढाक्केयानि डामरवाणीति युक्तम्, भगवदायुधानामपि भगवन्मयत्वेऽपि साक्षात्तदुल्लेख उचितः। किञ्च—

अत्र प्रमाणम्—येनाक्षरमित्यादि प्रसिद्धमेव। न चात्र महेश्वरादित्युक्त्या 'माहेश्वराणि इत्युचितमिति वाच्यम्', 'ननाद ढक्काम्' इति पूर्वोक्तनन्दिकेश्वरकृतकशिकाविरोधापत्तेः। अत एव—साक्षात्तथोल्लेख एव उचितः। किञ्च—

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये।।

इति तत्रैवोक्त्या—तेनैकदिक् इति प्रकरणात्, उपज्ञाते च इति उपज्ञाते = अपूर्वोपदेशे=ऐदम्प्राथम्या उपदेशेऽर्थे प्रथमोच्चोरितात् समर्थात् महेश्वरेण=शिवेन उपज्ञाताः= इदम्प्राथम्या उपदिष्टा इति माहेश्वराः = ण् क् प्रभृतयोऽन्त्यवर्णाः, ततो माहेश्वराः = अन्तिमा अनुबन्धहल्वर्णास्सन्ति येषामित्यर्शआद्यचि, तानि माहेश्वराणि = महेश्वरोपदिष्टानुबन्धवन्ति सूत्राणि इत्यप्यर्थः, तथात्वे केवलम् अनुबन्धवर्णा एव माहेश्वराः, न तु सम्पूर्णानि सूत्राणि, तेषामनादित्वादिति सूत्राणां माहेश्वरत्वोपपवादनं चिन्त्यम्। अनुबन्धकरणार्थश्चेति भाष्योक्त्याप्यनुबन्धेतरेषामनादित्वं ध्वन्यते, एतेन—अन्त्यानां पाणिनिमात्रप्रयोजकत्वेऽपीतरेषां सनकादिप्रयोजनकत्वेनोपदेशस्तथेति पक्षश्चिन्त्य इति दिक्।

किञ्चात्र पक्षे—लँण्णकारस्य 'व्याख्यानतः....' इति परिभाषाज्ञापनार्थत्वस्य, भवद्रीत्या च अन्योन्याश्रयपरिहारायापि हल्सूत्रस्य सत्वात्तदसङ्ग्रहादपि चिन्त्यमेतत्।

**अणादिसञ्ज्ञार्थानि**। चिन्त्यमिदम्, वर्णोपदेशस्य इष्टबुद्ध्यर्थत्वाऽनुबन्धासञ्जनार्थत्व-वृत्तिसमवायार्थत्वफलकत्वेन केवलम् अनुबन्धासञ्जनमूलकाणादिसञ्ज्ञार्थत्वोल्लेखस्य न्यूनत्वात्। '........- तेऽनुप्रासोपमादयः' इति मम्मटभट्टाचार्यदर्शनदर्शितदिशा अण्-हल्सञ्ज्ञार्थानीति वक्तुमुचितम्। ङमुडभावस्तु

विकल्पद्वयमध्यसमापतितविधेर्नित्यत्वाभ्युपगमात् पुनर्नित्यग्रहणस्य प्रायिकार्थत्वाभ्युपगमात् साध्यः, नित्यप्रहसितो नित्यप्रजल्पित इत्यादिभाष्योक्त्या तस्य तदर्थत्वं सूपपादम्, आतश्च 'श्यप्श्यनोर्नित्यम्' इति विधात्राऽपि पाणिनिना **'अपश्यती वत्समिवेन्दुविम्बम्—'**इत्यादि स्वकृतजाम्बवतीपरिणयमहाकाव्ये कवयाञ्चक्रे।

**एषामन्त्या इतः।** चिन्त्यमिदम्, अत्र—'एषामेव अन्त्या इतः' इत्यर्थे सुप्-तिङ्-तृन्-सुट्-आप्-इत्याद्यसिद्धिः। 'एषामन्त्या एव इतः' इत्यर्थे भवद्रीत्या 'लँण्' सूत्रेऽकारस्येत्त्वाऽनापत्तिः। ततश्च **लँण्सूत्रेऽकारश्चेति** न सङ्गच्छताम्। एषामन्त्या इत एव इति चेद्? 'ञमङणनम्' मकारे दोषः, प्रत्याख्यातत्वात्।

किञ्च-लँण् इति सानुनासिकनिर्देशे तेनाऽननुनासिकास्ते द्वयोर्द्वयोस्सञ्ज्ञेति न सिद्ध्येत्, सानुनासिकेन निरनुनासिकाग्रहात्।

**हकारादिषु**—अत्र सप्तम्यर्थः कः? घटकत्वं न संगच्छते, वर्णानां प्रत्येकं भिन्नानां व्यक्तीनां परस्परमवयव्यत्वाभावात्। घटकत्वम्=अवयवत्वम्। तस्मात् सम्बन्धरूपमर्थमाश्रित्य, 'हकारादीनामकार उच्चारणार्थः' इत्येव युक्तं सम्प्रति सम्प्रतिभाति। इत्सञ्ज्ञकत्वे सर्वत्रानुनासिकत्वं प्रसज्येत, तत्त्वञ्च फलाभावान्नेति। या या सञ्ज्ञा सा सा फलवतीति सिद्धान्तस्य नागरूकत्वात्। आतश्च—इत्सञ्ज्ञैवात्र नो, सिद्धश्चायम्प्रकारो हि अय्-अव्-आय्-आव्-कार-काम्यच्-लँट्-लिटँ्-लुटँ्-लेटँ-लृँट्-लोटँ्-लङँ्-,लिङँ्-लुङँ्-लृँङ्ङादौ। य्-व्-क-लादीनामुच्चारण-सामर्थ्यान्नेत्वम्। **उच्चारणसामर्थ्यात्=फलाभावात्।** फलवत्त्वादेव **'सुङस्योरुकारेकारौ जसटङपाश्चेतः'** इति सङ्गच्छते। हकारादीनान्तु उच्चारणार्थत्वमेव, अन्यथा—'रामो याति, रामो हिनस्ति' इत्यादि न सिद्ध्येदिति दिक्।

**लण्सूत्रेऽकारश्च।** इदं बहुधा चिन्त्यम्, पूर्वमेवोक्तम्, भवद्रीत्या 'लण्' इति सूत्रमेव नास्ति, अपि तु लँण्, एवञ्च—

'लँण्'सूत्रेऽकारश्च' इत्युचितम्।

किञ्च—

'लँण्'सूत्रेऽकारस्य अनुनासिकत्वमाश्रित्य **'रँ'** प्रत्याहारः (न तु र-प्रत्याहारः) साध्यते। अत्र मूलम्-'उरण् रपरः' इत्यत्र 'लपरत्वं वक्ष्यामि' इति भाष्यम्। श्रीकैयटभट्टाचार्यैः **वक्ष्यामि=व्याख्यास्यामि** इत्यर्थयित्वा प्रत्याहारद्वारा लकारोऽपि ग्राहित इत्येतत्सर्वं सार्वत्रिकमिति आ च प्रदीपादाकौमुदि स्पष्टम्। श्रीनागेशभट्टाचार्यैश्च 'अतो ल्रान्तस्य' इत्यत्र प्रत्याहारेणैवेष्टसिद्धौ पृथक्लकारोच्चारणवैयर्थ्यप्रभृतिकारणैस्तन्निरासः कृत इति शास्त्रार्थरत्नावली-वादरत्नपाणिनीयप्रदीपाभिनवचन्द्रिकासूपबृंहणं तस्य कृतं तदुद्द्योत-बृहच्छेखर-लघुशेखरग्रन्थानाश्रित्येति स्पष्टमेवेति।

अत्रेदं निवेदनम्—

अस्मद्दर्शनदर्शितदशादिशाऽत्रेत्थं बुधेलिमम्—

(क) रप्रत्याहारो नास्ति; तथात्वे माहेश्वरपाणिनीयसूत्रस्वरूपहानिः।

(ख) सति तस्मिन् तत्स्वरूपं पृथक् स्यात्।

(ग) स्वीकृते तस्मिन् प्रत्याहारस्य तत्त्वं भज्येत।

(घ) श्रीनागेशभट्टाचार्यदिशा तन्निरासे तस्य सिद्धान्तहानिः।

(ङ) महागौरवप्रसङ्गः।

(च) भाष्यपंक्तियोजना।

(छ) शैलीविरोधः।

**(क) र-प्रत्याहारो नास्ति, स्वरूपहानिः।**

गौरवन्तु पूर्वमेव साधितं यद् र-प्रत्याहारो नास्ति, यदि तत्स्वीक्रियेत, तदानी **'लण्'** इति माहेश्वसूत्रं **'लँण्'** इति सानुनासिकं कल्पनीयम्, ततश्च-**माहेश्वरसूत्रस्वरूपहानिः, अनुनासिकरूपपादमात्रात्मकत्वाद् गौरवापत्तिश्च।** सर्वत्र पारायणादौ वैदिकैः **'लण्'** इत्येव पठ्यते, न तु **'लँण्'** इति प्रथमा विप्रतिपत्तिः। एवम्—उरण् रँपर इति स्यात्।

(ख) **सति तस्मिन् तत्स्वरूपं पृथक् स्यात्—**

इदम्भावः-यद्येष प्रत्याहारोऽङ्गीक्रियेत, तदानीम्—**'रँ'** इति प्रत्याहारस्वरूपं स्यात्, न तु भवदुक्तम् **'र'** इति द्वितीया विप्रतिपत्तिः।

(ग) **स्वीकृते तस्मिन् प्रत्याहरस्य तत्त्वं भज्येत—**

इदम्भावः—प्रत्याहारो नाम **प्रत्याह्रियन्ते = संक्षिप्यन्ते** वर्णा यत्रेति अधिकरणसाधन इदंशब्दः, योगरूढत्वाच्च 'अ', 'इ', 'उ' इत्यादिसञ्ज्ञासु नातिव्याप्तिरिति नागेशभट्टाचार्यसमयः। एवञ्च—अल्पीयसा उच्चारणव्यापारेण बहूनां ग्रहणमित्येव प्रत्याहारमहिमा। घु-घ-घि-प्रभृतिषु नातिव्याप्तिप्रकारस्तु पूर्वमुक्त एव। यथा—

**'अण्'** सार्धैकमात्रात्मकेन शब्देन अ-इ-उ-इति त्रिमात्रात्मकानां बोधः, उपस्थितिस्तु प्रत्येकमित्यन्यदेतत्। सवर्णसञ्ज्ञायां जातिपक्षे तु इयताऽल्पीयसोच्चारणेन कियतां बोध इति प्रत्यक्षमेव। इदमेव प्रत्याहारस्य प्रत्याहारत्वम्। अधुना **'रँ' प्रत्याहार** (न तु र-प्रत्याहारः, तस्याऽसत्त्वात्) विषय इदं विचार्यतां यदत्र प्रत्याहारत्वं घटतेकल्पमपि न वा, तत्र रँप्रत्याहारे र् ($\frac{१}{२}$)+अ (१)+ँ ($\frac{१}{४}$) = इति (१$\frac{३}{४}$) मात्रा अर्थात् पादोनद्विमात्राः सन्ति। एवञ्च पादोनद्विमात्रात्मकोच्चारणव्यापारवानयं **रँप्रत्याहार** इति प्रत्यक्षमेव प्रेक्षावताम्। अथ च अनेन महतोच्चारणव्यापारेण—गृह्यमाणौ द्वौ वर्णौ—**र्-ल्** इत्येतौ इत्यपि स्पष्टमेव, तत्र—र् ($\frac{१}{२}$) ल् ($\frac{१}{२}$) इति योगे मात्रात्मकौ तौ इत्यपि स्पष्टमेव। एवञ्च पादोनद्विमात्रात्मकरँप्रत्याहाररूपेण महता उच्चारणव्यापारेण यदि र् ($\frac{१}{२}$) ल् ($\frac{१}{२}$) एक-मात्रात्मना एव वर्णौ गृह्येते, तर्हि प्रत्याहरस्य प्रत्याहारत्वहानिः, सवर्णसञ्ज्ञाग्राहकपक्षेऽपि 'अनुनासिकाऽननुनासिकभेदेन यवला द्विधा, तेन—अननुनासिकास्ते द्वयोर्द्वयोस्सञ्ज्ञा' इत्युक्त्या ल् ($\frac{१}{२}$) लँ ($\frac{३}{४}$) + र् $\frac{१}{२}$ = १$\frac{३}{४}$ पादोनद्विमात्रात्मकवर्णबोधकत्वमेव। एवञ्च—पादोनद्विमात्रात्मकरँप्रत्याहाररूपेण महतोच्चारणव्यापारेण तावन्मात्रात्मकवर्णग्रहणमेवेति **प्रत्याह्रियन्ते = संक्षिप्यन्ते** इत्यर्थाऽसङ्घटनात् प्रत्याहारत्वं भज्येतेति विद्वांसो सम्भालयन्तुरूपम्। एवञ्च-**श्रीकैयटभट्टाचार्ययोजना** चिन्तास्पदं पदमिति मन्मतं मतमिति मितिमतीनां निर्विवादो वादोऽस्तीति निर्विशयो विषयो विभातीति। **भाष्याक्षरयोजना पश्चाद् द्रष्टव्येति।**

(घ) **श्रीनागेशभट्टाचार्यदिशा तन्निरासे तत्सिद्धान्तहानिः**—

इदम्भावः—**श्रीमन्नागेशभट्टाचार्यदिशा** रँप्रत्याहार-(न तु 'र'प्रत्याहार) निरासे सति, 'लण्'सूत्रे अकारस्यानुनासिकत्वं न स्वीकरणीयमिति, आतश्च—'परे त्वस्यानुनासिकत्वे अतो ल्रान्तस्येति सूत्रे भगवान् पाणिनिर्लकारं नोच्चारयेत्, **रँ-प्रत्याहारेणैव** (मुद्रितग्रन्थेषु समत्र **रप्रत्याहारेणै**वेति निरनुनासिक एव पाठः, तदयुक्तत्वमुक्तमेव) निर्वाहात् ....' इत्यादि उभयत्र शेखरे स्पष्टम्। एवञ्च—**श्रीमन्नागेशभट्टाचार्यदिशा**ऽत्रानुनासिकत्वं नास्ति, कामं नास्तु, परन्तु अत्राकारस्य **'हकारादिष्वकार उच्चारणार्थः'**, इत्युक्तिदिशा उच्चारणार्थकत्वं तु निर्विवादमेव, तदानीमपि—'उच्चारणार्थानामपि **इत्सञ्ज्ञालोपाभ्यामेवापहारः'** इति 'दिव उत्' सूत्रीयतित्स्वरितसूत्रस्थतितिप्रत्ययग्रहणंकर्तव्यंवार्तिकोपन्यासपरकशेखरद्वयमहाग्रन्थ-महारत्नदीव्यत्सिद्धान्तप्रकाशस्य निरङ्कं निरातङ्कं निरन्तरं निरन्तरायं निरन्तरालं निरामं निरामयं निर्मायं समानञ्च जागरूकत्वादिति बुधेलिमम्।

तथाहि—'ननु विधेयविषये उच्चारणार्थामपीत्सञ्ज्ञोचिता, अन्यथा तान्तस्य विधान-मित्यस्याप्यापत्तेः। ध्वनितञ्चेदमद्ड्सूत्रे भाष्ये। तत्र हि—डित्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्य—'अनुनासिकोपधत्वाद्' इति समाहितम्, न तू-च्चारणार्थत्वाद् इति। किञ्च—द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र विशेषणार्थेष्विव हलन्त्यसूत्राप्रवृत्तौ मानाभावः। अत एव तस्य लोप इति सूत्रेऽनुबन्धानामेकान्तत्वपक्षे (सिद्धान्तपक्षे) दिवऔदित्यादीनां सर्वादेशत्वापादनं भाष्ये कृतम्। 'तित्स्वरितम्' इति सूत्रे च भाष्ये 'तिति प्रत्ययग्रहणं कर्तव्यम्' इति वार्तिकस्य 'द्युम्यामित्यादौ तदभावः फलम्'। इत्युक्तम्।

दित्वमाश्रित्य च प्रत्याख्यातं तदित्यन्यत्। यथा 'ऋदोरप्' इत्यत्र तपरप्रतिबन्धितया दकार आश्रितः।

किञ्चादेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेन इत्सञ्ज्ञकत्वाभावात्तिति-प्रत्ययग्रहणं व्यर्थमेव स्यात्। तथा विधेयविषये उच्चारणार्थानामपि **अनुनासिकत्वेन** इत्सञ्ज्ञा, अत एव 'वेरपृक्तस्य' इत्यत्र अपृक्तग्रहणाभावे 'दर्विः' इत्यत्र लोपमाशङ्क्य 'अनुनासिकस्य वेर्ग्रहणम्' इति भाष्य उक्तम्। अत एव—

'इदितो नुम्—' इति सूत्रे **भाष्ये**—'धातोः' इत्यस्याभावे **सिच** इदित्वाद् 'अभैत्सीद्' इत्यादौ नुममाशङ्क्य, **सजादेशकारणेन** समाहितम्, न तु **सिच**

इकारस्योच्चारणार्थत्वादित्त्वाभावेन। **'ल्युट्'** इत्यादौ उकारस्य अनाकाभ्यामेव निवृत्तिरिति न तस्येत्सञ्ज्ञा। अत एव नन्द्यादिभ्यो ल्युप्रत्यये नन्दनेति टाबन्तप्रयोगो 'गाङ् लिटि' इति सूत्रे भाष्ये।

एवञ्च—**उच्चारणार्थानामपि अनुनासिकत्वेनेत्सञ्ज्ञा** इति दिशा, सर्वत्र प्रत्याहारसूत्रे हलुपदेशेऽकारनिवृत्त्यै तल्लोपावश्यकत्वे, तत्प्रयोजिकाया इत्सञ्ज्ञाया आवश्यकत्वेन, तदर्थमनुनासिकोच्चारणव्यापारापरिहार्यतया-सर्वत्र हँ यँ वँ रँ ट् लँण् ञँ मँ ङँ णँ नँ म् झँ भँ ञ् इत्यादि स्यादिति वृश्चिकाद् भीतो व्याघ्रमुखे पतित इति न्यायः सावसरः स्यात्। तस्माद् **श्रीनागेशभट्टाचार्याभिमतः** प्रकारश्चिन्त्य इति चिन्त्यताम्। तथा च—**महागौरवप्रसङ्गः** प्रसरीसरीति सरीति।

(च) **भाष्यपंक्तियोजना तु इत्थम्**—

उरण् रपर इत्यत्र लपरत्वं वक्ष्यामीत्यनेनैव उःस्थाने अर् आर् उर् ऊर् इर् ईर् इति, अथ च उल् स्थाने अल् आल् इल् ईल् उल् ऊल् इत्यादि सेत्स्यतीति प्रत्याहारस्वीकारप्रयासो निष्प्रयोजनः। किञ्चैवम्—उरण् लपर इत्यत्रैव र्ल् वा भाष्यस्वारस्यादित्यपि कल्पयितुं शक्यम्।

(छ) किञ्च—'अचोऽक्षु हलो हल्षु' इति शैलीविरोधोऽप्यापतेत्, समेषां शुद्धानामुच्चारणप्रसङ्गे एकस्यातथात्वात्।

**हलन्त्यम्**

अत्र अन्योन्याश्रयविषयककोलाहलोऽपि विचार्यः, तथात्वे एकत्र सिद्धान्ते षष्ठीतत्पुरुषः, अन्यत्र द्वे पदे पृथक् इति व्यवस्था, तच्च कथं सङ्घटते? यतो हि समासे सति षष्ठीतत्पुरुषे तत्पुरुषस्येति अन्तोदात्तत्वम्, असमासे हल् अन्यम् उभयत्र प्रातिपदिकस्वरः पृथक् पृथक् स्यात्, तदानीम्—

'हल्' इत्यस्याव्युत्पन्नप्रातिपदिकत्वात्—फिषोऽन्त उदात्त इति। अन्त्यमित्रत्य दिगादित्वाद् यति तित्स्वरितं स्यात्, एवं पृथक् पृथक् स्वरो भवेत्, परन्तु पाणिनिना एकमेव सूत्रमपाठि, वेदाङ्गानामपि पारायणार्हत्वेन सस्वरत्वाद् अन्यतरस्वरघटितं सूत्रमेव पाणिनिना कृतं स्यात्, आवृत्तिव्याजेन स्वरान्तरघटितत्वकल्पने पारायणादावदृष्टहानिः।

एवम्—**तपरस्तत्कालस्येत्यत्रापि।**

तस्मादत्र—आदिश्चादिश्चादी इत्यत्रेवैकशेषोऽङ्गीकार्यः। आर्षत्वाद्यनुसन्धानमुभयत्र समानम्।

किञ्च—अविच्छिन्नगुरुपरम्पराप्राप्तस्य सूत्रस्याध्ययने 'अस्य सूत्रस्य शाटकं वय' इत्यादिभाष्यस्वीकृतदिशा भाविसञ्ज्ञानिर्देशाश्रयणमपि सुकरम्। किञ्च—

'सर्वेऽन्योन्याश्रयाः परिहृताः, सिद्धं तु नित्यशब्दत्वात्' इति भाष्ये तत्र तत्रोक्तेः न क्वापि कुतोऽपि कोऽपि कथमपि दोषलेशांशोऽपि प्रसरतिकल्पमिति बुधैर्बुधेलिमम्।

यथा च—'आद्यन्तौ टकितौ' इत्यादौ इव 'श्रोतॄणां सहैव बोधो भवतु' इत्यात्मकसहविवक्षासिद्ध्यै पुरस्तात् कल्पनामाश्रित्यापि समाधातुं शक्यम्। न चैवम्, भाष्ये अन्योन्याश्रयतत्परिहारादिकथनं सङ्गच्छते इति नागेशोक्तिविरोधः। भाष्यवचसां शिष्यबुद्धिवृद्ध्यै समन्वेतुमहर्त्वात्, कथमन्यथा,—'सिद्धन्तु नित्यशब्दत्वात्' इति यत्र तत्र बहुत्रानेकत्र प्रायस्सर्वत्र अन्योन्याश्रयपरिहारकथनं सङ्गच्छतेरूपमिति सम्भाल्यतां धीधनैः।

धातोः (३।१।९१,६।१।१६२) बहुलं छन्दसि', टेः (६।४।१४३,१५५) अकर्मकाच्च (१।३।२६, ३५,४५) अन्येक्योऽपि दृश्यते (३।२।१७८, ३।३।१३०) अव्ययीभावश्च (१।१।४५, २।४।१८) आतश्चोपसर्गे (३।१।१३६, ३।३।१०६) आत्मनेपदेष्वन्यतरस्याम् (२।४।४४, ३।१।५४) आमन्त्रितस्य च (६।१।१९८, ८।१।१९), आर्धधातुके (२।४।३५, ६।४।४६) इङश्च (२।४।४८, ३।३।२१) उगितश्च (४।१।६, ६।३।४५) ऊर्णोतेर्विभाषा (५।४।१३०, ७।३।९०)कोपधाच्च (४।२।७९, ४।३।१३७) क्षेपे (२।२।४७, ६।२।१०८) चायः की (६।१।२१,३५) चौ (६।१।२२२,६।३।१३८) छन्दसि च (५।१।६७, ५।४।४२, ६।३।१२६) छन्दस्यपि दृश्यते (६।४।७३, ७।१।७६) छन्दस्युभयथा (३।४।११७, ६।४।५,८६) छन्दोनाम्नि च (३।३।३४, ८।३।९४) झयः (५।४।११ ८।२।१०) णौ च संश्चङोः (२।४।५१, ६।१।३१) तेन निर्वृत्तम् (४।२।६८, ५।१।७९) त्रेस्त्रयः (६।३।४८, ७।१।५३) दश्च (७।२।१०९, ८।२।७५)

देवताद्वन्द्वे च (६।२।१४१ ६।३।२६, ७।३।२१) द्वितीयायाञ्च (३।४।५३, ७।२।८७) नित्यं छन्दसि (४।१।४६, ७।४।८) निष्ठा (२।२।३६, ३।३।१०२) परिषदो ण्यः (४।४।४४,१०१) भुवश्च (३।२।१३८, ४।१।४७) मनः (३।२।८२, ४।१।१११) लिङ् चोर्ध्वमौहूर्तिके (३।३।९, ३।३।११६) वा छन्दसि (३।४।४८, ६।१।१०६) निभाषा कृञि (१।४।७०, १।४।९८) विभाषा छन्दसि (१।२।३ ६, ६।२।१६४, ७।४।४४) शेषे विभाषा (८।१।४१,५०) सञ्ज्ञायाम् (२।१।४४, ३।३।१०९, ३।४।४२, ४।१।७२।४।३।११७, ६।२।१५९, ८।२।११) सञ्ज्ञायां कन् (४।३।१४७,५।३।७५,८७) सञ्ज्ञायाञ्च (५।३।९७, ६।२।७७) हलसीराट्ठक् (४।३।१२४, ४।४।८१) इत्याद्यर्थान्तराढ्यसमानानुपूर्वीकसूत्रललामलेखा-लेखाधिपस्यान्योन्याश्रयतत्परिपहारप्रयोजनकावृत्तिरूपप्रयासस्येष्टत्वे 'हलन्त्यम्' (१।३।१) इत्यत्रेव आदिरन्त्येन सहेता (१।१।७३) इत्यत्रापि यथेच्छं 'हलन्त्यम्' इत्यस्य प्रणिनीषितत्वस्यैवौचित्यम्, उभयत्र यथेच्छं हल्पदार्थस्य स्वीचिकीर्षितत्वे दोषानवसरादिति दिक्।

**'वाक्यार्थबोधे पदार्थज्ञानं कारणम्'** इत्यपि मुग्धशिष्यदन्धनमात्रमत्रेति बुधेलिमम्, वैयाकरणनये 'वाक्यार्थस्याखण्डत्वाद् **'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः'** इति वैयाकरणमतोन्मज्जने स्वेनैवोपाचरित्वात्, **पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव** इति भर्तृहर्युक्तदिशा स्वोक्तिदिशा च पदादीनां काल्पनिकत्वात्तदुपस्थापनाप्रकारं शिष्यदिन्धनमात्रमेव। किञ्चैवम्—वाक्ये पदानां स्वतन्त्रार्थोपस्थापकत्वे—**'शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते'** इति महामहोपाध्यायश्रीगदाधरभट्टाचार्याभिमत-न्यायमतप्रवेशः प्रसरीसरीतु, नेदं वैयाकरणाभिमतं मतम्, **'उच्चरितः शब्दः प्रत्यायको भवति, नाऽनुच्चरितः'** इति भाष्यविरोधाद्।

'न सोऽस्ति प्रत्ययो लेके यः शब्दानुगमादृते।[१२]

इति वाक्यपदीयविरोधाच्चेति बोबुध्यतांरूपं बुद्धिमद्भूपैरिति।

किञ्च—अत्र अन्योन्याश्रयास्पदार्थस्वीकारबीजमुपन्यस्यन्—'न विभक्तौ तुस्मा–' इत्यादेः सार्थक्याय–, इत्यादि शेखरोक्तं खल्वपि चिन्तास्पदम्, यतो हि

इदानीम् (हलितिसूत्रेऽन्त्यमित्स्यात्) इत्यर्थकल्पे 'न विभक्तौ—' सूत्रस्य प्रयोजनाभावात्, तद् निर्विषयं सदप्रयोजनास्पदमेव। व्यर्थं तद् भवति—यस्य प्रयोजनमन्यथासिद्धं भवति, तदेव तदैव ज्ञापकं भवति, स्वीकृतश्चायम्प्रकारोऽसकृत् भाष्यप्रदीपोद्द्योत-काशिका-न्यास-पदमञ्जरी-शब्दकौस्तुभ-कौमुदी-परिभाषेन्दुशेखर-व्याकरणसिद्धान्तसुधानिध्यादौ, परन्तु यस्य प्रयोजनमेव नष्टम्, तत्खलु 'नैव दोषो, न प्रयोजनम्' इति मुखनासिकासूत्रस्थभाष्यदिशा सार्थकीकरणप्रयासानास्पदं सत्प्रत्याख्येयं भवति। एवं च लक्ष्याभावाद् **'न विभक्तौ'** इति **नाज्झलौ** इत्यादिवत् प्रत्याख्येयमेव स्यात्। इत्थं प्रकृते विराचाङ्कुरः प्ररोहतीति दिक्।

बृहच्छेखरे पृ. ८ (सं.सं.वि.वि.सं.), लघुशेखरे पृ. ३७ (षट्टीका.सं.)।

'उपदेश'शब्दस्य करणसाधन-भावसाधन-कर्मसाधनपक्षानाश्रित्य कोलाहलकरणमपि शिष्यदन्धनमात्रम्, स्फोटशब्दस्य करणसाधनत्वेऽपादानसाधने वा स्वीकृतेऽपि, वाचकेतिकर्तृसाधनेन ण्वुलन्तेन पर्यायित्वनिश्चयात्। आतश्च— **'वाक्यस्फोटः'** इत्यादीनां **'वाक्यं वाचकम्'** इति बृहद्वैयाकरणभूषणोदितं सङ्गच्छते। न च 'पाकः' इत्यस्य भावसाधनस्य कर्मसाधनस्यार्थान्तरं स्पष्टमिति वाच्यम्, तत्र पाको भवति, पाकं पचति इति क्रियान्वयित्वेन भेदसिद्धेः। नागेशेन यथाप्रसङ्गं करणसाधने स्वीकृतेऽपि अगत्या अर्थान्तरे प्रत्ययस्वीकारदिति—

मात्सर्यमुत्सार्य विचार्यकार्यमार्येषु वर्यैर्वरणीय एव।
भावो मदीयो हृदयस्थितोऽसौ क्षमाधना बुद्धिधना भवन्ति।।

राजारामस्य वैयाकरणमृगपतेरस्ति पौत्रः कनिष्ठो
वीणापाणौ तथा श्रीपशुपतिबुधतो लब्धजन्मा द्विजो यः।
सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयीयः
चक्रे सिद्धान्तकौमुद्यधिगतमधुराभातशङ्काप्रकाशम्।

एषा नित्याऽपि या कल्पितपदनिचयैर्ज्ञायते देशिकेन्द्रैः
सर्वार्थाढ्याऽपि बृद्धयव्यवहरणवशाद् निश्चितार्थं ब्रवीति।
आवापोद्वापितप्रत्ययप्रकृतिलसत्कल्पनाकल्पवल्ली
रराजीति प्रकामं त्रिभुवनवलये शाब्दिकी शब्दशक्तिः।

आसृष्टेरालयं यावदपि च सकलोऽप्युच्चमानस्तथोक्तः
शब्दोऽसौ कण्ठताल्वाद्यभिहतजनितो नित्य एवेति सिद्धम्।
स्वीचक्रुर्यन्मतं सङ्गणकमतिधना हन्त वैज्ञानिकेन्द्रा
एषेयं शाब्दिकानां जगति विजयते शाब्दबोधप्रणाली।।



**टिप्पणी :**

१. मुनित्रयम् इति।
मुनित्रयन्नमस्कृत्य तदुक्तीः परिभाव्य च।
वैयाकरणसिद्धान्तकौमुदीयम्निव रच्यते। (द्र. कौमुद्याम्मङ्गलाचरणम्)

२. 'सङ्ख्यया इति। सूत्रेऽमुत्र तदस्य सञ्जातं तारकादिम्य इतच्' (५।२।३६) सूत्रात्-'तदस्य' इत्यनुवर्तते। एवञ्च द्वित्वादिसङ्ख्याका अवयवा अस्यावयिन इति विग्रहे अवयवीभूत-सङ्ख्यावाचिनः प्रथमान्तादस्यावयविन इत्यर्थे तयप्। 'मुनित्रयम्' इत्यस्य त्रिमुन्यवयक समुदाय इत्यर्थ इष्यते। सङ्ख्याशब्देनात्र संख्याया अतिशदन्ताया इति ज्ञापकादुभयगत्या लोकप्रसिद्धसङ्ख्याग्रहणम्।

३. स्ववर्ग्यान् वररुच्यादीनुपहासान् स्मरन् सुधीः।
ततोऽभवद् वररुचेर्वादः पाणिनिना सह।।
एतेन कात्यायनापराख्यवररुचिपाणिनी समकालिका इत्यायाति। वरुचिस्तावत् कात्यायनगोत्रीय इत्यनुमा सावसरी। (द्र.-गुणाढ्यकृतबृहत्कथानुवाद-सोमदेवकृते कथासरित्सागर-क्षेमेन्द्रकृत-बृहत्कथामञ्जरीसमष्टिरूपहरचरितचिन्तामणेः शब्दशास्त्राचिन्ताख्यछसप्तविंशः प्रकाशः, महाभा, नि.सा.प्र.। (भू.पृ. १)

४. द्र. पस्पशाह्निकम्, धर्मनियमाधिकरणम्—'यथा लौकिकवैदिकेषु' इति वार्तिकभाष्यम्। अन्यत्र—शलातुरग्रामोऽधुना लाहुरेत्याख्योऽफगानिस्ताने उद्भाण्डाख्येऽधुना आहिण्डाख्ये लहसीलेऽस्तीति प्रसिद्धिः।

५. तथा च तत्रत्यः प्रसिद्धश्लोकः—
'गतेऽर्धरात्रे परिमन्दभन्दं गर्जन्ति यत् प्रावृषि कृष्णमेघाः।
अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति।।
कात्यायनविषयेऽपि—'न केवलं व्याकरणं पुपोष दाक्षीसुतस्येतिवार्तिकैर्यः।
'आदौ व्याकरणं काव्यमनु जाम्बवतीजयम्। योगदर्शनचरकसंहिते पातञ्जले इति जगत्प्रसिद्धमेव।

७. पर्युपसृष्टभवतेरवहेलनवृत्तेर्घम्। अत्र परत्वात् क्तल्युटौ प्राप्तौ, तथा च—पूर्वविप्रतिषेधोऽयं फलितः। एवञ्च-वाऽसरूपन्यायोऽन्याय्योऽत्र। अपवादानवसरात्। तथा चामरः—'अनादरः परिभवः परीभावस्तिरस्क्रिया।' इति।

८. यथा 'वैयाकरणख्यायां चतुर्थ्याः' इत्यलुक्समासप्रकरणे।

९. वृद्धिरादैच् १।१।१, अन्योन्याश्रयपरिहाराधिकरणम्, महाभाष्ये—'सिद्धं तु नित्यशब्दत्वात्' इति।

१०. व्युत्पत्तिवादप्रारम्भः।

११. 'उच्चार्यमाणः शब्दः प्रत्यायको भवति, न सम्प्रतीयमानः' इत्यस्ति तत्रत्यभाष्यानुपूर्वी। (द्र. अणुदित्सूत्रम् १।१।९, अण्ग्रहणप्रयोजनाधिकरणम्)

१२. वा० प. १।५३।

# वैयाकरणं प्रत्युदाहरणम्

**डॉ. गोपबन्धुमिश्रः**
उपाचार्यः, संस्कृत-विभागस्य
काशीहिन्दूविश्वविद्यालये, वाराणसी



महाभाष्ये 'व्याख्यानं' स्पष्टीकुर्वता पतञ्जलिनोक्तम्—'उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवति'[१]। लक्षणग्रन्थानां कृते लक्ष्यस्थलेभ्य उद्धृत्य उदाहरणं दातव्यं भवति। अतः काव्यलक्षणे रसरीत्यलङ्कारादीनामुदाहरणानि विविधेभ्यः काव्येभ्यो दीयन्ते। केचन काव्यशास्त्रिण उदाहरणानि स्वयं निर्माय प्रस्तुवन्ति। नाट्यशास्त्रे वस्तुनेत्रादीनां सभेदं लक्षणानामुल्लेखेन सह विविधनाट्येभ्य उदाहरणानि दीयन्ते। अखिलं धार्मिकार्थिकादिजीवनमुदाहरणं भवितुं शक्नोति इत्यतो धर्मशास्त्रार्थशास्त्रादिषु लक्षणोक्तिरेव पर्याप्ता मन्यते (उदाहरणं विना)। एतेषु लक्षणग्रन्थेषु उदाहरणैः सह प्रत्युदाहरणानां प्रसङ्गो न दृश्यते; किन्तु शब्दशास्त्रे उदाहरणानामिव प्रत्युदाहरणानामपि महत्त्वमस्ति, यतो हि विविधेषु ग्रन्थेषु लोके वा प्रयुक्ताः प्रयुज्यमानाः प्रयोक्तव्याश्च अखिलाः शब्दाः शब्दशास्त्रस्य लक्ष्या भवन्ति।

प्रति-उत्-आ-हृ+ल्युट् (भावे)=प्रत्युदाहरणम्। उदाहरणस्य प्रतिकूलतां वैपरीत्यं वा आचरत्येतदिति, अतोऽस्य प्रत्युदाहरणत्वम्। उदाहरणशब्दः कथने दृष्टान्ते उपोद्घाते वाक्यभेदे वाऽर्थे प्रवर्तत इति वाचस्पत्यम्[२]। 'साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्' इति गौतमन्यायसूत्रम्। उदाहरणं सामयिकं व्यावहारिकं वा भवत्येव; परन्तु सर्वत्र समानमुदाहरणं स्यादिति अपेक्षा नैव भवतीत्यस्य न्यायसूत्रस्य वृत्तावुक्तमस्ति—'दृष्टान्त उदाहरणमिति लक्षणं दृष्टान्तवचनं दृष्टान्तकथनयोग्यावयव इत्यर्थः, तेन दृष्टान्तस्य सामयिकत्वेन असार्वत्रिकत्वेऽपि न क्षतिः।' न्यायदर्शने 'पर्वतोऽग्निमान्, धूमवत्त्वात्। यो यो धूमवान् स सोऽग्निमान् यथा महानसः। तथा चेयं, तस्मात्तथा' इति परार्थानुमाने

१. महाभाष्यम्, पस्पशाह्निकम्।

२. वाचस्पत्यम्, खण्डः २, पृष्ठम्-११६४।

'प्रतिज्ञाहेतूदाहरणोपनयनिगमनिः' इति पञ्चावयवभूते वाक्ये उदाहरणस्य महत्त्वपूर्णं स्थानमस्ति। तच्चोदाहरणं द्विविधम्—अन्वयि व्यतिरेकि च। यो यो धूमवान् स सोऽग्निमान् यथा महानस इति अन्वयव्याप्तिस्थलमन्वय्युदाहरणम्। अत्र साधनं धूमो व्याप्यम्, साध्योऽग्निश्च व्यापकः। तथा च यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा महाह्रद इति व्यतिरेकव्याप्तिस्थलं व्यतिरेक्युदाहरणम्। अन्वयव्याप्तौ यद् व्याप्यं तदभावः (अर्थाद् धूमाभावः)। अत्र व्यतिरेकिव्याप्तौ व्यापकः, किञ्च अन्वयव्याप्तौ यद् व्यापकं तदभावः (अर्थाद् अग्न्यभावः) व्यतिरेकिव्याप्तौ व्यापको भवति। यत्रान्वयव्यतिरेकी हेतुर्भवति तत्र अन्वयिव्यतिरेकीति उदाहरणद्वैविध्यं भवति, यथा पूर्वोक्ते अग्न्यनुमानप्रसङ्गे। यत्र केवलमन्वय्युदाहरणम्, तत्र स हेतुः केवलान्वयी, यत्र च केवलं व्यतिरेक्युदाहरणं तत्र हेतुः केवलव्यतिरेकी भवति।

व्याकरणे सूत्रव्याख्यानप्रसङ्गे दीयमानमुदाहरणं न्यायोक्तमन्वय्युदाहरणमेव, अर्थात् तत्र हेतुव्यापकसाध्यसामानाधिकरण्यमस्तीति बोद्धव्यम्। तद्यथा—रामेषु। 'रामे+सु' इत्यत्र 'आदेशप्रत्यययोः' (पा.सू.२.३.५९) इति षत्वं भवति। 'इण्कवर्गाभ्यां परस्याऽपदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्' इति सूत्रार्थः। यत्र यत्र मूर्धन्यादेशः, तत्र तत्र सस्य इण्कवर्गाभ्यां परत्वम्, अपदान्तत्वं प्रत्ययावयवत्वम् (अथवा आदेशत्वं) च, यथा—रामे+सु=रामेषु। इत्येवमन्वय्युदाहरणमेव व्याकरणे 'उदाहरण'पदवाच्यं भवति। तथैव 'प्रत्युदाहरणम्' नाम व्यतिरेक्युदाहरणमित्यपि कथयितुं शक्यते। तद्यथा—अस्मिन् सूत्रे 'इण्कोः किम्? रामस्य' इत्येकं प्रत्युदाहरणम्। यत्र इण्कवर्गाभ्यां परत्वं न तत्र मूर्धन्यत्वं न, यथा रामस्येति। व्यतिरेकव्याप्तौ वर्तमानं व्यतिरेक्युदाहरणमेव प्रत्युदाहरणरूपेण व्याकरणे उपलभ्यते। तद्वत् 'आदेशप्रत्ययोः किम्? सुपीः, सुपिसौ' इत्यस्य सूत्रस्य अपरस्मिन् प्रत्युदाहरणे यत्र यत्र आदेशप्रत्ययान्यतरत्वाभावः, तत्र तत्र मूर्धन्यादेशाभावः, यथा—सुपिसौ (अत्र 'सुपिस्'शब्दस्य सकारः शब्दस्य अङ्गीभूतः, न तु आदेशस्य अथवा प्रत्ययस्य) इति व्यतिरेक्युदाहरणमेव प्रत्युदाहरणमस्ति। तथैव 'अपदान्तस्य किम्? हरिस्तत्र' इति सूत्रस्यास्यान्यस्मिन् प्रत्युदाहरणे यत्र यत्रापदान्तत्वाभावः (अर्थात् पदान्तत्वमेव) तत्र तत्र मूर्धन्यादेशाभावः, यथा—हरिः+तत्र=हरिस्तत्र (अत्र 'हरिस्' इति सकारः पदान्त एव।) इति व्यतिरेकव्याप्तिर्द्रष्टुं शक्यते। एवमेव एतत्प्रत्युदाहरणपदवाच्यं व्यतिरेक्युदाहरणमन्वयव्यतिरेकिहेतुगतमेव स्यात्, न तु केवलव्यतिरेकिगतम्, यतो हि प्रत्येकं वैयाकरणलक्षणस्यान्वय्युदाहरणं तु

भवत्येव। कदाचित्प्रत्युदाहरणे अनुल्लिखिते सत्यपि लक्षणस्य प्रवृत्तिर्भवत्येव। अतोऽखिले वैयाकरणलक्षणप्रसङ्गे उदाहरणस्योपलब्धेः कारणेन साध्यैः सह साधनानामन्वयव्यतिरेकिभावः सिद्ध्यत्येव।

शब्दानुशासनं व्याकरणस्य मुख्यं प्रयोजनम्। शब्दश्च अर्थमपरित्यज्य प्रवर्तते। अतोऽर्थमादाय शब्दस्य सिद्धये अनुशासनप्रक्रिया व्याकरणेन साध्यते। तत्र शब्दस्याङ्गं मुख्यं मत्वा विधीयमानं तथा च विशिष्टमर्थमुद्दिश्य क्रियमाणमित्युभयविधमपि शब्दकार्यं शब्दानुशासनमेव कथ्यते। यथा— 'जातेरस्त्रीविषयादयोपधात्' (पा.सू. ४.१.६३) इति सूत्रेण 'तट'शब्दात् ङीषि 'तटी' इति सिद्ध्यति। अत्र 'तट'शब्दः जातिवाचकः, अस्त्रीविषयश्च इति पक्षद्वयस्यार्थेन सह सम्बन्धः, तथा च तस्यायोपधत्वस्य सम्बन्धः शब्दगतस्वरूपेण सहेत्यस्मिन्नुदाहरणे शाब्दिकी आर्थिकी च योग्यता सन्निहिताऽस्ति; परन्तु प्रत्युदाहरणप्रसङ्गाः प्रत्येकं शब्दगतमर्थगतञ्च वैशिष्ट्यमनुसृत्य भिन्ना भिन्ना भवन्ति। तद्यथाऽत्रैव—'जातेः किम्? मुण्डा। अस्त्रीविषयात् किम्? वलाका। अयोपधात् किम्? क्षत्रिया'[१]।

एतेषु त्रिषु ङीष् न भवतीति सर्वाण्येतानि प्रत्युदाहरणानि; परन्तु प्रथमं द्वयमर्थगतं वैशिष्ट्यम् ('मुण्ड'शब्दो जातिवाचको न, 'वलाक'शब्दः स्त्रीविषयश्चेति), तृतीयं च शब्दगतं वैशिष्ट्यम् ('क्षत्रिय'शब्दो योपध एव) आतनोति। परिणामतः, उदाहरणैः सह सामान्यतः प्रत्युदाहरणानां यथासंख्य-सम्बन्धो न भवति; किन्तु, निपातनप्रसङ्गे उभयोर्यथासंख्यमुपस्थितिर्लक्ष्यते। तद्यथा—'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती' (पा.सू. ८.२.१२) इति सूत्रेण संज्ञायां यानि मतुबन्तान्युदाहरणानि निपातनसिद्धानि, असंज्ञायामपि तत्संख्यकानि प्रत्युदाहरणानि दीयन्ते। तद्यथा—

| **शब्दः** | **उदाहरणम् (निपातितम्)** | **प्रत्युदाहरणम्** |
|---|---|---|
| आसन | आसन्दीवान् नाम ऋषिः | आसनवान् |
| अस्थि | अष्ठीवान् नाम ऋषिः | अस्थिमान् |
| चक्र | चक्रीवान् नाम राजा | चक्रवान् |
| कक्ष्या | कक्षीवान् नाम ऋषिः | कक्ष्यावान् |
| लवण | रुमण्वान् नाम पर्वतः | लवणवान् |
| चर्मन् | चर्मण्वती नाम नदी | चर्मवती |

१. सिद्धान्तकौमुदी-४.१.६३।

व्याकरणे प्रक्रियाग्रन्थेषु लक्षणानामुदाहरणान्यादौ लिख्यन्ते, ततः परं प्रत्युदाहरणानि। बहुषु स्थलेषु केवलमुदाहरणानि लिख्यन्ते। तत्र कारणं नाम यथा तर्कशास्त्रे अन्वयव्यतिरेकिहेतौ सत्यपि 'पर्वतोऽग्निमान् धूमवत्त्वात्' इति अनुमानप्रसङ्गे यत्र धूमस्तत्र अग्निः यथा महानस इति अन्वयव्याप्तिरेव प्रदर्श्यते (न तु व्यतिरेकव्याप्तिः), 'तदेकेनापि चरितार्थत्वात्। तत्राप्यन्वयस्यावश्यकत्वात् प्रदर्शनम्। ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनायोगात्, न तु व्यतिरेकव्याप्तेरभावात्'[१] इति तत्र कारणमपि प्रदर्श्यते, तथैव व्याकरणे ऋजुमार्गेण विषयस्य स्पष्टीकरणार्थं केवलमुदाहरणं तथा चोदाहरणप्रत्युदाहरणयोः सतोः उदाहरणस्य प्राथम्येनोपस्थापनं भवति, न तु प्रत्युदाहरणस्याभावात्। तद्यथा—

१. उभयप्रयोगः—'वारणार्थानामीप्सितः' (पा.सू.१.४.२७)—यवेभ्यो गां वारयति। (उदा.)

ईप्सितः किम्? यवेभ्यो गां वारयति क्षेत्रे। (प्रत्यु.)

२. केवलमुदाहरणप्रयोगः—'जनिकर्तुः प्रकृतिः' (पा.सू. १.४.३०) ब्रह्मणः प्रजाः प्रजायन्ते।

यद्यपि 'क्षेत्रे' इत्यादिप्रत्युदाहरणम् 'आधारोऽधिकरणम्' (पा.सू. १.४.४५) इत्यादेरुदाहरणरूपेण सिद्धं भवति, तथापि वारणार्थानाम् (पा.सू.१.४.२७) इत्यादिदृष्ट्या अप्रासङ्गिकं भवति। अतः, उदाहरणं स्वस्थाने प्रथितम्, अनन्यथा-सिद्धं भवति। एवञ्च प्रत्युदाहरणमस्थाने (असम्बद्धस्थाने वा) प्रदर्शितमन्यथासिद्धं भवतीत्यनयोः स्थूलो भेदो दृश्यते।

## प्रत्युदाहरणप्रस्तुतेः कला

उदाहरणमिव प्रत्युदाहरणमपि पूर्णं (अनुवृत्त्यादिसहितं) सूत्रम्, न तु केवलं सूत्रे दृष्टानि पदानि अधिकृत्य प्रवर्तते। तद्यथा—'भुवो भावे' (पा.सू. ३.१.१०७) इति सूत्रस्योदाहरणं 'ब्रह्मभूयम्' इव सूत्रे अनुवर्तितम् 'अनुपसर्गे', 'सुपि' इति पदद्वयमाश्रित्य प्रत्युदाहरणद्वयं प्रवर्तते—'सुपीत्येव—भव्यम्, अनुपसर्ग इत्येव—प्रभव्यम्'[२]। उदाहरणस्य प्रस्तुतिः सूत्रस्य वार्तिकस्य वा पाठात् परं साक्षात्क्रियते, तस्य प्रासङ्गिकत्वात्, सूत्रापेक्षित्वाच्च। किन्तु प्रत्युदाहरणप्रस्तुतौ विविधाः शैल्य आद्रियन्ते। तद्यथा—'सूर्याद्देवतायां चाप् वाच्यः' (वा. ४.१.४८) इति वार्तिकस्य प्रत्युदाहरणोपस्थानानि एवं सन्ति—

---

१. तर्कभाषा, अनुमानप्रकरणम्।
२. काशिका, ३.१.१०७।

'देवतायामिति किमर्थम्? सूरी'—महाभाष्यम्।

'देवतायामिति किम्? सूरी'—काशिका।

'देवतायां किम्? सूरी कुन्ती मानुषीयम्'—सिद्धान्तकौमुदी। सामान्यतः 'किम्' इत्यव्ययेन प्रश्नं कृत्वा प्रत्युदाहरणलेखः क्रियते। किञ्चापरे प्रयोगा अपि दृश्यन्ते, तद्यथा—

| प्रयोगः | प्रयोगस्थलम् | सन्दर्भः |
|---|---|---|
| १. तु | अन्यत्र तु अपथो देशः। | सि.कौ. २.४.३० |
| २. इह मा भूत् | इह मा भूत्—पन्थानं गच्छति। | म.भा. २.३.१२ |
| ३. तेनेह न, नेह | 'झलि' इति निवृत्तम्। | |
| | स्ध्वोर्ग्रहणसामर्थ्यात्। | |
| | तेनेह न—दुग्धम्। | सि.कौ. ८.२.३७ |
| | अपुरीत्युक्तेर्नेह, अन्तरायै नगर्यै। | सि.कौ. १.१.२८ |
| ४. नान्यत्र | अत्पूर्वस्यैव णत्वम्, | |
| | नान्यत्र–प्रघ्नन्ति। | सि.कौ. ८.४.२२ |
| ५. क्वचिन्न | क्वचिन्न–पापेऽभिनिवेशः। | सि.कौ. १.४.४७ |
| ६. एव | अनुपसर्ग इत्येव–प्रवाद्यम्। | का. ३.१.१०६ |

व्याख्यानमुद्दिश्य दीयमानस्य प्रत्युदाहरणस्य वैशिष्ट्यं व्याख्यातुं व्याख्याकारः स्वतन्त्रो भवति। तद्यथा—उपरि कथितस्य 'सूर्याद्देवतायाम्' (वा. ४.१.४८) इत्यस्य 'सूरी' इति प्रत्युदाहरणस्य प्रसङ्गे श्रीभट्टोजिदीक्षितः 'मानुषीयम्' इति व्याख्याति।

उदाहरणमिव प्रत्युदाहरणमपि पूर्वाचार्यप्रयुक्ताद् भिन्नम्, अथवा तेन सह तुल्यं भवति। यथा, 'एवे चाऽनियोगे' (वा. ६.१.९४) इत्यस्य प्रत्युदाहरणं महाभाष्यकाशिकयोः 'इहैव' इत्युक्तम्, किन्तु सिद्धान्तकौमुद्यां ततो भिन्नः 'तवैव' इति प्रयोगो दर्शितः। परन्तु एतावत् स्वातन्त्र्यं निश्चितप्रत्युदाहरणप्रसङ्गे नैव भवति। तद्यथा—कथिते 'सूरी' इति प्रत्युदाहरणे अथवा 'क्रय्यस्तदर्थे' (पा.सू. ६.१.८२) इत्यस्य प्रत्युदाहरणे 'क्रेयम्' इति प्रसङ्गे, एतादृशस्थलेषु प्रत्युदाहरणस्य अद्वितीयत्वात्।

ग्रन्थभेदे उदाहरणप्रत्युदाहरणव्यतिहारोऽपि दृश्यते। तद्यथा—'पतिः समास एव' (पा.सू. १.४.८) इत्यस्य काशिकायाम्—प्रजापतिना (उदाहरणम्, अत्र घिसंज्ञा भवति), समास इति किम्? पत्या शेते (प्रत्युदा. अत्र समासाभावे न घिसंज्ञा)।

किन्तु, सि.कौ.—पत्या शेते (उदाहरणम्, समासाभावे न घिसंज्ञा), समासे तु भूपतिना (प्रत्युदा. समासत्वाद् घिसंज्ञा)।

**निष्कर्षः**

१. प्रत्युदाहरणं व्याख्यानस्य अङ्गम्।

२. स्पष्टार्थबोधदृष्ट्या उदाहरणस्येव प्रत्युदाहरणस्यापि महत्त्वम्।

३. 'अन्वयि-व्यतिरेकि' इति उदाहरणद्वये सति व्यतिरेक्युदाहरणमेव प्रत्युदाहरणम्।

४. सूत्रस्य वार्तिकस्य वा अनुवर्तितपदैः सह पूर्णम् अङ्गमाश्रित्य प्रत्युदाहरणं प्रवर्तते।

५. प्रत्युदाहरणेन सूत्रस्य यथायोग्यमर्थगतं शब्दगतं वा वैशिष्ट्यं स्पष्टं भवतीति।



# पाणिनीयव्याकरणे णत्वविधानम्

**डॉ. सत्यप्रकाशः दुबे**
सहायकाचार्यः, संस्कृतविभागे,
जयनारायणव्यासविश्वविद्यालयस्य,
जोधपुरम्



णत्वविधानं व्याकरणशास्त्रीयपरम्परायां नान्तरीयकं कार्यम्। एतच्च णत्वं नकारस्थाने विधीयते। अस्मिन् विधाने रकारषकारयोः निमित्तता भवतीति प्रतिपादितं भगवता पाणिनिना 'रषाभ्यां नो णः समानपदे'[1] इति सूत्रं प्रणयता। अत्र रषाभ्यामिति पञ्चम्यन्तं पदम्। यत्र पञ्चम्यन्तं पदं भवति तत्र तस्मादित्युत्तरस्येति परिभाषया अव्यवहितांशस्योत्तरांशस्य चोपस्थितौ रकारषकाराभ्याम-व्यवहितोत्तरस्य नकारस्य णत्वमिति तथ्यं स्फुटितं भवति। एतदर्थकस्यास्य सूत्रस्य "चतुर्ण्णाम्" इति प्रयोगो वर्तते उदाहरणम्। अत्र रकाराव्यवहितोत्तरत्वविशिष्टस्य नकारस्य णत्वं जातम्। एवमेव आस्तीर्णम्, विस्तीर्णम्, अवपूर्णमित्यादीन्यपि रकाराव्यवहितोत्तरत्वविशिष्टस्य नकारस्य णत्वविषयकाण्युदाहरणानि बोध्यानि। षकाराव्यवहितोत्तरत्वविशिष्टस्य नकारस्योदाहरणानि तु यूष्णः, यूष्णा, पूष्णः इत्यादीनि बोध्यानि।

इदं सूत्रं समानपद एव विद्यमानयोर्निमित्तनिमित्तिनोः सतोः णत्वं विधत्ते। यथोपर्युक्तेषूदाहरणेषु निमित्तनिमित्तिनोरेकपदस्थत्वं वर्त्तत एव। यत्र तु निमित्तनिमित्तिनोर्वैयधिकरण्यं तत्र तु णत्वं नैव भवति। यथा—रामस्य नाम 'रामनाम' इति पदं पदद्वयघटितमस्ति। तत्र चैकस्मिन् पदे निमित्तं रकारोऽपरस्मिन् पदे च निमित्ती नकार इति निमित्तनिमित्तिनोः समानपदस्थत्वाभावात् णत्वं न भवति।

इदमत्र विचार्यते यद् रषाभ्यामिति सूत्रे निमित्तिपदेन कस्य ग्रहणं क्रियताम्। यदि निमित्तिपदेन नकारः गृह्यते, तत्तु न वरम्। न हि रकारषकाराभ्यां नकारः

---

१. पाणिनीयाष्टाध्यायी-८/४/१।

सम्पाद्यते, निमित्तमनपेक्ष्यैव तस्य सिद्धत्वात्। अपि तु रकारषकाराभ्यां णकार एव क्रियते। एवञ्च निमित्तिपदेन णकार एव ग्रहीतव्य:। किन्त्वेवं स्वीकारे निमित्तनिमित्तिनो: रकारणकारयो: समानपदवृत्तित्वं नैव शक्यते वक्तुम्। यतो हि नकारस्य णत्वे कृत एव णकार: सम्पद्यते, न तु रकारणकारौ एकस्मिन् पदे पूर्वत एव वर्तेते येन निमित्तनिमित्तिनो: समानपदस्थत्वं स्यात्।

अत्रोच्यते—णकारगतं निमित्तित्वं स्थानिनि नकारे आरोपेण निमित्तनिमित्तिनो: समानपदस्थत्वं युज्यत एव। अथवा विधानोत्तरकाले निमित्तिन: णकारस्यैव निमित्तेन रकारेण सह समानपदस्थत्वं भवतीति वक्तुं शक्यम्। निमित्तस्य रेफषकारात्मकस्य निमित्तिनो नकारस्य च पदस्थस्यैव सम्भवेन पदं विनाऽपि पदस्थस्य लाभे सम्भवे सूत्रे पदे इति ग्रहणसामर्थ्यादिवैकपदस्थाभ्यां रेफणकाराभ्यां परस्य नस्य णत्वमित्यर्थे सिद्धे सूत्रे समानग्रहणमखण्डमेव पदं स्यादिति बोधयति। तथा चाखण्डपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णत्वमिति सूत्रार्थो लभ्यते। तेन रामनाम इत्यत्र न णत्वम्, तत्र नाम इत्यस्य भिन्नपदत्वात्। रामाणाम्, यूष्ण: इत्यादिप्रयोगेषु तु णत्वं भवत्येव। तेषामखण्डपदत्वं सुस्थिरमेव वर्तते। अत्राखण्डपदत्वं समानपदत्वं चेत्यनयोरेकमेवार्थ:। तच्च पदाघटितत्वरूपम्। अत एव रघुनाथ इत्यादौ 'अट्कुप्वाङ्नुम्व्यवायेऽपि'[१] इत्यनेन णत्वं न भवति, रघुनाथ इत्यत्र पदाघटितत्वाभावात्।

न चैवं ''मातृभोगीण'' इत्यत्रापि णत्वं दु:शकमेव। यतो ह्यत्र 'भोग' इत्यस्य पदत्वात् पदाघटितत्वं नास्ति, तेन समानपदत्वमपि नास्ति। णत्वं चेष्यते समानपदे। एवञ्च कथमत्र णत्वमिति चेत् श्रूयताम्—अत्र 'पद' पदं पदत्वयोग्य-प्रातिपदिकपरमस्ति। 'भोगीन' इति तु न प्रातिपदिकम्, प्रत्ययान्तत्वेन तत्र प्रातिपदिकत्वस्यासम्भवात्। तस्मात् तादृशं प्रातिपदिकात्मकं पदमत्रोदासीनमेव घटपटादिकं भविष्यति। तद्घटितं च पदं किमपि अन्यदेव भविष्यति। 'मातृभोगीन' इति तु तदघटितमेवास्तीति पदाघटितत्वं समानपदत्वमत्र निर्बाधं वक्तुं शक्यते। तेनात्र णत्वं सिद्ध्यति। वस्तुतस्तु रेफषकारान्यतरविशिष्टस्य नस्य णत्वमित्येव समीचीन: सूत्रार्थ:। वैशिष्ट्यञ्च स्वोत्तरत्वस्वाघटितपदा-घटकत्वमित्युभयसम्बन्धेन। यथा 'चतुर्णाम्' इत्यत्र रकारोत्तरो नकारो वर्तते, तथा रकाराघटितं पदं 'नाथ' इति पदम् तदघटकत्वमेव चतुर्णामित्यत्र नकारे वर्तते। एवञ्चोभयसम्बन्धेनात्र रकारविशिष्टो नकार: अस्तीति णत्वमत्र निर्बाधं भवति।

१. पाणिनीयाष्टाध्यायी–८/४/२।

एवमेव 'यूष्णः' इत्यादौ नकारस्य णकारविशिष्टत्वं संयोजनीयम्। यद्यत्र सूत्रे समानपदं न गृह्येत, तदा अग्निर्नयति, वायुर्नयतीत्यादौ भिन्नपदस्थस्यापि नकारस्य णत्वमापद्येत। अतः समानपदग्रहणं सूत्रे सार्थकम्। इदमत्र विचारणीयं यद् रषाभ्यामुत्तरस्य नस्य विधीयमानं णत्वं 'तिसृणाम्' इत्यादिषु प्रयोगेषु कथं सेत्स्यति? न ह्यत्र रकारो वर्तते। न च शक्यते वक्तुं यद् ऋवर्णस्थाद् रेफात्परस्य नस्य णत्वं सेत्स्यतीति। यतो हि णत्वं प्रति रकार एव निमित्तत्वेनाश्रितः। न हि ऋवर्णस्थो रेफो रकारवर्णः; किन्तु वर्णैकदेशः। न हि वर्णैकदेशो वर्णग्रहणेन गृह्यते। यथोक्तमप्यस्ति—

वर्णेषु ये वर्णैकदेशाः वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति। ते तु केवलं तच्छायानुकारिणः सन्ति न पुनस्त एव। तस्माद् ऋवर्णाच्चेति वक्तव्यम्। अर्थाद् ऋवर्णात्परस्यापि नस्य णत्वं भवतीति स्वीकरणीयम्। एतदेवोक्तं सिद्धान्तकौमुद्यामृवर्णान्नस्य णत्वं वाच्यमिति।

अयमत्र सारो यत् णत्वनिष्ठविधेयतानिरूपितनिमित्तता रकारषकारयोरेव वर्तते। सा चाप्यव्यवहितोत्तरत्वसम्बन्धेन। अर्थाद् रकारषकाराभ्यामव्यवहितोत्तरत्व-विशिष्टस्यैव नकारस्य णत्वं विधीयते रषाभ्यामिति सूत्रेण। स्थितौ चास्यां गुरुणा रामेणेत्यादौ व्यवहिते स्थले कथं जायताम् नकारस्य णत्वमिति मनसि विचार्य पाणिनिना व्यरचि सूत्रम्—अट्कुप्वाङ्नुम्व्यवायेऽपि। सूत्रमिदमडादिव्यवधाने नस्य णत्वं विधत्ते। तत्र विचारपथमवतरति यदडादीनां सर्वेषां व्यवाये णत्वं विधीयेत प्रत्येकं व्यवधाने वा? इयं शङ्का अत एवोत्थिता भवति यल्लोके दृश्यते द्विविधा प्रवृत्तिः—वाक्यपरिसमाप्तिः, प्रत्येकं परिसमाप्तिश्च। समुदाये वाक्यपरि-समाप्तिर्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति वाक्ये प्रयुक्ते सति समुदाय एव दण्ड्यते न प्रत्येकं दण्ड्यते। प्रत्येकं वाक्यपरिसमाप्तिर्यथा—गुणवृद्धी संज्ञे प्रत्येकं भवतः। एवञ्चानयोर्पक्षयोर्मध्ये कः पक्षस्तावदत्र ग्राह्य इति विचारे न तावदत्र प्रथमः पक्षः युक्तः। यतो हि तथा स्वीकारे क्वचिदपि णत्वं नैव स्यात्। न ह्यडादीनां सर्वेषां व्यवधानं क्वचिदपि सहैव सम्भवति। यदि द्वितीयः पक्षः स्वीक्रियते, तदा अर्केणेत्यत्र णत्वं नैव स्यात्। अत्र चाटः कवर्गस्य च व्यवधानं वर्तते तस्मात् किमर्थं कार्यमिति प्रश्ने एतदेव निश्चीयते यदडादीनां मध्ये प्रत्येकं यथासम्भवं मिलितैश्च व्यवायेऽत्र णत्वं भवति नकारस्य। यथा—'गर्गैः सह न भोक्तव्यम्' इत्युक्ते प्रत्येकेण सह न भुज्यते समुदितैः सहापि न भुज्यते। तथैवात्राप्यडादीनां व्यस्तानां समस्तानां च यथासम्भवं व्यवाये णत्वं भवतीति

निश्चेतव्यम्। अड्व्यवाये—गुरुणा, हरिणा इत्यादीन्युदाहरणानि। कवर्गव्यवाये—अर्केण, मूर्खेण, गर्गेण, अर्घेण। पवर्गव्यवाये—दर्पेण, रेफेण, गर्भेण, चर्मणा, कर्मणा। आङ्व्यवाये—पर्याणद्धम्, निराणद्धम्। नुम्व्यवाये—बृंहणम्, बृंहणीयम्। अत्र बृहि वृद्धाविति धातोः इदितो नुम् इति नुमि नश्चापदान्तस्य झलीत्यनुस्वारो जातः। न चात्रानुस्वारेणैव व्यवायः, न तु नुमा तर्हि कथमत्र णत्वमिति शङ्का कर्तव्या। यतो ह्यत्र नुम्ग्रहणमनुस्वारोपलक्षणं वर्तते। यथा—'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्युक्ते सति दिवा सत्यपि नक्षत्रे वाचो विसर्जनं नैव भवति। यदा च न दृश्यते नक्षत्रं मेघाच्छन्ने नभसि तत्रापि समायाते नक्षत्रदर्शनयोग्ये काले वाग्-विसर्जनं भवत्येव। अत्र नक्षत्रपदं नक्षत्रदर्शनयोग्यकालोपलक्षणमवतिष्ठते। तथैव रीत्या अत्रापि नुम्ग्रहणमनुस्वारोपलक्षणं जातम्। फलस्वरूपं यत्र साक्षात् नुम् दृश्यते, यथा—प्रेन्वनमित्यादौ तत्र तु णत्वं नैव भवति। यत्र तु नकारस्थानिकः अनुस्वारो दृश्यते, तत्रैव णत्वं भवति। यथा—बृंहणमित्यादौ।

अस्मिन् सूत्रे यदाङ्ग्रहणं कृतं यदीयञ्चोदाहरणं दत्तं पर्याणद्धमित्यादि-प्रयोगविशेषः, तत्तु सम्यङ् न प्रतिभाति। यतो ह्याङा व्यवाये तु अड्व्यवायं मत्त्वैव णत्वं सेत्स्यति। अण् सवर्णान् गृह्णातीति नियमेनैव आङोऽप्यड्ग्रहणेनैव ग्रहणं भविष्यति। एवञ्च सूत्रे आङ्ग्रहणं व्यर्थमेवेति न शङ्कनीयम्। असत्याङ्ग्रहणे पदव्यवाये न णत्वमित्यर्थकेन पदव्यवायेऽपीति सूत्रेण अड्व्यवाये प्राप्तं णत्वं प्रतिसिद्ध्येदिति तद्बाधनार्थं सूत्रे आङ्ग्रहणं सार्थकमिति वेदितव्यम्।

अट्कुप्वाङ्नुम्व्यवायेऽपीति सूत्रेण व्यवाये यण्णत्वं विधीयते तत्तु समानपद एव। समानपदत्वञ्च पदाघटितत्वरूपम्। अस्यां स्थितौ द्रुरिव नासिका यस्य स द्रुणस इत्यादिप्रयोगेषु णत्वं कथं स्यात्? न ह्यत्र समानपदत्वं वर्तते। समासत्वेन द्रुणसशब्दस्य पदघटितत्वात्। तस्मादेतादृशानां प्रयोगाणां सिद्ध्यर्थं सूत्रं कृतम् 'पूर्वपदात्संज्ञायामगः'। अस्मिन् सूत्रे रषाभ्यामिति पदमनुवर्तते। न च केवलस्य रकारस्य षकारस्य वा पूर्वपदत्वं सम्भवति इति पूर्वपदस्य पूर्वपदस्थे लक्षणां विधाय पूर्वपदस्थाभ्यां रेफषकाराभ्यामुत्तरस्य नस्य णत्वं विज्ञायते। तेन द्रुणसः खरणसः इत्यादयः प्रयोगाः सिद्ध्यन्ति। इदञ्च णत्वम् ऋचामयनम् ऋगयनम् इत्यादौ गकारव्यवधाने न भवति। अत एव सूत्रे अगः ग्रहणं सार्थकं भवति। यदि चोच्यते यथा सर्वादीनि सर्वनामानीति सूत्रे सर्वनामशब्दे निपातनात् णत्वाभावो भवति, तथैव 'अण्टगयनादिभ्यः'[1] इत्यत्रापि निपातनादेव ऋगयनमित्यत्र णत्वाभावः

---

१. अष्टा. ४/३/७३।

सिद्धश्चेत् सूत्रे 'अगः' इति पदमनावश्यकमेवेति चेत् नेदं कथनमौचित्यमञ्चति। यतो ह्यबाधकान्यपि निपातनानि भवन्तीति सिद्धान्तात् सूत्रे अग्ग्रहणाभावे एकस्मिन् पक्षे ऋगयणमापद्येत। तस्मात् सूत्रे अग्ग्रहणमावश्यकमेवेति न सन्देहः।

इदमत्र विचार्यते यत् 'पूर्वपदात्संज्ञायामगः'[१] इति सूत्रं विध्यर्थं नियमार्थत्वं वा? ननु सिद्धे सत्यारम्भो नियमाय कल्पते चेत् कथमत्र द्रुणस इत्यादिप्रयोगेषु णत्वं सिद्धं येनात्र नियमार्थत्वं वक्तुं युक्तं स्यात्। न ह्यत्र वर्तते समानपदत्वम्। द्रुणस इत्यत्र समासस्य सत्त्वेन पदघटितत्वमेव वर्तते। फलस्वरूपं पदाघटितत्वरूपसमानपदत्वाभावो वर्तत एवेति अट्कुप्वेति सूत्रेण णत्वं नैव सिद्ध्यति।

अत्रोच्यते—यद्यपि समासार्थाभ्यां पदाभ्यां या विभक्तिरुत्पद्यते, तस्यां लुप्तायामपि प्रत्येकं प्रत्ययलक्षणेन पदसंज्ञायां सत्यां नास्ति पदाघटितत्वरूपं समानपदत्वं, तथापि समासाद् या विभक्तिरुत्पद्यते तया समुदायस्यैव पदत्वमिति समुदायापेक्षया समानपदत्वमस्त्येव। अत्र हि समानपदत्वमाश्रीयते, न भिन्नपदत्वं प्रतिषिध्यते। तस्माद् अट्कुप्वेति सूत्रेण प्रस्तुतोदाहरणे णत्वे सिद्धे सूत्रमिदं नियमार्थमेव। स च नियमः सजातीयापेक्षः। पूर्वपदमुत्तरपदं चेत्युभावपि सम्बन्धिशब्दौ। अतः पूर्वपदादुत्तरपदमाक्षिप्यते। तेन पूर्वपदस्थान्निमित्तात्परस्योत्तर-पदस्थस्य नस्य णत्वं चेत् तर्हि संज्ञायामेवेति नियमयतीदं सूत्रम्। तेन द्रुणसः इत्यादयः प्रयोगाः सिद्ध्यन्ति। चर्मनासिकेत्यत्र तु न णत्वम् संज्ञात्वाभावात्। मातृभोगीणः खारपायिणः इत्यादौ तूत्तरपदस्थो नकारो नास्ति, किन्तु तद्धितीयः नकारः। करणप्रियः इत्यत्र तु न उत्तरपदस्थो नकारः, किन्तु पूर्वपदस्थो नकारः। एवञ्च नियमानाक्रान्तत्वेनात्राट्कुप्वेति सूत्रेण णत्वं भवत्येव। बालमनोरमाकारस्तु द्रुणस इत्यादौ समासाधारमेकपदत्वं न स्वीकुरुते किन्त्वत्र पदद्वयमस्तीति मन्यते। तेन पूर्वसूत्रेण णत्वस्याप्राप्तौ 'पूर्वपदात्संज्ञायामगः' इति सूत्रं द्रुणस इत्यादौ णत्वविधानेन विध्यर्थमेव।

वनशब्दघटकनकारस्य पुरगावणमित्यादौ णत्वविधानार्थं वनं 'पुरगामिश्र-कासिध्रके'[२] त्यादिसूत्रं कृतं वर्तते। तत्र पुरगावणमित्यादौ पूर्वपदात्संज्ञायामगः इत्यनेनैव णत्वे सिद्धे 'वनं पुरगा' इति सूत्रं नियमार्थं भवति। नियमाकारश्चेत्थम्—पुरगादिभ्य एव परस्य वनो नकारस्य णत्वं भवति नान्येभ्यः।

---

१. पाणिनीयाष्टाध्यायी-८/४/३; २. तत्रैव-८/४/३।

तेन कुबेरवनम् शतधारवनम् इत्यादौ णत्वं न भवति। अत्र पुरगादयः शब्दाः कृतदीर्घा एव लिखिताः सन्ति। तेन यत्रैषां दीर्घत्वं तत्रैव नियमः प्रवर्तते।

न च गकारव्यवधाने पुरगावणमित्यत्र कथं पूर्वसूत्रेण णत्वं सिद्धम्, न वात्राट्कुप्वाङ्नित्यादिनापि णत्वं साधयितुं शक्यम्, समानपदत्वाभावात्। यदि समासरूपमिकं पदमादाय समानपदत्वं सम्पाद्यते तदा स्यान्नाम कथञ्चिदट्कुप्वेति सूत्रेण णत्वस्य सिद्धिरिति वक्तुं शक्यम्। अत एव काशिकाकारेणाट्कुप्वेति सूत्रेण णत्वसिद्धिमाश्रित्य सूत्रस्यास्य नियमार्थत्वमुररीकृतम्।

बालमनोरमाकारस्तु पुरगावणमित्यादौ पदद्वयघटितत्वात् समानपदत्वं नास्तीति अट्कुप्वेत्यादिना णत्वं सिद्धमिति न स्वीकरोति। पूर्वपदात् संज्ञायामित्यनेनापि नैवात्र णत्वं सिद्धम्, गकारव्यवधाने तस्य प्रवृत्तेर्वक्तुमशक्यत्वात्। अस्यां स्थितावत्र णत्वं कथं सिद्धं येनास्य सूत्रस्य नियमार्थत्वं स्यात्। अत्रोच्यते—अगः इति पञ्चम्यन्तं पदम्। तस्माद् गकारान्तपूर्वपदात् परस्य नस्य णत्वं न भवतीति सूत्रार्थो लभ्यते। पुरगाशब्दस्त्वाकारान्त एव न तु गकारान्तः। अतः अगः इति निषेधाप्राप्त्या पूर्वपदात्संज्ञायामगः इति सूत्रेणैव णत्वं सिद्धमिति वनं पुरगा इत्यादिसूत्रं नियमार्थमेव। पुरगावणमिति नरकविशेषस्य संज्ञा। णत्वविधौ पुरगा इत्यादयः शब्दाः दीर्घान्ताः। दीर्घस्तु तेषां संज्ञायामेव भवति। एवञ्चासंज्ञायां दीर्घाभावात् वनं पुरगेति सूत्रेण णत्वं नैव भवति। नकारनिष्ठस्थानितानिरूपितणकारनिष्ठविधेयता-प्रयोजकता यथा रकारे वर्तते तथैव णकारेऽपि वर्तते। तथ्यमिदं सत्यापयितुमवतरति सूत्रम् 'प्रातिपदिकान्तनुम्विभक्तिषु च'। सूत्रमिदं प्रातिपदिकान्तनकारस्य, नुमो नकारस्य विभक्तिस्थनकारस्य च णत्वं विकल्पेन विधत्ते। स च नकारः पूर्वपदस्थात् निमित्ताद् रेफात् णकाराद् वा परत्वेनाश्रितः स्यात्। तत्र प्रथमस्योदाहरणं माषवापिणौ, माषवापिनौ इति रूपद्वयम्। पुनः पुनः माषान् वपत इति विग्रहे बहुलमाभीक्ष्ण्ये इति णिनि प्रत्यये निष्पन्ने माषवापिन् शब्दे नकारः षकारात् परः प्रातिपदिकान्तश्चेति भवत्येवात्र वैकल्पिकं णत्वम्। यदा तु माषान् वपन्तीति विग्रहः तदा 'कर्मण्यण्'[१] इति सूत्रेण अणि क्लीबात् माषवापशब्दात् जसि शौ नुमि 'माषवापानि' इति स्थितौ नुमो नकारस्य पाक्षिकं णत्वमत्र बोध्यम्। अस्मादेव माषवापशब्दात् तृतीयैकवचने विभक्तौ इनादेशे विभक्तिस्थनकारस्यापि अनेन वैकल्पिको णकार इति माषवापेण, माषवापेन इति रूपद्वयं सिद्धं भवति।

---

१. पाणिनीयाष्टाध्यायी-३/२/१।

सूत्रेऽस्मिन् पूर्वपदादिति पदमधिकृतं भवति। पूर्वपदं तु तत्रैव भवति यत्रोत्तरपदं स्यात्। अस्यां स्थितौ सूत्रार्थ एवं भवति यद् पूर्वपदस्थान्निमित्तात् परस्योत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वं विधीयते। एतादृशार्थस्य फलमिदं भवति यद् गर्गाणां भगिनी गर्गभगिनीति प्रयोगे नस्य णत्वं नैव भवति। उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव नस्य णत्वमित्यर्थे कृते यदत्र भगिनी इत्येतच्छब्दरूपं न तदुत्तरपदम्। अत्रोत्तरपदं तु "भगिनी" इति पदम्। तच्च न प्रातिपदिकम्। "अप्रत्ययः" इति पर्युदासेन तस्य प्रातिपदिकत्वनिषेधात्। अत एवात्र णत्वं न।

यदि कुत्रापि "गर्गभगिणी" इत्ययमपि प्रयोगोऽस्ति दृष्टचरस्तदा कथं तत्र णत्वमिति विचिकित्सा चेदवधारणीयमित्थम्—गर्गाणां भगः गर्गभगः, सोऽस्यास्तीति विग्रहे स्त्रियां मत्वर्थीये इनि प्रत्यये "पूर्वपदात् संज्ञायामगः" इति सूत्रेण पूर्वपदात् परस्योत्तरपदस्थस्यैव नकारस्य णत्वं संज्ञायामिति नियमकरणात् "गर्भभगिणी" इति प्रयोगे णत्वं सिद्ध्यति। नात्र णकारः उत्तरपदस्थः; किन्तु तद्धितीयोऽत्र नकारः। णत्वं चात्र 'मातृभोगीणवत्' अट्कुप्वाङिति सूत्रेणैव बोध्यम्। न चात्र समानपदत्वाभाव इति शङ्का युक्ता। यतो हि यद्यपि समासघटकपदाभ्यां या विभक्तिरुत्पन्ना तस्यां लुप्तायामपि प्रत्ययलक्षणेन पदत्वं वक्तुं शक्यते, तथापि समासाद् या विभक्तिरुत्पन्ना तया समुदायस्यैव पदत्वमिति समानपदत्वस्वीकारे न किमपि बाधकमिति बोध्यम्।

अत्रेयमाशङ्का जायते यद् यद्युत्तरपदं प्रातिपदिकमभिप्रेतं तदा "माषवापिणी" इति प्रयोगे नकारस्य णत्वं नैव स्यात्। अत्र यदुत्तरपदं 'वापिनी' इति न तस्यान्तो नकारः। यस्य च वापिन् इत्यस्यान्त्यो नकारः, न तदुत्तरपदमिति कथमत्र णत्वमिति चेदत्र "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति वचनात् सुबुत्पत्तेः प्रागेव कृदन्तेन सहैव समासो जायते। तेनात्र वापिन् इति कृदन्तत्वात् प्रातिपदिकं तथोत्तरपदमपीति न कापि बाधा अत्र णत्वविधाने इति बोध्यम्।

अस्मिन् णत्वविधिप्रकरणे "वृत्रहणौ" इत्यादिप्रयोगेषु णत्वविधानार्थं कृतं सूत्रम्—'एकाजुत्तरपदे णः'[१] इति। तत्र वृत्रहन्शब्दसिद्धिरेवं भवति—वृत्रं हतवान् इति विग्रहे "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विपि तल्लोपे उपपदसमासे सामासिकविभक्तिलुकि 'वृत्रहन्'शब्दः। यद्यपि "प्रातिपदिकान्तनुम्विभक्तिषु च" इति

१. पाणिनीयाष्टाध्यायी-८/४/१२।

सूत्रेणैव 'वृत्रहणौ' इत्यत्र णत्वं सिद्धमस्ति। वर्तते अत्रापि प्रातिपदिकान्तनकारो माषवापिणौ इतिवत्; किन्तु नेष्टं वैकल्पिकं णत्वमत्रेति कृतं सूत्रम्—"एकाजुत्तरपदे णः" इति। अत एव सूत्रे णग्रहणं सार्थक्यमुपैति। अन्यथा 'रषाभ्यां नो णः समानपदे' इति सूत्रादेव णकारानुवृत्त्यैव सिद्धे सूत्रे णकारग्रहणं व्यर्थमेव स्यात्।

भट्टोजिदीक्षितस्तु यद्यत्र पाक्षिकं णत्वमभिप्रेतं स्यात् तदा प्रातिपदिकान्ते-त्यादिना सूत्रेणैव णत्वे सिद्धे सूत्रमिदमनावश्यकं स्यात्। तस्मादारम्भसामर्थ्यादेव सिद्धमस्य नित्यत्वमिति पुनर्णग्रहणं सूत्रे स्पष्टार्थमिति स्वीकुरुते।

न चैवं "वृत्रहनः" इत्यत्रापि "एकाजुत्तरपदे णः" इति णत्वं कथं न भवति। यदि चोच्यते अत्रोत्तरपदे नास्ति अच् इति न णत्वमिति चेत् कथनमिदं न वरम्। यतो हि "अचः परस्मिन् पूर्वविधावि"ति सूत्रेण पूर्वस्माद् विधाविति पञ्चमी- समासद्वारा स्थानिवत्त्वेनोत्तरपदस्य साच्कत्वस्य साधयितुं शक्यत्वात्। यद्यत्र पञ्चमीसमासो न स्वीकृतः स्यात्, स्थानिवत्त्वञ्च न स्यात्, तदापि "प्रातिपदिकान्तनुम्विभक्तिषु च"[१] इत्यनेन किं वा "कुमति चे"[२]ति सूत्रेण णत्वं कथं नेति प्रश्ने 'हन्तेरत्पूर्वस्य'[३] इति नियमाद् अत्पूर्वकस्यैव हन्तेर्नस्य णत्वमिति स्वीकारान्नात्र णत्वाशङ्का कथमपि कर्तुं शक्येत्यलम्।



१. पाणिनीयाष्टाध्यायी-८/४/११।

२. तत्रैव-८/४/१३।

३. तत्रैव-८/४/२२।

# क्त्वाप्रत्ययार्थविचारः


**डॉ. एस.टी.के. श्रीरङ्गाचार्यः**

उपाचार्यः,

एस.जी.वी.पी.के.जे. ओ. महाविद्यालयः

राजामुन्द्री (आ.प्र.)




"समानकर्तृकयोः पूर्वकाले" (३.४.२१) अत्र समानकर्तृकयोरिति षष्ठी सप्तमी वा। समानशब्दः एकार्थवाची। समान एकः कर्ता ययोस्तौ समानकर्तृकौ। अत्र द्विवचनमविवक्षितम्। अत एव स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ त्रयाणां क्त्वा सिध्यति। प्रकृतसूत्रे भाष्ये "समानकर्तृकयोरिति बहुष्वप्राप्ति"रिति शङ्कां कृत्वा "सिद्धं तु क्रियाप्रधानत्वात् नात्र निर्देशस्तन्त्रम्" इति समाधानमुक्तं भगवता भाष्यकारेण। द्विवचनबहुवचनाऽन्यतरावश्यकत्वेन एकतरोपादानेऽन्यत्र न स्यादिति साधुत्वार्थमेव। लोकेऽपि इमौ चेद्व्याधितौ स्यातां देयं स्यादिदमौषधमित्यादौ द्वित्वस्याविवक्षा। तस्मादत्र द्विवचनमविवक्षितमेव। धातोः (३.१.९१) इत्यधिक्रियते। पूर्वकालेति तस्य विशेषणम्। पूर्वः कालो यस्यार्थस्य स पूर्वकालः। व्यापारश्चान्यपदार्थः, निर्धारणस्य सजातीयनियमेन निर्धार्यमाणस्य व्यापारत्वलाभात्। समानकर्तृकत्वञ्च क्रिययोरेव सम्भवः। पूर्वकाल इत्यस्य स्थाने भूते इति नोक्तम्, लाघवानादरात्, तथाबोधाननुभवाच्च। एवञ्च—समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसम्बन्ध्यर्थवाचकाद् धातोः क्त्वा भवतीति सूत्रार्थस्सम्पद्यते।

क्त्वाप्रत्ययस्य "क्त्वातोसुन्कसुनः" (१.१.४०) इति सूत्रेण क्त्वा-प्रत्ययान्तस्याव्ययसंज्ञा "कर्तरि कृत्" (३.४.६७) इति सूत्रेण सत्यपि कर्त्रर्थकत्वे क्तान्तस्याव्ययत्वेन अव्ययानां लिङ्गसंख्याकर्माद्यभिधायकत्वशक्तेरभावात् कर्त्रर्थकत्वं वक्तुं नैव शक्यते। अतः क्त्वाप्रत्ययो भाव एव भवति। उक्तञ्च वार्तिककृता "अव्ययकृतो भावे" इति। "कर्तरि कृत्" (३.४.६७) इति सूत्रे भाष्ये च अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति। तद्यथा—गुप्तिज्किद्भ्यः सन् (३.१.५),

"यावादिभ्यः कन्" ५.४.२९ इत्युक्तम्। एवमेव "स्वादुमि णमुल्" (३.४.२६) इति सूत्रे "आ च तुमुनः समानाधिकरणे" इति वार्तिकप्रत्याख्याने "न वक्तव्यम्। अव्ययकृतो भावे भवतीति भावे भविष्यन्ति। किं वक्तव्यमेतत्। न हि कथमनुच्यमानं गंस्यते। तुमर्थ इति वर्तते। तुमश्च कः? भावः" इति। "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (३.३.१०) इति सूत्रेण भावार्थे तुमुन्प्रत्ययः, कर्तरि ण्वुल् च विहितः। अतस्तुमुनादीनामसत्त्वभूतो भाव एवार्थः। उक्तञ्च भगवता भाष्यकारेण—"भावे तुमुन् विधीयते "कर्तरि ण्वुल् चेति" (३.३.१०)। अत एव "तुमर्थे सेनसेऽसेनक्से" कसेनध्यैअध्यैन्-कध्यैकध्यैन्यैध्यैशाध्येन्तवैतवैङ्तवेन" (३.४.९) इति तुमर्थे विहिताः। यथा— वक्षे शयः। वच्धातोः सेप्रत्ययः। कुत्वे षत्वम्। शरदो जीवसे धाः। अत्र जीवधातोः असेन्प्रत्ययः। नित्यादाद्युदात्तः। तुमुनः अर्थः तुमर्थः। भावे। यतो हि ण्वुल्प्रत्ययवत् तुमुन्प्रत्ययोऽपि कर्तरि कृदित्यनुशासनेन कर्तरि स्यात् सूत्रे "तुमर्थे" इत्यनावश्यकं भवेत्।

अपि च तेनैवानुशासनेन घञादयोऽपि कर्तरि स्युः। अतस्तुमर्थो न कर्ता किन्तु भावः। उक्तञ्च भाष्ये—"एवं तर्हि सिद्धे यत्र तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्योऽस्त्यन्यः कर्तुस्तुमुनोऽर्थ इति। कः पुनरसौ? भावः। इति अपि च तुमर्थेत्यनुवृत्त्या 'अव्ययकृतो भावे' इति वार्तिकं प्रत्याख्यातं भगवता भाष्यकारेण। एवञ्च अव्ययकृत् क्त्वाप्रत्ययो भावे भवतीति सिद्धम्।

किञ्च भोक्तुं पचति, भुक्त्वा व्रजतीत्यादौ भोजनपाकक्रिययो-र्भोजनव्रजनक्रिययोश्च एकवाक्यता सर्वानुभवसिद्धा। सा चैकवाक्यता विशेषणविशेष्यभावरूपसम्बन्धाधीना। विशेषणविशेष्यभावं विना द्वयोः क्रिययो-रेकवाक्यता असम्भवी। विशेषणविशेष्यभावं विनाप्येकवाक्यताङ्गीकारे व्रजतीत्यादावप्येकवाक्यतापत्तिः। एककर्तृका वर्तमानकालिकी भुजिक्रिया, एककर्तृका वर्तमानकालिकी व्रजिक्रियेति क्रियाद्वयमुख्यविशेष्यताशालि-बोधोऽनुभवसिद्धः। न तु तत्र मुख्यविशेष्यताशालिरूपैकवाक्यताऽनुभवसिद्धा। अतः प्रकृत्यर्थक्रिययोरेकवाक्यतासिद्ध्यर्थं विशेषणविशेष्यभावमावश्यकम्। तथा च भोजनव्रजनक्रिययोर्विशेषणविशेष्यभावनिरूपकः सम्बन्ध आवश्यकः। स च सम्बन्धो जन्यत्वं सामानाधिकरण्यं, पूर्वोत्तरभावो व्याप्यत्वमित्यनेकविधः। यथा भूतले घट इत्यादौ भूतलघटयोर्विशेषणविशेष्यभावनियामकः सम्बन्धः संयोगः। अनेकविधसंसर्गस्वीकारादेव 'भोक्तुं पचति भुक्त्वा तृप्तः' इत्यादौ भोजनजनिका

पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः। एवं जन्यत्वस्यापि संसर्गतया भानस्वीकारादेव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयोगः, तृप्तेर्जलपानजन्यत्वाभावात्। भुक्त्वा व्रजतीत्यादौ व्रजने भोजनाधिकरण-वृत्तित्वस्य भानाद् द्वयोः क्रिययोरेकाधिकरणनिष्ठैक्यस्यापि अर्थसिद्धत्वात् समानकर्तृकत्वं सिद्ध्यति। अतः पूर्वोत्तरभावः सामानाधिकरण्यञ्च भोजनव्रजन-क्रिययोर्विशेषणविशेष्यभावनियामकः संसर्ग इति भोजनसमानाधिकरणा तदुत्तरकालिकी व्रजनक्रियेति बोधः।

ननु पूर्वोत्तरभावः, समानकर्तृकत्वञ्च संसर्गमर्यादया भासत इत्येतावन्मात्राङ्गीकारे 'मुखं व्यादाय स्वपिति' इति प्रयोगो न स्यात्। स्वापकाल एव मुखव्यादानमिति व्यादानस्य स्वापपूर्वकालत्वाभावात्। तथा अधीत्य तिष्ठतीति प्रयोगस्याप्यनुपपत्तिः। अध्ययनस्थित्योः सहभावेनावस्थानादध्ययनानन्तर्यस्य स्थितावसत्त्वाद् चेत्, न, क्वचिद् व्याप्यत्वमपि संसर्गतया भासत इत्यङ्गीकारात्। अतः 'अधीत्य तिष्ठती'ति प्रयोग उपपद्यते। अध्ययनसहितस्तिष्ठतीत्यर्थः। न तु आदावध्ययनं कृत्वा तदुत्तरकाले तिष्ठतीत्यर्थः। यदा यदा तिष्ठति तदा तदा अध्ययनसहभावेनैव तिष्ठतीति यावत्। एवं 'मुखं व्यादाय स्वपिति' इत्यस्य यदा यदा हि स्वपिति तदा तदा तु मुखव्यादानसाहित्येनैव स्वपितीत्यर्थः। अत्र यदा यदा इति वीप्सया स्थितिस्वापयोर्व्याप्यत्वं, तदा तदा इत्यनेन चाध्ययनव्यादानयोर्व्यापकत्वञ्च सिद्धम्। एवञ्च व्यापकमध्ययनं विना कदापि न तिष्ठति, किन्तु निरन्तराध्ययनशालीत्यर्थः। तथा मुखव्यादानं व्यापकं विना कदापि न स्वपिति, किन्तु निरन्तरमुखव्यादानवत्स्वापनशालीत्यर्थः। एवञ्च तत्तत्काल-विशेषावच्छिन्नं यत्तत्कर्तृकमध्ययनं मुखव्यादानञ्च तन्निष्ठव्यापकता-निरूपितव्याप्यता तत्कर्तृकस्थितिस्वापयोर्बुध्यत इति तत्र तदभाववद्वृत्तित्व-रूपव्याप्यत्वसामानाधिकरण्यं च संसर्गमर्यादया भासते। ननु—

> "अवजानासि मां यस्मादतस्ते न भविष्यति।
> मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा"।। (रघुवंशम्, १.७७)

इति प्रयोगे क्त्वा कथं भवतीति चेत्, स्थितस्य इत्यध्याहारान्न दोषः। तथा च स्थितिक्रियामादाय समानकर्तृकत्वादेर्निर्वाहान्न क्त्वाप्रत्ययानुपपत्तिः। अतो मत्प्रसूतिकर्मकाराधनाभावसमानाधिकरणा या स्थितिस्तादृशस्थित्याश्रया-भिन्नत्वसम्बन्धी भविष्यत्प्रजाकर्तृकभवनाभाव इति बोधः। अपि च पूर्वोत्तरकालवृत्तित्वेऽव्यवधानांशोऽपि निवेशनीयः। पूर्ववर्षोत्पन्नं श्वशुरगृहे भोजनं,

साम्प्रतिकवर्षाधिकरणकञ्च व्रजनमादाय श्वशुरगृहे भुक्त्वा व्रजतीति प्रयोगापत्तिर्वार्यते। यतो हि तादृशभोजनव्रजनयोर्दीर्घकालकृतव्यवधानसत्त्वात्। अव्यवधानञ्च तात्पर्यवशात् क्वचिद् दण्डेन क्वचिन्मुहूर्तेन, क्वचिद् होरादिना यथायथं ग्राह्यम्। तेनाद्य भुक्त्वा श्वो गन्तेति न प्रयोगापत्तिः।

अयमत्र मञ्जूषाकाराणां नागेशभट्टानामाशयः—पूर्वकाल इति न बहुव्रीहिः; किन्तु पूर्वश्चासौ कालश्चेति कर्मधारयः। स च क्त्वाप्रकृत्यर्थे प्रकारः। विशेषण-विशेष्यभावश्च सम्बन्धमन्तरा अनुपपन्न इति क्त्वाप्रकृत्यर्थः आनन्तर्यसम्बन्धेन व्रजादिधात्वन्तरार्थेऽन्वयः। तथा च समानकर्तृकयोरर्थयोर्मध्ये पूर्वकाल-विशिष्टार्थवृत्तेर्धातोः क्त्वा भवतीति सूत्रार्थः। पूर्वकालविशिष्टेऽर्थे वर्तमानाद्धातो-रित्यर्थस्वीकारादेव पूर्वं भुङ्क्ते पश्चाद् व्रजतीत्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोक्तत्वान्नेति परिहार उक्तो भगवता। अत्र प्रयोगे पूर्वकालः पूर्वशब्दस्यैवार्थः, न तु धातोस्तत्र वृत्तिः। अतस्तत्र न क्त्वाप्रत्यय इति भाष्याशयः। उक्तार्थानामप्रयोग इति न्यायान्न क्त्वाप्रत्यय इत्यर्थस्तु तद्भाष्यस्य वक्तुं नैव शक्यते। तन्न्यायस्य द्योतकविषयेऽप्रवृत्तेः। किञ्च तद्भाष्यस्य तदर्थकत्वे इह कस्मान्न भवति आस्यते भोक्तुमिति क्त्वाप्रत्ययशङ्कापरभाष्यासङ्गतिः। तत्रापि फलार्थकतुमुना पूर्वकालत्वस्याऽऽसिक्रियायां द्योतितत्वेन तत्रापि स्वशब्देनोक्तान्नेत्यनेनैव क्त्वो वारणसम्भवात्। पूर्वकालत्वस्य तत्राप्रतीतौ तु तत्र कथं क्त्व आपादनम्। एवञ्च षष्ठ्याः सम्बन्धवाचकत्ववत् क्त्वादीनामपि समानकर्तृकत्वादिरूपसम्बन्धवाचकत्वं वक्तुं शक्यम्। एवमेककर्तृकत्व-पूर्वोत्तर-कालत्वापेक्षया अधिकतया यदङ्गीकृतं जन्यत्वव्याप्यत्वादिकमपि संसर्गतया भासत इति तदनावश्यकम्। भुक्त्वैव इति जन्यत्वस्य एवकारबललभ्यत्वाद् द्योत्यत्वमपि न स्वीकार्यम्। अधीत्य तिष्ठतीत्यत्रापि व्याप्यत्वस्यापि न द्योत्यत्वमावश्यकम्। प्रकरणेन जप्यत्वादिति।

एवं पर्यालोचने प्राचीनवैयाकरणानां नव्यवैयाकरणानां नाम हरदत्तदीक्षित-कौण्डभट्टनागेशादीनां मते समानकर्तृकत्वपूर्वकालत्वयोः संसर्गविधया भानम्। तत्रैव तात्पर्यग्राहकं क्त्वाप्रत्यय इति। एतच्च पाणिन्यादिमुनित्रयसम्मतम्। वाक्यपदीयकारैः प्रदर्शितञ्च। अतोऽनन्यलभ्यः शब्दार्थ इति न्यायेना-न्यलभ्यत्वात् नाम संसर्गविधया भानान्न तयोर्वाच्यता "समानकर्तृकयोः पूर्वकाले" (३.४.२१) इति सूत्राल्लभ्यते। अत एव "अव्ययकृतो भावे" इति

वार्तिकारम्भः। एवञ्च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहकं नाम द्योतकं क्त्वाप्रत्यय इति वैयाकरणानां सिद्धान्तः। उक्तञ्च भूषणकारिकायां दीक्षितेन—

'अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः'।।

तथा च भुक्त्वा व्रजतीत्यत्र तत्कर्तृकपूर्वकालवृत्ति भोजनोत्तरकालवृत्ति तत्कर्तृकं व्रजनमिति बोधः। पूर्वोत्तरकालवृत्तित्वं समानकर्तृकत्वञ्च द्वयमपि संसर्गविधया भासेते।

देवताधिकरणे ब्रह्मसूत्रशाङ्करभाष्ये भामत्यां "नन्वेवं सति ओदनं भुक्त्वा ग्रामं गच्छतीत्यत्रापि वाक्यभेदप्रसङ्गः। अन्यो हि संसर्गः ओदनं भुक्त्वेति। अन्यस्तु ग्रामं गच्छतीति, न, एकत्र प्रतीतेरपर्यवसानात्। भुक्त्वेति हि समानकर्तृकता पूर्वकालता च प्रतीयते" (ब्रह्मसू. १.३.३३) इत्युक्तम्। तद्व्याख्यातारः परिमलकारा अपि तामेव सरणिमनुसृत्य समानकर्तृकत्वं क्त्वा-प्रत्ययवाच्यमिति वदन्ति।

तेषामयमाशयः—समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसम्बन्धि-क्रियारूपार्थवाचकाद् धातोः क्त्वा भवतीति सूत्रार्थः। सूत्रे समानकर्तृकयोरिति सप्तमी। 'कर्तृकर्मणोः कृति, कर्मणि द्वितीया' इत्यादौ सप्तमीवत्। तत्र यथा कर्मत्वादयो द्वितीयादिवाच्यास्तथैत्रापि सप्तमीनिर्देशात् समानकर्तृकत्वं क्त्वाप्रत्ययवाच्यम्। एवं वाच्यत्वानङ्गीकारे तु 'ओदनं पक्त्वाहं भोक्ष्ये' इत्यत्र पक्त्वेति पचिधातोत्तरवर्तिना क्त्वाप्रत्ययेन कर्तुरनभिधानाद् अनभिहिताधिकारीयेण 'कर्तृकरणयोस्तृतीया' इति सूत्रेण कर्तरि तृतीया स्यात्। वाच्यत्वाङ्गीकारे क्त्वाप्रत्ययेन कर्तुरभिहितत्वान्न तृतीयापत्तिः।

न चानभिहिते (२.३.१) इत्यस्य अभिहिते न भवतीत्यर्थकतया प्रकृते 'भोक्ष्ये' इति तिङा कर्तुरभिहितत्वात् कथं तृतीयापत्तिरिति वाच्यम्। 'अनभिहिते' इत्यत्र प्रसज्यप्रतिषेधाश्रयस्यायुक्तत्वात् प्रसज्यप्रतिषेधाश्रयणे नञर्थस्य भवनक्रियान्वयितया अभिहितपदार्थेनान्वयाभावाद् असमर्थसमासापत्तिः, वाक्यभेदापत्तिश्च। तस्मादनभिहिते इत्यस्याभिहितभिन्ने कर्त्रादौ तृतीयादयो भवन्तीति पर्युदास आश्रयणीयः। तथा च 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र अभिहितभिन्ने कर्तरि तृतीयावारणाय समानकर्तृकत्वं क्त्वाप्रत्यय-वाच्यमित्यङ्गीकर्तव्यम्। अत एव 'प्रासादे आस्ते' इत्यत्र सप्तमी सिद्ध्यति।

प्रपूर्वकसद्लृधातोः करणाधिकरणयोश्चेति सूत्रेण घञ्प्रत्यये 'उपसर्गस्य घञ् मनुष्ये बहुलम्' इति सूत्रेण उपसर्गस्य दीर्घे प्रासाद इति भवति। प्रसीदन्त्यस्मिन्निति प्रासादः। यदि तु अभिहिते न भवतीति प्रसज्यप्रतिषेधाश्रयणे सदिक्रियानिरूपिताधिकरणत्वस्य घञ्प्रत्ययेनाभिहितत्वात् 'प्रासादे आस्ते' इत्यत्र सप्तमी न स्यात्। अभिहितभिन्ने भवतीति पर्युदासाश्रयणे तु सदिक्रियानिरूपिताधिकरणत्वस्य घञाऽभिहितत्वेऽपि आसिक्रियानिरूपिताधि-करणत्वस्यानभिहितत्वात् सप्तमी सिद्ध्यति। अतः पर्युदास एव आश्रयणीयः। तथा च 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र भोक्ष्ये इति भुजिधातूत्तरतिङा भुजिक्रियाकर्तुः अभिहितत्वेऽपि पचिक्रियाकर्तुरनभिधानेन अनभिहिते कर्तरि तृतीया प्राप्नोति। तद्वारणार्थं समानकर्तृकत्वं क्त्वाप्रत्ययवाच्यमित्यङ्गीकर्तव्यमिति।

तदयुक्तम्। "समानकर्तृकयोः पूर्वकाले" (३.४.२१) इति सूत्रात् कर्तुः वाच्यत्वालाभात्। समानकर्तृकयोरिति सप्तमीनिर्देशमात्रेण कर्तुर्वाच्यत्वं नैव लभ्यते। तथा सति "उदोऽनूर्ध्वकर्मणि" (१.३.२४) कर्तृस्थे चाशरीरे कर्मणि (१.३.३७), "प्रथने वावशब्दे" (३.३.३३) इत्यादौ व्यभिचारात्। यतो हि अनूर्ध्वकर्मणि द्योत्ये उत्पूर्वकस्याधातोः "उदोऽनूर्ध्वकर्मणि" (१.३.२४) इति सूत्रेणात्मनेपदं विधीयते। यथा मुक्तावुत्तिष्ठते। सप्तमीनिर्देशमात्रेण अनूर्ध्वकर्म न हि आत्मनेपदार्थः। तत्तु उदिति उपसर्गेण द्योत्यते। एवं "क्रोधं विनयते" इत्यादौ कर्तृस्थे कर्मणि नीञ्-धातुनाऽभिधीयमाने "संमाननोत्सञ्जनायार्थकरणज्ञानभृति-विगणनव्ययेषु नियः" (१.३.३६) इति विहितमात्मनेपदं शरीरावयवभिन्नं निरूप्यते। न ह्यत्रापि अशरीरकर्म आत्मनेपदार्थ इति वक्तुं शक्यते खलु 'एवमेव' 'प्रस्थाने वावशब्दे' इत्यत्रापि प्रकृते समानकर्तृकयोः पूर्वकाल इति च क्रियाया विशेषणं न तु क्त्वाप्रत्ययस्य। तथा च समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा भवतीति सूत्रार्थस्सम्पद्यते। यदि कर्तुः क्त्वावाच्यत्वं सूत्रकारस्यापि सम्मतं स्यात्, तर्हि समानकर्तृकयोरित्यपनीय समानकर्तरि इति वदेत्। कर्तरि कृत् इत्यादिवत्। तस्मात् सूत्राक्षरमर्यादया कर्तुः क्त्वाप्रत्ययवाच्यत्वं दुर्लभमेव। अतः क्त्वाप्रत्ययो द्योतक एव न तु वाचकः।

एवं तर्हि 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र 'अनभिहिते' इति सिद्धान्तपक्षे पर्युदासपक्षे अहमित्यत्र अस्मच्छब्दात् कर्तरि तृतीयावारणं कथमिति चेत्, कर्त्रादे-रेकत्वे प्रधानतिङन्तार्थक्रियानिरूपितशक्त्यनभिहितेऽपि अभिहितवद्भवति। तेन 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र आख्यातान्तपदवाच्या भुजिक्रिया प्रधानक्रिया।

क्त्वाद्यन्तपदवाच्या पचिक्रिया अप्रधानक्रिया। यतो हि भावप्रधानमाख्यातमिति यास्कोक्तेः। इदं हि यास्कवचनं नामाख्यातोपसर्गनिपातानां चतुर्णां पदानां मध्ये आख्यातस्य लक्षणम्। नामलक्षणं सत्त्वप्रधानानीति। आख्यातलक्षणं भावप्रधानमिति। आख्यायते सर्वप्रधानीभूतोऽर्थोऽनेनेति व्युत्पत्त्या धातुराख्यातपदेनोच्यते। तथा च भावप्रधानबोधजनकत्वं धातोर्लक्षणम्। अतस्तिङन्तोपस्थाप्यक्रियाविशेष्यभूता सा चात्र भोक्ष्ये इति भुजिक्रिया। एवञ्च प्रधानीभूतभुजिक्रियानिरूपितकर्तृत्वशक्तेरभिहितत्वात् तदनुरोधेन अप्रधानीभूतपचिक्रियानिरूपितकर्तृत्वशक्तिरपि अभिहितवद्भवतीति कर्तरि तृतीया न भवति। एवमेव प्रधानक्रियानिरूपितशक्त्यनभिहितत्वे तदनुरोधेनाप्रधानक्रियानिरूपितशक्तिरपि अनभिहितवद्भवति। अत एव "प्रासादे आस्ते" इत्यत्राप्रधानीभूतसदिक्रियानिरूपिताधिकरणशक्त्यभिहितत्वेऽपि प्रधानीभूतासिक्रियानिरूपिताधिकरणशक्त्यनभिहितत्वात्तदनुरोधेनानभिहितवद्भवतीति अनभिहिते सप्तमी भवति। अत एव "स्वादुमि णमुल्" (३.४.२६) इति सूत्रस्य भाष्यव्याख्यानपरे वाक्यपदीये साधनसमुद्देशे भर्तृहरिणा एवमुक्तम्—

> प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
> शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते।।
> प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
> यथा गुणे तथा तद्वदनुक्तापि प्रतीयते ।। इति।

घटकपदबोध्यप्रधानक्रियानिरूपिता एकद्रव्यनिष्ठा पृथक्शक्तिस्तत्र गुणक्रियानिरूपिता शक्तिः प्रधानक्रियानिरूपितां शक्तिमनुरुणद्धि, इति प्रथमकारिकाया अर्थः। द्वितीयकारिकायां प्रत्ययेन प्रधानक्रियावाचिधातूत्तरप्रत्ययेनेत्यर्थः। एवञ्च प्रधानक्रियानिरूपिता कारकशक्तिर्यदा प्रत्ययेन तिङाऽभिधीयेत, तदा गुणक्रियानिरूपिता कारकशक्तितदुत्तरप्रत्ययेनानभिहितापि अभिहितवत्प्रतीयत इति स्पष्टमवगम्यते।

किञ्च गुणक्रियानिरूपितकारकशक्तेः प्रधानक्रियानिरूपितकारकशक्त्यनुरोधित्वानभ्युपगमे 'पक्त्वा ओदनो मया भुज्यते' इत्यत्र भुजिधातूत्तरतिङ्प्रत्ययेन भुजिक्रियानिरूपितकर्मत्वस्योक्तत्वेऽपि पचिक्रियानिरूपितकर्मत्वस्य पचिधातूत्तरक्त्वाप्रत्ययेनानभिहितत्वात्। ओदनपदोत्तरमनभिहिते कर्मणि द्वितीया स्यात्। तद्वारणार्थं क्त्वाप्रत्ययस्य कर्मवाचकत्वमप्यङ्गीकर्तव्यम्, तत्तु असङ्गतम्।

गुणक्रियानिरूपितकारकशक्तेः प्रधानक्रियानिरूपितकारकशक्त्यनुरोधित्वानुसरणे तु तिङन्तोपात्तप्रधानभुजिक्रियानिरूपितकर्मत्वशक्तेः तिङा अभिधानाद् गुणभूतक्रियानिरूपितायाः कर्मत्वशक्तेः क्त्वाप्रत्ययेनाभिहितत्वेऽपि अभिहितवत् प्रतीयमानत्वान्न द्वितीयापत्तिः। स्पष्टमेतत्सर्वं "स्वादुमि णमुल्" (३.४.३१) इति सूत्रे भाष्ये।

तस्माद् भुक्त्वा व्रजतीत्यादौ समानकर्तृकत्वं पूर्वकालत्वं च संसर्गविधया भासते। अनन्यलभ्यः शब्दार्थ इति न्यायेन क्त्वाप्रत्ययस्य न तत्र वाच्यत्वं दुर्लभम्। प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहको नाम द्योतकः क्त्वाप्रत्यय इत्येव पाणिन्यादिमुनित्रयसम्मतमिति वैयाकरणानां सिद्धान्तः।

आबाहुपुरुषाकारं शङ्खचक्रगदाधरम्।
सहस्रशिरसं श्वेतं पतञ्जलिमुपास्महे।।इति।



# न्यायवैशेषिकदर्शनयोरात्मलक्षणविवेचनम्

**डॉ. सर्वेश्वरराजहंसः**
आचार्यः, न्यायवैशेषिक-विभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



"विभवान्महानाकाशस्तथा चात्मा[१]" इति वैशेषिकसूत्रे सप्तमाऽध्याये प्रथमाह्निके उपलभ्यमानं द्वाविंशं सूत्रमाश्रित्य आत्मा यद्यपि स्पष्टतया लक्षयितुं न शक्यते, तत्र सर्वमूर्तद्रव्यसंयोगित्वलक्षणवैभवात् परममहत्त्वेन आकाशतुल्यतामात्र-प्रतिपादनात्। तथापि कथञ्चिदिदं सूत्रमात्मलक्षणनिर्देशकं मत्वा आत्मा वक्ष्यमाणप्रकारेण लक्षयितुं शक्यते। तथा हि आकाशकालदिग्भ्यो भिन्नः सर्वमूर्तद्रव्यसंयोगी यः, स आत्मा। किं वा आकाशादिभ्यो भिन्नः परममहत्परिमाणाश्रय आत्मा। उक्तयोर्लक्षणयोराद्यं यथाश्रुतमात्मनि कदापि नोपपद्यते। कालभेदेन उत्पत्तिविनाशशालिनां मूर्तद्रव्याणां युगपत्सन्निधानासम्भवाद् उपपादयितुमशक्यत्वात्। संयोगस्य एकैकद्रव्यप्रतियोगिकतया कुत्रापि संयोगे सर्वमूर्तद्रव्यप्रतियोगिकत्वस्यानुपपत्तेः। विभुद्वयसंयोगाभ्युपगमे लक्षणे मूर्तपदोपादानस्य वैयर्थ्यापत्तेः। सर्वद्रव्यमध्ये तत्तदात्मनोऽपि प्रवेशेन स्वस्मिन् स्वसंयोगस्य दुर्घटतया सर्वद्रव्यसंयोगित्वस्य कुत्राप्यात्मनि सङ्गत्यसम्भवेन मूर्तपदत्यागेऽपि लक्षणानुपपत्तेश्च।

उक्तदोषपरिहाराय संयोगसम्बन्धेन मूर्तत्वव्यापकत्वमपि लक्षणतया निर्वक्तुमशक्यम्। जन्यद्रव्येषूत्पत्तिकालावच्छेदेन प्रलयावच्छेदेन च आत्मसंयोगस्याभावेन जन्यद्रव्यनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताया एवात्मनि सत्त्वेन मूर्तद्रव्यनिष्ठाभावाप्रतियोगित्वलक्षणमूर्तत्वव्यापकत्वस्य दुर्घटत्वात्। अभावे प्रतियोगिवैयधिकरण्यं निवेश्यापि लक्षणस्य निर्दोषता नोपपादयितुं शक्या। संयोगसम्बन्धेनात्मगुणोभयाभावस्य मूर्तद्रव्यनिष्ठस्य प्रतियोगिताया आत्मनि विद्यमानतया उक्तस्य मूर्त्तत्वव्यापकत्वस्यासम्भवात्।

---

१. वैशे. सूत्रम् (अध्यायः-७, आह्निकम्-१, सूत्रम्-२२)।

मूर्त्तत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमपि नोक्तदोषवारणप्रवणम्, उक्तोभयाभावप्रतियोगितावच्छेदकत्वस्य आत्मत्वे सत्त्वात्। मूर्तनिष्ठाभाव-प्रतियोगितानवच्छेदकस्य द्रव्यत्वस्य पृथिव्यादावपि सत्त्वेनातिव्याप्तेश्च।

द्वितीयं लक्षणमुक्तविधदोषराहित्येऽप्याकाशाद्यनवबोद्धुरात्म-प्रत्यायकत्वासम्भवेन स्वीकर्त्तुमनर्हम्। आकाशादिश्च आत्मनो बोधात् प्राग् दुर्ज्ञेयः। पृथिव्याद्यष्टद्रव्यानाश्रिततत्वविशिष्टद्रव्याश्रितत्वेन अनुमेयस्य शब्दस्याश्रयतयैव बोध्यत्वात्, हेतुघटकसत्यन्तार्थदले आत्मनोऽप्रवेशे तदतिरिक्तस्य द्रव्यस्य शब्दाश्रयतया सेद्धुमशक्यत्वात्। अत उक्तसूत्रघटकस्यात्मपदस्याश्रयेणैव तत्सूत्रस्य आत्मलक्षणनिर्देशकता स्वीकर्त्तुं शक्या। तथा हि शक्तिभ्रमाजन्य-लक्षणाग्रहाजन्यात्मपदजन्यप्रतीतिविषयत्वमात्मत्वम्। परमिदमपि विचार्यमाणं नौचित्यमञ्चति। आत्मपदस्य बहुभिर्बहुत्र मनस्यपि प्रयुज्यमानतया अतिरिक्तात्मन्येव आत्मपदशक्तेः निर्धारयितुमशक्यत्वात्। अत आत्मपदं पृथिव्याद्यष्टद्रव्य-व्यावृत्यात्मत्वजातिप्रवृत्तिनिमित्तकं मत्त्वा मनसि तत्प्रयोगं चौपचारिकं मत्त्वा आत्मत्वजातिरात्मनो लक्षणमित्यत्रोक्तसूत्रनिर्देशः कथञ्चित् स्वीकर्तुं शक्यः।

**प्रशस्तपादीयमात्मनो लक्षणम्**

प्रशस्तपादभाष्ये "आत्मत्वाभिसम्बन्धादात्मा"[1] इत्युक्त्वा आत्मत्वस्या-भिमतः सम्बन्धः आत्मलक्षणत्वेनाभिहितः। सम्बन्धे अभिमतत्वञ्च कालिकादि-सम्बन्धव्यावर्त्तनाय, तादृशः सम्बन्धः समवायः। एवञ्चात्मत्वप्रतियोगिकसमवायः आत्मलक्षणमिति लभ्यते। समवायसम्बन्धेन आत्मत्वन्तु नात्मलक्षणं भवितुमर्हति। समवायस्यैकतया सत्तायाश्च सम्बन्धिसत्ताया नियामकतया रूपादिसमवायिनि पृथिव्यादावपि समवायेनात्मत्वस्य विद्यमानत्वसम्भवेन तत्रातिव्याप्तेः। आत्मत्वप्रतियोगिकसमवायस्य च लक्षणत्वे न दोषः, तत्प्रतियोगिकत्वविशिष्ट-सम्बन्धस्यैव तद्वत्तानियामकत्वात्। आत्मत्वप्रतियोगिकत्वविशिष्टसमवायस्य चात्मन्येव सत्त्वेन पृथिव्यादिष्वतिव्याप्त्यसम्भवात्।

**किरणावल्यामात्मनो लक्षणम्**

"तथा चेन्द्रियाद्यधिष्ठातृत्वमात्मनो लक्षणम्"[2]। प्रस्तुतवाक्यसन्दर्भेण इन्द्रियाधिष्ठातृत्वस्य शरीराधिष्ठातृत्वस्य चात्मनो लक्षणत्वं प्रतिभाति। तत्रेन्द्रियाधिष्ठातृत्वं जनकताख्यपरम्परासम्बन्धेनेन्द्रिये ज्ञानवत्तासम्पादकत्वम्। शरीराधिष्ठातृत्वञ्चावेच्छदकताख्यपरम्परासम्बन्धेन शरीरस्य ज्ञानवत्तासम्पादकत्वम्।

---

१. प्रशस्तपादभाष्यम् (आत्मप्रकरणम्); २. किरणावली (आत्मप्रकरणम्)।

अयमाशयः—यदा आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन तदा इन्द्रियमात्मनि स्वसन्निकृष्टार्थविषयकस्य ज्ञानस्य जनकं भवति। तत्र आत्मा आत्ममनस्संयोगश्च ज्ञानस्य साक्षाज्जनकौ। इन्द्रियञ्च आत्मप्रेरितस्य मनसः संयोगं प्राप्य ज्ञानजनकतया परम्परया जनकम्, अर्थात् समवायसम्बन्धेन ज्ञानं प्रति इन्द्रियं स्वसंयुक्तमनस्संयोगसम्बन्धेन जनकम्। अतो इन्द्रियनिष्ठा ज्ञानजनकता परम्परारूपा एवमेव ज्ञानं शरीरावच्छिन्ने आत्मनि समवायेन जायते। अत आत्मा साक्षात् समवायसम्बन्धेन ज्ञानाश्रयः। शरीरञ्च ज्ञानाश्रयावच्छेदकतया ज्ञानवत्। अतः शरीरेण सह ज्ञानस्यावच्छेकताख्यः परम्परासम्बन्धः। इन्द्रिये शरीरे च ज्ञानवत्ता आत्मसापेक्षा। आत्मानं विना तयोर्ज्ञानवत्तायारनुपपत्तेः।

### न्यायलीलावत्यामात्मलक्षणम्

न्यायलीलावत्यामित्थमुक्तम्—"सुखोपादानमितरेभ्यो भिद्यते सुखोपादानत्वात्। न यदेवं न तदेवं यथारूपम्[१]। इमं वाक्यखण्डं व्याचक्षाणेन कण्ठाभरणकारेण इत्थमभिहितम्—"अत्रेतरपदेन ईश्वरोऽपि विवक्षितः। आत्मत्वावच्छेदेन इतरभेदो ज्ञानवत्त्वेनैव साध्य इति हृदयम्। सुखं क्वचिदाश्रितम्, गुणत्वादिति सामान्यतोऽदृष्टात् परिशेषसाहाय्यात् सुखोपादानं सिद्धम्, तस्येतरभेदः साध्य इति नाश्रयासिद्धिः।"[२] अनयोर्ग्रन्थयोरालोचनेनात्मनः सुखोपादानत्वस्वरूपं लक्षणं लभ्यते। सुखोपादानत्वञ्च सुखसमवायिकारणत्वम्। धर्मः सुखस्य निमित्तकारणम्, स च शास्त्रविहितकर्मणोऽनुष्ठानान्निष्पद्यते, शास्त्रविहितं कर्म चेष्टसाधनताज्ञानमूलकात् प्रवृत्तिलक्षणप्रयत्नाज्जायते। ईश्वरस्य नित्यतृप्ततया न किमपि तस्य इष्टम्। अतस्तस्य शास्त्रविहितकर्मसु स्वेष्टसाधनताज्ञानाभावेन न प्रवृत्तिः, अत एव च न तत्र धर्मोत्पत्तिः। धर्माभावादेव तत्र न सुखम्, अतो लक्षणमिदं जीवात्मन एवोपपद्यते। जीवेश्वरोभयसाधारणं लक्षणं जिज्ञास्यते चेत्, ज्ञानमिच्छाप्रयत्न एव वा तल्लक्षणमभ्युपेयम्। सुखोपादानतया जीवात्मनः सिद्धिरपि परिशेषसाहाय्येन गुणत्वहेतुकसामान्यतोऽदृष्टानुमानेन सुखे क्वचिदाश्रितत्वसाधकेनैव सिद्ध्यति।

### न्यायसूत्रे आत्मलक्षणम्

न्यायसूत्रे गौतमेन इच्छाद्वेषादीनामात्मलिङ्गत्वमुक्तम्।[३] तद् आत्मसाधकानुमानप्रदर्शनपरम्। इच्छादयः क्वचिदाश्रिता गुणत्वादित्यनुमानेन

---

१. न्यायलीलावती (आत्मप्रकरणम्); २. कण्ठाभरणम् (आत्मप्रकरणम्)।

३. न्यायसूत्रम्, १/१/१०।

परिशेषसहकृतेन आत्मा साध्यते। इयमुक्तिरात्मलक्षणप्रदर्शनपरतयाऽपि प्रतिपादयितुं शक्या। तदनुसारेण इच्छादिलिङ्गकं द्रव्यमात्मा इत्येवमात्मा लक्षयितुं शक्यते। तत्रेच्छादीनां सम्भूय न लक्षणत्वम्। एकैकमात्रस्यापि लक्षणत्वसम्भवेन अन्यप्रवेशवैयर्थ्यात्। तत्र यदि जीवात्मपरमात्मानौ उभौ लक्ष्यौ, तदा ज्ञानेच्छाप्रयत्नेषु प्रत्येकस्य लक्षणत्वम्। यदि च जीवात्मैव लक्ष्यस्तदा द्वेषः सुखं दुःखं वा प्रत्येकं लक्षणं भवितुमर्हति।

## आचार्योदयनोक्तमात्मलक्षणम्

श्रीमदुदयनाचार्येण लक्षणावल्याम् आत्मनो लक्षणमित्थमुक्तम्— "ज्ञानात्यन्ताभावरहित आत्मा"[१] इति। आत्मभिन्नानां समेषां पदार्थानां समवाय-सम्बन्धावच्छिन्नप्रतियोगिताकज्ञानात्यन्ताभावाश्रयतया न तत्र ज्ञानात्यन्ताभाव-राहित्यमिति प्रसज्यते। सुषुप्तौ प्रलये च जीवात्मसु ज्ञानाभावस्य सत्त्वेन अत्यन्तांशनिर्मुक्तं ज्ञानाभावराहित्यं न सङ्गच्छते। अतः तन्मात्रस्य लक्षणत्वमुपेक्ष्य ज्ञानात्यन्ताभावराहित्यं लक्षणतया आदृतम्। तथा च सुषुप्तौ खण्डप्रलये च जीवात्मसु ज्ञानध्वंसप्रागभावयोः सत्त्वेन ताभ्याञ्च सह अत्यन्ताभावस्य विरोधेन कदापि जीवात्मसु ज्ञानात्यन्ताभावस्याऽसत्त्वेन उक्तलक्षणं तत्र नानुपपन्नम्। ध्वंसप्राग्भावाभ्यां सह अत्यन्ताभावस्याविरोधपक्षे अत्यन्तपदस्य प्रतियोगि-व्यधिकरणार्थकत्वं मत्वा प्रतियोगिव्यधिकरणज्ञानाभावराहित्यस्य लक्षणत्वं स्वीकार्यम्। तथा च जीवात्मसु सृष्टिकाले ज्ञानाभावप्रतियोगिनो ज्ञानस्य विद्यमानतया सुषुप्तौ प्रलये च तत्र विद्यमानस्यापि ज्ञानाभावस्य प्रतियोगिव्यधिकरणत्वाभावेन प्रतियोगिव्यधिकरणज्ञानाभावराहित्यं तत्र सूपपद्यते। जीवात्मनि ज्ञानस्य देहावच्छेदेनैवोत्पन्नतया घटाद्यवच्छेदेन तत्र ज्ञानात्यन्ताभावस्य सत्तया उक्तलक्षणं तत्राऽव्याप्तमिति वक्तुं न शक्यम्। ज्ञानात्यन्ताभावराहित्ये निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य निवेशे दोषाभावात्। जीवात्मसु ज्ञानस्य देहावच्छेदेन विद्यमानतया घटाद्यवच्छेद्यस्वरूपसम्बन्धेनैव तत्र ज्ञानाभावस्य सम्भवेन निरवच्छिन्नस्वरूपेण ज्ञानात्यन्ताभावराहित्यस्य निर्बाधत्वात्।

किं वा "परत्वासमवायिसमवायित्वरहितशब्दासमानाधिकरणकार्याश्रयः आत्मा"[२] इत्यपि आत्मनो लक्षणं ज्ञेयम्। अयमर्थः—परत्वस्य यदसमवायिकारणं समवायसम्बन्धेन तदनधिकरणत्वे सति शब्दासमानाधिकरणस्य कार्यस्याश्रय आत्मा इति। जन्येषु द्रव्येषु उपपद्यमानस्य कालिकपरत्वस्यासमवायिकारणं

---

१. लक्षणावली (आत्मप्रकरणम्); २. तत्रैव।

कालद्रव्यसंयोगः। मूर्तद्रव्येषु नित्येष्वनित्येषूत्पद्यमानस्य दैशिकपरत्वा-समवायिकारणं दिङ्मूर्तद्रव्यसंयोगः। समवायसम्बन्धेन तदधिकरणत्वस्यैव मूर्तद्रव्येषु कालदिशोश्च सत्त्वेन सत्यन्तार्थाभावात् न तत्रातिव्याप्तिः। आकाशे अतिव्याप्तिवारणाय कार्ये शब्दासमानाधिकरणत्वस्य निवेशः। आकाशगतं निखिलमेव कार्यं शब्दसमानाधिकरणम्। अतः शब्दासमानाधिकरणकार्या-श्रयत्वाभावान्न तत्रातिव्याप्तिः। आत्मा च परत्वासमवायिकारणस्य समवाय-सम्बन्धेनाधिकरणमात्मगतं सुखादिलक्षणं कार्यञ्च शब्दस्यासमानाधि-करणमित्युभयोर्दलयोस्तत्र सत्त्वेन लक्षणसमन्वयः। लक्षणे परत्वस्याऽप्रवेशे असम्भवः। असमवायिकारणस्य सर्वेषु द्रव्येषु सत्त्वेन तदनधिकरणत्वस्य कुत्रापि द्रव्ये अभावात्।

## शङ्करमिश्रोक्तमात्मलक्षणम्

ज्ञानानधिकरणानधिकरणजातिमत्त्वमात्मत्वम्। ज्ञानानधिकरणमनधिकरणं यस्या एवम्भूता या जातिः, तद्वत्त्वमित्यर्थः। आत्मत्वभिन्ना सर्वा जातयो ज्ञानानधिकरणे पृथिव्यादौ तिष्ठन्ति। अतस्ताः सर्वा ज्ञानानधिकरणाधिकरणाः भवन्ति, न तु ज्ञानानधिकरणानधिकरणाः। अत एव न ता आदाय पृथिव्यादावतिव्याप्तिः। लक्षणघटकमुभयमेवाधिकरणत्वं समवायेन विवक्षितम्। अन्यथा येन केनचित् सम्बन्धेन ज्ञानाधिकरणत्वस्य सर्वत्रैव सत्त्वेन ज्ञानानधिकरणाऽप्रसिद्ध्याऽसम्भवस्स्यात्। यत्किञ्चित्सम्बन्धेन ज्ञानानधिकरणत्वोक्तौ च नित्येषु कालिकायोगेन आत्मनोऽपि कालिकसम्बन्धेन ज्ञानानधिकरणतया तदनधिकरणत्वेन आत्मत्वस्यापि गृहीतुमशक्यतया असम्भवस्स्यात्। एवं द्वितीयाधिकरणत्वस्य सम्बन्धसामान्येन विवक्षायामात्मत्वस्यापि ज्ञानानधिकरणे पृथिव्यादौ. कालिकेन विद्यमानतया तदनधिकरणकत्वेनात्मत्वस्य धर्तुमशक्यत्वेना-सम्भवस्स्यात्। यत्किञ्चित् सम्बन्धेन द्वितीयाधिकरणत्वविवक्षायां ज्ञानानधिकरणे आकाशादौ कालिकादिसम्बन्धेन द्रव्यत्वस्यावृत्तितया ज्ञानानधिकरणं यत्किञ्चित् सम्बन्धेनानधिकरणं यस्याः, तज्जातित्वेन द्रव्यत्वमादाय घटादावतिव्याप्तिः स्यात्। तथा च ज्ञानानधिकरणनिष्ठसमवायसम्बन्धावच्छिन्नाधिकरणत्वानिरूपकत्वं तदर्थः, नातो यावानधिकरणे घटादावविद्यमानां जातिमादाय नात्मन्यतिव्याप्तिः। तादृशजातिमत्त्वमपि समवायेन बोध्यम्। अन्यथा तादृश्या आत्मत्वजातेः कालिकादिसम्बन्धेन पृथिव्यादौ वृत्तित्वेन तत्रातिव्याप्तिः स्यात्। प्रयत्नमिच्छां चाश्रित्यापि उक्तविधमात्मलक्षणं निर्वक्तुं शक्यम्।

अथवा—शब्दस्पर्शाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वमात्मनो लक्षणम्। अयमभिप्रायः—शब्दाधिकरणं स्पर्शाधिकरणञ्चानधिकरणं यस्य एवम्भूतो यो विशेषगुणः, तत् समानाधिकरणा या जातिः, तादृशजातिमत्वमात्मत्वम्। विशेषगुणे शब्दाधिकरणानधिकरणत्वनिवेशो यदि न स्यात्, तदा स्पर्शाधिकरणानधिकरणविशेषगुणत्वेन शब्दस्यापि ग्रहणसम्भवेन तत्समानाधिकरणां द्रव्यत्वजातिं सत्ताजातिं वा आदाय पृथिव्यादावतिव्याप्तिस्स्यात्। स्पर्शाधिकरणानधिकरणत्वस्याऽप्रवेशे शब्दाधिकरणानधिकरणविशेषगुणत्वेन रूपादेः ग्रहणसम्भवेन तत्समानाधिकरणाः सत्ता, द्रव्यत्वपृथिवीत्वादिजातीरादाय पृथिव्यादावतिव्याप्तिस्स्यात्। विशेषपदानुपादाने तादृशगुणसमानाधिकरणजातित्वेन मनस्त्वमादाय मनसि अतिव्याप्तिः स्यात्। आत्मविशेषगुणः सुखादिः शब्दाधिकरणे नभसि स्पर्शाधिकरणे पृथिव्यादौ च नावतिष्ठते, अतो भवति सः शब्दस्पर्शाधिकरणानधिकरण इति तत्समानाधिकरणामात्मत्वजातिमादाय लक्षणसमन्वयः। लक्षणस्य ईदृशव्याख्याने समानाधिकरण्यं व्याप्यत्वपर्यवसायि बोध्यम्। अन्यथा सुखाद्यात्मकतादृशविशेषगुणसमानाधिकरणजातित्वेन द्रव्यत्वसत्तयोर्ग्रहणसम्भवेन पृथिव्यादावतिव्याप्तिः स्यात्। व्याप्यत्वोपादाने च तयोरात्मविशेषगुणव्याप्यत्वाभावेन न दोषः।

अथवा—अनधिकरणान्तं न विशेषगुणस्य विशेषणम्; किन्तु जातेरेव विशेषणम्। द्रव्यसत्तयोः शब्दाधिकरणे स्पर्शाधिकरणे च विद्यमानतया शब्दस्पर्शाधिकरणानधिकरणत्वेन तयोर्ग्रहणासम्भवेन न तदुपादाननिबन्धनातिव्याप्तिः। परमस्मिन् व्याख्याने शब्दाधिकरणानधिकरणत्वोक्तेर्न किमपि सार्थकत्वम्। स्पर्शाधिकरणानधिकरणत्वेनैवात्मत्वभिन्नानां द्रव्यवृत्तिनिखिलजातीनां वारणसम्भवात्। शब्दाधिकरणानधिकरणत्वेन स्पर्शाधिकरणानधिकरणत्वं नोपेक्षितुं शक्यते। शब्दाधिकरणानधिकरणविशेषगुणसमानाधिकरणजातित्वेन पृथिवीत्वादिमादाय तत्रातिव्याप्त्यापत्तेः। अत्र प्रथममधिकरणत्वमनधिकरणत्वघटकमधिकरणत्वं, समानाधिकरणघटकमधिकरणत्वं तद्गतवृत्तित्वं जातिमत्वञ्च समवायेन विवक्षणीयम्, नातः सम्बन्धान्तरेण तत्तद्ग्रहणनिबन्धनदोषस्यावकाशः।

अथवा—मूर्तिव्यधिकरणगुणानधिकरणानधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमात्मलक्षणम्। मूर्तिव्यधिकरणस्य गुणस्यानधिकरणमनधिकरणं यस्या एवम्भूता या द्रव्यत्वव्याप्यजातिः, तादृशजातिमत्त्वमर्थः। मूर्तिव्यधिकरणत्वं नाम मूर्तिमति अवृत्तित्वम्। मूर्तिर्नाम परममहत्त्वभिन्नमपकृष्टपरिमाणम्, परमाणुपरिमाणस्यापकर्षानाश्रयतया परमाणूनां मूर्तत्वानुपपत्तेः। न तु तद्वन्ति द्रव्याणि

क्षित्यप्तेजोवायुमनांसि। तत्र अवृत्तयो गुणा आकाशकालदिगात्ममात्रवृत्तयः, तदनधिकरणं मूर्तद्रव्यजातम्। तदनधिकरणं यस्या एवम्भूता द्रव्यत्वव्याप्याजातिः आत्मत्वम्। तस्यात्मनि विद्यमानतया लक्षणसमन्वयः। अत्र गुणे मूर्ति-व्यधिकरणत्वानिवेशे गुणानधिकरणमनधिकरणं यस्या एवम्भूतद्रव्यत्वव्याप्य-जातित्वेन पृथिवीत्वादिमादाय पृथिव्यादावतिव्याप्तिः स्यात्। जातौ द्रव्यत्वव्याप्यत्वस्यानिवेशे गुणत्वादिजातिमादाय गुणादावतिव्याप्तिः स्यात्। अत्र द्रव्यत्वव्याप्यत्वं द्रव्यत्वसमानाधिकरणत्वमात्रमेव बोध्यम्। तावतैव गुणत्वादि-जातीनां व्यावृत्तिसम्भवेन व्याप्यत्वघटकस्यान्यांशस्य प्रवेशानावश्यकत्वात्।

अथवा—प्रत्यक्षपरममहत्त्वाश्रयत्वमात्मनो लक्षणम्। प्रत्यक्षविषयीभूतस्य परममहत्त्वस्याश्रय आत्मा इत्यर्थः। आकाशादिगतपरममहत्त्वमादाय आकाशा-दावतिव्याप्तिवारणाय परममहत्त्वे प्रत्यक्षविषयत्वनिवेशः। घटादिगतं महत्त्वमादाय घटादावतिव्याप्तिवारणाय महत्त्वे परमत्वस्य प्रवेशः। परमत्वञ्चापकर्षानाश्रयत्वम्, आश्रयत्वं समवायसम्बन्धेन विवक्षितम्। अतो न कालिकेन प्रत्यक्षपरममहत्वाश्रये काले अतिव्याप्तिः।

अथवा—मानसैकत्वाश्रयत्वमात्मनो लक्षणम्। मनोजन्यलौकिक-प्रत्यक्षविषयत्वं मानसत्वम्। एकत्वे तत्प्रवेश एकत्वाश्रये द्रव्यान्तरे अतिव्याप्तिवारणाय। आत्मैकत्वभिन्नानामेकत्वानां मनोजन्यलौकिकप्रत्यक्षत्वाभावेन तदुपादाननिबन्धनानातिव्याप्तिः। अथवा मनोमात्रग्राह्यगुणवत्त्वमात्मनो लक्षणम्। मनोभिन्नेन्द्रियेणाग्राह्यो मनोग्राह्यश्च यो गुणस्तद्वानात्मेत्यर्थः। सुखाद्यात्मकं तादृशं गुणमादाय आत्मनि लक्षणसमन्वयः। अत्र मनोभिन्नेन्द्रियाग्राह्यत्वं मनोभिन्नेन्द्रियजन्यलौकिकप्रत्यक्षाविषयत्वरूपं वाच्यम्। अन्यथा ज्ञानप्रत्यासत्या सामान्यप्रत्यासत्या च मनोभिन्नेन्द्रियग्राह्यत्वस्य सुखादावपि सत्त्वेनासम्भवः स्यात्। एवं मनोग्राह्यत्वमपि मनोजन्यलौकिकप्रत्यक्षविषयत्वरूपं वक्तव्यम्। नातो मनोजन्योपनीतमानविषयत्वस्य वेगादावपि सत्त्वेन तदुपादाननिबन्धना पृथिव्यादिष्वतिव्याप्तिः। मनोमात्रग्राह्यत्वेन सुखत्वादिकमादाय सुखादावति-व्याप्तिवारणाय गुणपदोपादानम्।

अथवा—बहिरिन्द्रियाप्रत्यक्षविशेषगुणवत्त्वमात्मत्वम्। बाह्यप्रत्यक्षाद्ययोग्यो यो विशेषगुणस्तद्वान् आत्मा इत्यर्थः। एवम्भूतस्य सुखादिरूपस्य विशेष-गुणस्याश्रयतया आत्मनि लक्षणसमन्वयः। विशेषपदानुपादाने गुरुत्ववेगादिक-मादाय पृथिव्यादावतिव्याप्तिः। सुखत्वादिकमादाय सुखादावतिव्याप्तिवारणाय गुणपदोपादानम्। अथवा सुखसमानाधिकरणद्रव्यत्वसाक्षाद् व्याप्यजातिमत्त्वम्।

समवायेन सुखाधिकरणे समवायेन वृत्तिर्या द्रव्यत्वसाक्षाद्व्याप्या जातिः, समवायेन तद्वान् आत्मा इत्यर्थः।

तादृशजातित्वेनात्मत्वमादाय लक्षणसमन्वयः। कालिकेन सुखाधिकरणे पृथिव्यादावतिव्याप्तिवारणाय समवायेन सुखाधिकरणत्वम्। सुखाधिकरणे स्वाभाववत्त्वसम्बन्धेन स्वव्यभिचारित्वसम्बन्धेन वा विद्यमानां पृथिवीत्वादि-जातिमादाय पृथिव्यादावतिव्याप्तिवारणाय वृत्तित्वे समवायसम्बन्धावच्छिन्नत्वम्। सत्तामादाय पृथिव्यादावतिव्याप्तिवारणाय द्रव्यत्वसाक्षाद् व्याप्यत्वनिवेशः। द्रव्यत्वमादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वभिन्नार्थकस्य साक्षात्पदस्योपादानम्। अथवा द्रव्यानुयोगिकसमवायेन सत्ताया अपि द्रव्यत्वव्याप्यतया तामादाय पृथिव्यादावतिव्याप्तिवारणाय साक्षात्पदम्। तच्च सामान्यसम्बन्धार्थकम्। तथा च द्रव्यानुयोगिकसमवायस्य विशेषसंसर्गतया न तत् सम्बन्धेन द्रव्यत्वव्याप्तिमतीं सत्तामादायैवोक्तदोषापत्तिः।

अत्रेदमवधेयम्—उक्तानां जातिघटितलक्षणानां लक्ष्ये आत्मनि लक्षणसमन्वय आत्मत्वजातिमादायैवोपपद्यते। अतस्तस्याः स्वसंज्ञया उपादानमकृत्वा तादृशजातित्वेन तदुपादानप्रयत्नो व्यर्थ इति शङ्का समुन्मिषति, तदुत्तरमिदमवबोध्यं यद् आत्मत्वजात्या आत्मनो लक्ष्यत्वे तस्याश्च स्वसंज्ञया लक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोरैक्येनेतरभेदानुमाने प्राचीनमते उपनयवाक्याद् बोधानुपपत्तिः, तादृशजातित्वेन तस्या लक्षणत्वे च नोक्तदोषः। यदि पुनरात्मा आत्मपदार्थत्वेन लक्ष्यस्तदा आत्मत्वजातेः स्वसंज्ञयाऽपि लक्षणत्वसम्भवेन न तस्यास्तादृशजातित्वेनोपन्यासः।

सप्तपदार्थीकृता शिवादित्येन **"आत्मत्वसामान्यवान् बुद्धिगुण आत्मा"**[1] इत्येवं आत्मनो लक्षणमुक्तम्। अस्त्यत्र अंशद्वयम् "आत्मत्वसामान्यवान्" इत्येकोंऽशः, "बुद्धिगुण" इत्यपरोंऽशः। उभाविमावात्मनः स्वतन्त्रे लक्षणे। आत्मा लक्ष्यः, आत्मत्वसामान्यवान् इत्यत्र सामान्यपदमात्मत्वस्य समवायेन लक्षणत्वलाभाय। अन्यथा कालिकेन तस्य महाकाले तदुपाधिषु च सत्त्वेन, एवं स्वव्यभिचारित्वसम्बन्धेन द्रव्यत्वादौ सत्वेन तत्र तत्रातिव्याप्तिः स्यात्। अथवा सामान्यपदमात्मत्वस्य तादृशजातित्वेन लक्षणत्वलाभाय। तथा चात्मवृत्त्यवृत्त्यात्मवृत्त्यवृत्त्यन्ताभावाप्रतियोगिद्रव्यत्वान्यजातिमत्त्वमात्मनो लक्षणम्। आत्मवृत्ताववृत्तिरात्मवृत्त्यत्यन्ताभावस्याप्रतियोगिनी या द्रव्यत्वान्या जातिः,

---

१. सप्तपदार्थी (आत्मनिरूपणम्)।

तदाश्रयत्वमर्थः। एवम्भूता जातिरात्मत्वम्, तस्य आत्मवृत्तौ ज्ञानादिगुणे अवृत्तित्वात्। आत्मवृत्तेरत्यन्ताभावस्याप्रतियोगित्वात्, द्रव्यभिन्नत्वाच्च तद्वत्त्वमात्मनि अस्तीति लक्षणसमन्वयः। अत्रावृत्यन्तं सत्तामादाय पृथिव्यादावतिव्याप्तिवारणायाभिहितम्। तदुक्तौ च सत्ताया आत्मवृत्तौ गुणे वर्तमानतया आत्मवृत्यवृत्तिशब्देन तदुपादानस्याऽशक्यतया न तदुपादान-निबन्धनातिव्याप्तिः।

आत्मवृत्तित्वं समवायेन वाच्यम्, अन्यथा स्वविषयकज्ञानवत्त्वसम्बन्धेन आत्मनोऽपि आत्मवृत्तितया तद्वृत्तित्वेनात्मत्वग्रहणासम्भवेनासम्भवः स्यात्। अवृत्तित्वघटकं वृत्तित्वमपि समवायेन वाच्यम्। अन्यथा आत्मवृत्तौ जन्यगुणे कालिकसम्बन्धेन सामानाधिकरण्यसम्बन्धेन वा आत्मत्वस्य वृत्तितया अवृत्यन्तेन तद्ग्रहणसम्भवेनासम्भवः स्यात्। अप्रतियोग्यन्तं पृथिवीत्वादिमादाय पृथिव्यादावतिव्याप्तिवारणाय। अभावे अत्यन्तत्वनिवेशोऽपि आत्मन्य-सम्भववारणाय, अन्यथा आत्मत्वस्यापि आत्मवृत्यन्योन्याभावप्रतियोगित्वेना-प्रतियोग्यन्तेन तस्योपादातुमशक्यतया असम्भवः स्यात्।

तत्र आत्मवृत्तित्वमभावीयविशेषणताविशेषसम्बन्धेन वक्तव्यम्। अन्यथा आत्मत्वात्यन्ताभावस्यापि स्वाभाववत्त्वसम्बन्धेनात्मवृत्तितया अप्रतियोग्यन्तेन आत्मत्वस्य धर्त्तुमशक्यतया असम्भवो दुर्वारः स्यात्। प्रतियोगिताऽपि समवायसम्बन्धावच्छिन्ना वक्तव्या। अन्यथा आत्मत्वस्याप्यात्मावृत्यन्ताभावीय-कालिकसम्बन्धावच्छिन्नप्रतियोगिताश्रयत्वेनाप्रतियोग्यन्तभागेन तस्य ग्रहणानर्हतया असम्भवः स्यात्। द्रव्यत्वमादाय द्रव्यादावतिव्याप्तिवारणाय जातौ द्रव्यत्वान्यत्व-मुक्तम्। आत्मत्वस्य लक्ष्यतावच्छेदकत्वे स्वरूपत आत्मत्वस्य लक्षणत्वे चेतरभेदानुमाने प्राचीनमते उपनयवाक्यार्थबोधस्य दुर्घटतया आत्मत्वस्य तादृशजातित्वेन लक्षणत्वमाहतम्।

'बुद्धिगुण' इति द्वितीयांशेन बुद्धिर्गुणो यस्येति व्युत्पत्त्या बुद्धिगुणाश्रयत्वस्य आत्मलक्षणत्वं समसूचि। तत्र गुणपदं बुद्धेः समवायेन लक्षणत्वलाभाय प्रयुक्तम्। अन्यथा कालिकादिसम्बन्धेन विषयतासम्बन्धेन वा आत्मभिन्नेऽपि बुद्धेः सत्तयाऽतिव्याप्तिः स्यात्। लक्षणन्तु समवायेन बुद्धिमात्रम्, तस्या आत्मभिन्नेऽसमवेतत्वात् सर्वेष्वात्मसु च समवेतत्वात्। अथवा प्रथमो भाग एव लक्षणपरः, द्वितीयो भागो गुणत्वहेतुना बुद्ध्याश्रयतया आत्मत्वसिद्धि-प्रदर्शनपरः। तथा हि बुद्धिः क्वचिदाश्रिता गुणत्वाद् रूपादिवदित्यनुमानेन बुद्धौ आत्मेतराश्रितत्वबाधसहकृतेन आत्मा बुद्ध्याश्रयतया साध्यते।

कारिकावल्यामात्मनो लक्षणम्—कारिकावलीकारेण विश्वनाथेन "आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्"[१] इत्युक्तम्।

तत्र आदिपदस्य शरीरतया इन्द्रियाधिष्ठातृत्वम्, शरीराधिष्ठातृत्वञ्च लक्षणद्वयमात्मनः प्राप्यते। अधिष्ठातृत्वञ्च चैतन्योपधायकता सम्पादकत्वम्। आत्मनोऽसत्त्वे जडेनेन्द्रियेण शरीरेण च ज्ञानमुत्पादयितुमशक्यम्। अतः स एव तयोश्चैतन्योपधायकतायां प्रयोजक इत्यात्मनि लक्षणसमन्वयः। अथवा नोक्तस्य वचस आत्मनो लक्षणवर्णने तात्पर्यम्, अपि तु इन्द्रियाधिष्ठातृतया आत्मत्वसाधने। तथा चेन्द्रियादिकं सकर्तृकं करणत्वात् कुठारादिवदित्यनुमानेन इन्द्रियादीनामुपभोक्तृत्वेन आत्मा सिद्ध्यति। लक्षणन्तु तस्यात्मत्वजातिः ज्ञानादिगुणो वा।

तर्कसङ्ग्रहे आत्मलक्षणम्—तर्कसङ्ग्रहे अन्नम्भट्टेन **'ज्ञानाधिकरणमात्मा'**[२] इत्युक्त्या ज्ञाननिरूपितसमवायसम्बन्धावच्छिन्नाधिकरणत्वस्य किं वा समवाय-सम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणत्वस्यात्मलक्षणं प्रत्यपादि। अथवा अधिकरणपदोपादानेन ज्ञानस्य समवायसम्बन्धेनात्मलक्षणत्वं समकेति। मुक्तात्मनि ज्ञानाभावेन तत्राव्याप्तिरिति न शङ्कनीयम्। प्रतियोगिव्यधिकरणज्ञानाभावाभावस्य ज्ञानपदेन विवक्षया मुक्तात्मनोऽपि तद्वत्त्वेन नाऽव्याप्तिः। संसारितादशायां तत्र ज्ञानस्य सत्वेन प्रतियोगिव्यधिकरणज्ञानाभावस्य तत्रासत्तया तद्भावस्य तत्र सुघटत्वात्। अथवा निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकज्ञाना-भावाभावस्य आत्मलक्षणत्वमुपेयम्। मुक्तात्मनि मुक्तिकालावच्छेद्यस्वरूपसम्बन्धेनैव ज्ञानाभावस्य विद्यमानतया निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक-ज्ञानाभावाभावस्य तत्र विद्यमानत्वान्नाऽव्याप्तिः।

बृहदारण्यकोपनिषदि **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च"** इत्युक्तम्। तदनुसारेण श्रवण-मनन-निदिध्यासनसाध्यदर्शन-विषयत्वमिति आत्मलक्षणतया निर्वक्तुं शक्यम्।

छान्दग्योपनिषदि **"तरति शोकमात्मवित्"** इत्यभिहितम्। तदनुसारेण शोकतरणकारणीभूतज्ञानविषयत्वंमात्मलक्षणत्वं लभ्यत इति।

●

---

१. कारिकावली, का. ४७; २. तर्कसङ्ग्रहः, आत्मनिरूपणम्।

# आकृतिशक्त्यधिकरणविमर्शः

**डॉ. प्रलयकुमारनन्दः**
उपाचार्यः, स्नातकोत्तरसर्वदर्शनविभागस्य
श्रीजगन्नाथसंस्कृतविश्वविद्यालये
श्रीविहारः, पुरी, उत्कलप्रदेशः



शब्दानां किं वाच्यमित्यस्मिन् विषये दार्शनिकानामनेकानि मतानि वर्तन्ते। वार्तिककारैर्यद्यपि बहवो विकल्पा अत्र प्रदर्शिताः, तथापि त्रयः पक्षा एव तत्र प्रधानभूताः—आकृतिः, व्यक्तिः, आकृतिविशिष्टव्यक्तिरिति[१]। तत्र व्यक्तिपक्षे बह्व्यो युक्तयः सन्ति। 'व्रीहीनवहन्ति', 'पशुमालभेत', 'गामानय', 'ब्राह्मणो न हन्तव्यः' इत्यादयो विधिनिषेधा विनाशिमूर्त्तद्रव्यविषया व्यक्तेरेव शब्दार्थत्वे सम्भवन्ति नाकृतेः। न हि नित्या आकृतिरवहन्तुमालब्धुं हन्तुं वा शक्यते। अतो जातेः शब्दार्थत्वे एते विधयोऽनर्थकाः स्युः। हननादेर्जातौ प्राप्त्यभावात् निषेधा अपि निरर्थकाः स्युः। अतो व्यक्तिरेव शब्दार्थः[२]। व्यक्तेः शब्दार्थत्वे प्रत्ययवाच्यानां लिङ्गाख्यकारकाणां तत्र सम्बन्धोऽप्युपपद्यते। जातेर्हि न लिङ्गमस्ति नापि द्वित्वादिसंख्या अमूर्त्तत्वाच्च न कारकत्वमपि। तथा 'गौः शुक्लः' इति सामानाधिकरण्यमपि व्यक्तिपक्ष एवोपपद्यते। यदि गौः शब्दो गोत्वजातिवाचकः शुक्लशब्दश्च गुणवाचकस्तर्हि 'गौः शुक्लः' इत्युभयोरभेदो नैव सम्भवति। व्यक्तिपक्षे तु जातेर्गुणस्य च भिन्नत्वेऽपि तद्विशेषस्य द्रव्यस्यैकत्वादुपपद्यतेऽभेदः। अतो व्यक्तिरेव शब्दार्थ इति युक्तम्।

ननु व्यक्तेः शब्दार्थत्वे एकस्यां व्यक्तौ सङ्केते गृहीते नान्यस्यां व्यक्तौ तस्यैव शब्दस्य प्रयोगः स्यादिति चेदुच्यते—या एवमाकृतिका सा एव गौरिति

---

१. 'वाचकप्रसङ्गाद् वाच्यविशेषश्चिन्त्यते, किमाकृतिरुत व्यक्तिरिति'।

(भा.दि. १.३.१०, पृ-४८।

२. 'न ह्याकृतिरवहन्तुमालब्धुमानेतुं हन्तुं वा शक्यते, नित्यत्वादमूर्त्तत्वाच्च। तेनानर्थकं तद्विधानं प्रतिषेधश्च प्राप्त्यभावात्। व्यक्तिपक्षे तूपपद्यते तस्माद्व्यक्तिः शब्दार्थः' इति।

(तत्रैव, पृ. ५०)

सामान्यमेकमुपलक्षणीकृत्य शब्दार्थसम्बन्धग्रहणादन्यस्यामपि व्यक्तौ प्रयोगो न दृश्यते। उपलक्षणस्यैकत्वाच्च नानेकशक्तिकल्पनापत्तिः। आकृतेरुपलक्षणत्वे कदाचिद् दोषाः सम्भवेयुः। आकृतिविशिष्टव्यक्तेर्वाच्यत्वे तु न कश्चिद्दोषः[१]। तस्मात् शुद्धा व्यक्तिर्वा आकृतिविशिष्टा व्यक्तिर्वा शब्दार्थः[२]।

अत्र भाट्टाः— व्यक्तौ शक्त्यङ्गीकारे व्यक्तीनां प्रत्येकं भिन्नत्वादनन्तत्वाच्चैकैकजातिव्यक्तीनामनन्तासु व्यक्तिष्वनन्ताः शक्तयः कल्पनीयाः स्युः। तच्चासम्भवि। न हि केनापि पुरुषेण अतीतानागतवर्त्तमानासु व्यक्तिषु शक्तिर्ग्रहीतुं शक्यते। दृश्यते चैकस्यां व्यक्तौ शक्तिग्रहे जाते अन्यासामपि व्यक्तीनां शब्दाद् बोधः। परन्तु गृहीता एव शक्तिः शाब्दबोधजनिका भवति। यत्र च शक्तिर्न गृहीता, न तस्या व्यक्तेस्तेन शब्देनोपस्थितिर्भवितुं शक्नोति। अतोऽगृहीतसङ्केतायामपि व्यक्तौ उपस्थितिशाब्दबोधयोर्दर्शनात् शक्तिग्रहरूपकारणाभावेऽपि कार्यस्य शाब्दबोधस्य दर्शनान्न कार्यकारणभावव्यभिचारः।

ननूक्तमेकस्या जातेरुपलक्षणत्वाङ्गीकारात् नानन्तशक्तिकल्पनापत्तिः, व्यभिचारो वेति। सत्यमुक्तम्, दुरुक्तं तु तत्। उपलक्षणीभूताया जातेरेकत्वेऽप्यभिधेयानां व्यक्तीनामनन्तत्वात् शक्त्यानन्त्यस्यावश्यकत्वात्। व्युत्पत्तिकाले जातिरुपलक्षणं नाभिध्यानकाले। अभिध्यानं तु प्रातिस्विकरूपेण व्यक्तिगतमेव। यथा अक्षशब्दवाच्यानां देवनविभीतकेन्द्रियाणामेकस्मिन्नपवरके स्थितौ यदि कश्चिदाह ये एतस्मिन्नपवरके अधुना स्थितास्ते अक्षशब्दवाच्या इति तदा व्युत्पत्तिसमये एकापवरकस्थितिरूपोपलक्षणेन त्रिष्वप्यक्षशब्दाभिधेयतां प्रतिपद्यते, किन्तु प्रत्येकं व्यक्तिमात्रं स्वरूपेणैव अक्षशब्दाभिधेयतया प्रतीयते। अत एव अक्षशब्दस्य शक्तित्रयमङ्गीक्रियते। एवं व्युत्पत्तिसमये जातेरुपलक्षणत्वेऽपि शब्दः प्रत्येकं व्यक्तिस्वरूपेणाभिधत्ते इत्यङ्गीकार्यम्। अतः शक्त्यानन्त्यं दुर्वारम्।

---

१. 'आकृतिर्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः।
केन चेज्येत न त्याग आकृतेरुपपद्यते।।
अमूर्त्ता ह्याकृतिर्नित्या नावघातादिभाजनी।
तद्विधिः प्रतिषेधो वा तेनास्या नावकल्पते।। इति। (तन्त्र.वा.१.३, पृ. २५५-५६)

२. 'एकोपलक्षणत्वादेव नानेकशक्तिकल्पनापत्तिः। आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः। तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थ इति' इति।

(भा.दी. १.३.१०, पृ. ५१)

अपि च— 'न हि गोत्वाकृतिः शुक्ला नारुणा नापि षड्गुणा।
व्यक्तिस्त्वेवंगुणा तस्माद्व्यक्तेरेवाभिधेयता।।' इति।

(तन्त्र.वा. १.३, पृ. २५७)

अपि च शब्दव्यपदेशायोग्यं धर्मिस्वरूपमेव यदि वाच्यं तर्हि गोशब्दात् प्रतीयमानाऽपि गोव्यक्तिर्नाश्वादिभ्यो भिन्ना प्रतीयते। अश्वाद्यसाधारणो यो गोः आकारस्तद्विना केवलं द्रव्यं द्रव्यान्तराद् भिन्नं न प्रतीयते। ततश्च गौरित्युक्ते कयापि जात्या अविशिष्टा एव व्यक्तिः प्रतीयते। तेन कदाचिदश्वव्यक्तिप्रतीतिरपि सम्भवेत्। अभिधानसमयेऽपि यदि उपलक्षणीभूतां जातिमभिदधदेव शब्दो व्यक्तिमभिदधाति तर्हि गोत्वेन रूपेणैव गौरभिधेया। ततश्च विशेषणभूता जातिः प्रथममभिधेया। न हि तदभिधानं विना तद्विशिष्टत्वेन रूपेण व्यक्तिमभिधातुं शक्नोति शब्दः। तथा च विशिष्टाभिधानमेवाङ्गीकर्त्तव्यम्। विशिष्टाभिधाने च पूर्वं विशेषणमभिधातव्यम्। तर्हि तत्रैव शक्तेः क्षीणत्वात् 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायाज्जातिरेव वाच्या स्यात्। तथैव तदविनाभूतव्यक्तीनामाक्षेपसम्भवात् पुनस्तत्राभिधानशक्तिकल्पनाया अवकाशो नास्ति। अपि च गोशब्दे श्रुते का गौः? इति व्यक्तिसंशयो भवति। स हि न सामान्यग्रहणं विना सम्भवति। यत्र च संशयस्तत्र शब्दाभिधेयता नाङ्गीकर्त्तुं शक्यते, शब्दस्य निश्चयजनकत्वात्। सामान्यविषये तु संशयाभावात् तस्याभिधेयत्वे न कोऽपि बाधः।

ननु गोशब्दश्रवणे गोव्यक्तिविशेषस्य निश्चयात्मकज्ञानाभावेऽपि व्यक्तिमात्रमेव निश्चीयत इति, चेत्—किमिदं व्यक्तिमात्रं सामान्यं विशेषो वा वस्तुषु प्रत्येकं द्व्याकारमेव ज्ञानं जायते। सामान्याकारं विशेषाकारञ्च। तत्र प्रथमं व्यावृत्तिरूपम्। तत्र चालम्बनं व्यक्तिरेव। द्वितीयमनुगतरूपम्। तस्य चालम्बनं सामान्यमेव। तदुभयव्यतिरिक्तं व्यक्तिमात्रं नाम वस्तुनो न किञ्चिदपि रूपमस्ति। अतो व्यक्तिमात्रशब्देन सामान्यमेव बोध्यते। तदेवाभिधेयम्। शब्दात् प्रथमं सामान्यमेव गम्यते। पश्चाद् व्यक्तिषु आकाङ्क्षामात्रं जायते, अतः सामान्यमेवाभिधेयम्। न व्यक्तिविशेषः। विचित्रा हि खण्डमुण्डादयो गोव्यक्तयः। यदि च ता एव गोशब्दस्याभिधेयाः स्युः, तर्हि गोशब्दश्रवणेन विचित्राकारैव बुद्धिः स्यात्। परं सर्वदा गोशब्दश्रवणे समानाकारा एव बुद्धिरुत्पद्यत इति सामान्यमेव शब्दाभिधेयम्। कथं तर्हि जातेर्व्यवहाराङ्गता? न हि जातिरानेतुं नेतुं हन्तुं वा शक्यत इति चेत्, व्यक्त्यभेदादेव। जातिर्हि व्यक्तेरर्थान्तरभूतं किमपि तत्त्वं न, किन्तु एकमेव वस्तु जातिव्यक्त्यात्मकम्। तत्र तस्य जातिस्वरूपमनुगतबुद्ध्या गृह्यते। तदेव च सामान्यं, शब्दार्थोऽपि तदेव।

अयमभिप्रायः—शब्देन सामान्यरूपेणैव वस्तु बोध्यते, न विशेषरूपेण[1]। सामान्यरूपेण शब्दं बोद्धुं यद्वस्तु तस्यैव क्रियासम्बन्धो वाक्येन बोध्यते। तद्वस्तु

---

१. 'सामान्यात्मना वस्तुशब्दाद् गम्यते न विशेषात्मनेऽपि' इति। (भा. १.३.१०, पृ. ५२)

क्रियां साधयितुं समर्थम्। यच्च सामान्यरूपेण बुद्धं वस्तु तदेव विशेषरूपमिति क्रियाश्रयं लिङ्गसंख्याकारकसम्बन्धं भवितुमर्हति। अतो वस्तुनः केवलं सामान्यात्मकत्वं विशेषात्मकत्वं चेति। एकान्तद्वयमपि नाङ्गीक्रियतेऽस्माभिः। अतः सर्वेऽपि विरोधाः सुपरिहरा भवन्ति।

इदं तूपपादनं जातिव्यक्त्योः स्वमतानुसारेण तादात्म्यमङ्गीकृत्य भाट्टैः कृतम्। कणादमतानुसारेण यदि जातिव्यक्त्योर्भेदस्तदा अभिधया सामान्यं प्रतीयते, किन्तु तस्य पदार्थान्तरेणान्वयानुपपत्त्या व्यक्तौ लक्षणा अङ्गीक्रियते। लाक्षणिको व्यक्तावेव क्रियान्वयः, लिङ्गसंख्याकारकादिसम्बन्धश्चोपपद्यते। 'पशुना यजेत', 'अरुणया क्रीणाति' इत्यादावपि तृतीयया यत्करणत्वं बोध्यते, तस्य जातावसम्भवेऽपि द्रव्यपरिच्छेदद्वारा करणत्वसम्भवात् मुख्यमेव करणत्वं लुप्तम्। यत्र त्वधिकरणसम्प्रदानादिकारकत्वं नोपपद्यते, तत्र तु लाक्षणिकं तदङ्गीकार्यम्। तदुक्तं भट्टपादैः—

'तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदना।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः'[1]।। इति।

तस्मात् सामान्यमेव शब्दाभिधेयं न व्यक्तिरिति सिद्धम्। भाट्टदीपिकाकारो नैयायिकैर्यज्जातौ शक्त्यङ्गीकारे गौरवं व्यक्तौ शक्त्यङ्गीकारे च लाघवं प्रतिपादितम्, तदेव खण्डयित्वा जातिशक्तावेव लाघवं प्रदर्शयति। अयं तस्य पूर्वपक्षसङ्क्षेपः।

अवघातादिक्रियाणां लिङ्गसंख्याकारकाणाञ्च जातावन्वयो न सम्भवति, अयोग्यत्वाज्जातेः। 'गौः शुक्लः' इत्यत्र यत् सामानाधिकरण्यमवभासते, तदपि जातिशक्त्यङ्गीकारे नोपपद्यते। अतो व्यक्तावेव शक्तिर्वाच्या[2]। व्यक्तेर्लिङ्गसंख्याकारकक्रियान्वयस्य समानाधिकरणस्य चोपपत्तिर्भवति। तर्हि कथं गवादिशब्देभ्यो गोत्वादिजातीनामपि बोध इति चेत्, लक्षणादिना एव। अथवा व्यक्तिशक्त्यग्रहस्यैव कार्यतावच्छेदकं जातिविशिष्टबोधत्वम्। अर्थाद् व्यक्तौ शक्तिग्रहेणैव जातिविशिष्टव्यक्तिविषयकशाब्दबोधो भवति। जातिशक्तिग्रहेणैव जातिविशिष्टव्यक्तेरपि शाब्दबोध उपपादयितुं शक्यते। अतो व्यक्तौ वा शक्तिर्जातौ वा इत्यत्र विनिगमकं नास्तीति चेत्, अस्ति विनिगमकम्, तच्च लाघवमेव। तथापि

१. भा.दी., १.३.१०, पृ. ५२।

२. 'आकृतेरभिधेयत्वाद् धातुना व्यक्तिराश्रिता।
सा च नाम्नाऽभिधीयेत जातिश्चेन्नैव नामता।।' इति। (तन्त्रवा., १.४, पृ. २८२)

नास्माभिः शक्तिग्रहस्य शाब्दबोधं प्रति स्वतन्त्रतया कारणत्वमङ्गीक्रियते; किन्तु लाघवात् शक्यत्वादिसम्बन्धेन घटपदवत्ताज्ञानस्यैव कारणत्वमङ्गीक्रियते। अतोऽस्मिन् मते विशिष्यतासम्बन्धेन घटत्वविशिष्टविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन घटत्वधर्मितावच्छेदकशक्यत्वसंसर्गघटपदप्रकारकज्ञानस्य कारणत्वम्। भवन्मते तु घटत्वत्वं धर्मितावच्छेदकीकृत्य घटपदप्रकारकज्ञानस्य कारणत्वं वाच्यम्। घटत्वत्वं च घटेतरावृत्तित्वरूपम्। अतोऽनेकपदार्थघटितम्। तस्य च कार्यकारणभावे प्रवेशाद् गौरवम्[१]। शक्त्यानन्त्यादिदोषस्य फलमुखत्वान्न दोषकत्वम्। अतश्च लाघवाद् व्यक्तावेव शक्तिः, जातिविशिष्टव्यक्तौ वा, न तु जातावेवेति।

उत्तरपक्षस्तु नैयायिकैर्यथा घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य घटत्वविशिष्टविषयकशाब्दत्वावच्छिन्नं प्रति कारणत्वमुक्तं तथा पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्ताज्ञानस्य घटपदं घटवदित्याकारकस्य कारणत्वं वक्तुं शक्यते। तत्रोभयोर्मध्ये कतरस्य कारणत्वमित्यत्र विनिगमनाभावात् कार्यकारणभावे व्यभिचारवारणाय अव्यवहितोत्तरत्वं निवेशनीयम्। तेन चानन्तकार्यकारणभावापत्तिः। भाट्टानां मते तु घटपदत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटत्ववत्तानिश्चयस्य घटपदं घटत्ववदित्याकारकस्य कारणत्वं कल्प्यते। अतो लाघवम्।

न च भाट्टमतेऽपि घटत्वधर्मिककार्यकारणभावोऽपि सम्भवतीति विनिगमनाविरह आपादयितुं शक्यते। घटत्वस्य धर्मित्वे स्वरूपेण तस्य धर्मित्वायोगाद् घटत्वत्वेन तस्य प्रवेशे तूक्तरीत्यैव गौरवं भवति। अतो विनिगमनायाः सत्त्वान्नानन्तकार्यकारणभावापत्तिः[२]। अतो घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसम्बन्धेन घटपदवदित्याकारकं ज्ञानं न शाब्दबोधे कारणम्; किन्तु घटपदं शक्तत्वसम्बन्धेन घटत्ववद् इत्याकारकमेव। तत्र घटत्वजातेः स्वरूपेणैव

१. 'अतश्चास्मन्मते घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदप्रकारस्य घटो घटपदवानित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वम्। भवन्मते तु, घटत्वत्वं धर्मितावच्छेदकीकृत्य तद् वाच्यम्। अतश्च घटत्वत्वस्य घटेतरावृत्तित्वादिरूपस्यानेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवम्, न मम' इति। (भा.दी., १.३.१०,, पृ. १०४-१०५)

२. 'अस्मन्मते तु,घटपदत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनायां लाघवम्। न च ममापि विपरीतमापादयितुं शक्यम्। तथा सति घटत्वस्य धर्मित्वे स्वरूपेण तस्य धर्मितायोगाद् घटत्वत्वेन तस्य प्रवेशे गौरवस्य त्वयैवोक्तत्वात्'। इति (भा.दी., १.३.१०, पृ. १०५)।

प्रकारत्वोपपत्तौ घटत्ववत्त्वस्य न कार्यकारणभावे प्रवेशः। अतः प्रथमोपस्थितत्वाज्जातावेव शक्तिः। एवमरुणादिशब्दानामपि गुणे गुणत्वे वा शक्तिर्न तद्विशिष्टद्रव्ये। कथं तर्हि व्यक्तिबोधः? इति चेत्—जातिव्यक्त्योरभेदादेव। उक्तपदविशेष्यकजात्यादिप्रकारकशक्तत्वसंसर्गकज्ञानरूपकारणस्य जातिविशिष्टव्यक्ति-शाब्दत्वे गुणविशिष्टव्यक्तिशाब्दत्वे च कार्यतावच्छेदकत्वमङ्गीक्रियते। अथवा जातिशब्दत्वं गुणशब्दत्वञ्च लाघवेन कार्यतावच्छेदकम्, न तु जातिगुणविशिष्टव्यक्तिशाब्दत्वम्[१]। 'पशुना यजेत', 'अरुणया पिङ्गाक्ष्या क्रीणाति' इत्यादौ व्यक्तिर्नैव पदाद् भासते, जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा कारणत्वमुपपद्यते। लिङ्गसंख्ययोरपि पार्ष्टिका एव जातिगुणसम्बन्धाः। अतस्तत्र सम्बन्धविधया एव व्यक्तिबोधः। द्वितीयादिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयायोग्यत्वाद् व्यक्तेर्लक्षणया बोधः। तत्रैव च कर्मत्वान्वयो लिङ्गसंख्यान्वयश्च साक्षात् सम्बन्धेनैव सामानाधिकरण्यञ्च व्यक्तिद्वारकमेव।

वस्तुतः पदस्य मुख्योऽर्थ एव शक्यार्थः। स च शक्यार्थः कीदृश इत्यत्र विदुषां विप्रतिपत्तिः। सत्स्वपि मतभेदेषु मीमांसका जातौ शक्तिग्रहं स्वीकुर्वन्ति। आनन्त्याद् व्यभिचाराच्च व्यक्तौ सङ्केतो नैव ग्राह्यः। अतो जातावेव सर्वेषां शब्दानां शक्यार्थः।

परन्तु ये आकृतिवादिनः सन्ति तेषां मते आकृतिरवयवसंस्थानं वा शक्यार्थः। यथा—'गौः' इति पदं गलकम्बलाद्यवयवसंस्थानविशिष्टं पदार्थमुपस्थापयति। आकृत्या एव अश्वाद् गोभेदो ज्ञायते। पदे उच्चारिते आकृतिरेव स्मर्यते। अत आकृतिरेव पदस्यार्थः।

तन्त्रवार्त्तिके आकृतिविशिष्टव्यक्तेर्वाच्यत्वं स्वीकृत्य विचारः प्रवर्तते। तस्माद् आकृतिविशिष्टा व्यक्तिः शब्दार्थ इति मतं केचित् परिपोषयन्ति।

वस्तुतो व्यक्त्याकृतिजातयस्तु पदार्था इति महर्षिगौतममतं युक्तियुक्तमिव प्रतिभाति। तथा च न केवलं व्यक्तेः, न वा जातेः, न वा आकृतेः पदार्थत्वम्; किन्तु व्यक्त्याकृतिजातीनामिति।

●

---

१. एवमक्ष्णादिशब्दानामपि गुण एव, गुणत्वे वा; न तद्विशिष्टद्रव्ये। कथं तर्हि व्यक्तिबोधः, अभेदात्। उक्तविधकारणस्य जातिगुणविशिष्टव्यक्तिशाब्दत्व एव कार्यतावच्छेदकत्वस्वीकाराद्वा। वस्तुतस्तु जातिगुणशाब्दत्वमेव लाघवेन कार्यतावच्छेदकम्।

(भा.दी., १.३.१०, पृ. १०६-१०७)

# न्यायमतेन प्रामाण्यविमर्शः

**डॉ. शिवशङ्करमिश्रः**
प्राध्यापकः, सर्वदर्शनविभागस्य
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे
नवदेहली



प्रमाणज्ञानात्प्राक् प्रमाज्ञानमावश्यकमतो प्रथमं प्रमास्वरूपं विविच्यते। न्यायनये ज्ञानं द्विविधं स्मृतिरनुभवश्चेति। तत्र संस्कारमात्रजन्यं ज्ञानं स्मृतिः, तद्भिन्नं ज्ञानमनुभवः।[१] सोऽपि द्विविधः—प्रमा अप्रमा च। यथार्थानुभवः प्रमा, अयथार्थानुभवश्चाप्रमा। प्रमा प्रमितिर्यथार्थानुभवो विद्येति प्रमाशब्दस्य पर्यायाः। न्यायकुसुमाञ्जलिकारेण उदयनाचार्येण यथार्थानुभवत्वेन प्रमाया लक्षणं प्रपञ्चितम्। दोषाजन्यज्ञानत्वं यद्वा विशेष्यावृत्त्यप्रकारकज्ञानत्वमिति प्रमालक्षणं क्रियते वैशेषिकैः।

नैयायिका बाह्यार्थसत्तामभ्युपगच्छन्ति। बौद्धमतनिरसनप्रकरणे भाष्यकारो वात्स्यायनः स्पष्टमुक्तवान् यद् बुद्ध्या विविच्यमानानां पदार्थानां नास्त्यनुपलब्धिर्नाम।[२] वस्तुस्वरूपस्य यथार्थानुभूतिः प्रमा तत्करणञ्च प्रमाणमित्युच्यते। वस्तुनो यथार्थस्वरूपविषये भाष्यकाराणामिदं वचनं—यद्वस्तु यथाभूतं तत्तथैव अविपरीतं गृह्यमाणं तत्त्वं विपरीतञ्च गृह्यमाणमतत्त्वं भवति[३]। यस्य वस्तुनो येन रूपेणास्तित्वं तस्य तेन रूपेण ग्रहणं प्रमा, अन्यथा च ग्रहणमप्रमा भवति। अर्थाद् यद्वस्तु यद्धर्मवन्न भवति तस्य तद्धर्मवत्त्वज्ञानमप्रमेत्यर्थः। यथा रजतत्वविशिष्टे रजते रजतत्वप्रकारकं ज्ञानं प्रमा, तद्धीनायाञ्च शुक्तौ रजतत्वावगाहिज्ञानमप्रमेति फलितोऽर्थः। न्यायसिद्धान्तमुक्तावलीकर्त्रा आचार्यविश्वनाथेन प्रमायाः लक्षणद्वयमुक्तम्। प्रथमं तावत्—'भ्रमभिन्नत्वे सति ज्ञानत्वं' प्रमायाः लक्षणम्। अपरञ्च—'तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं' प्रमायाः लक्षणम्। अत्र

---

१. तर्कसंग्रहे प्रत्यक्षखण्डे; २. न्यायभाष्ये-४/२/२७।

३. तत्रैव-१/१/१।

शुक्तिरजतयोः 'इमे रजते' इति ज्ञानं रजते रजतविषयकत्वांशे प्रमा परञ्च तत्र भ्रमभिन्नत्वं नास्त्यतो न तस्य प्रमात्वमतो लक्षणान्तरमुक्तम्।

मीमांसायां भाट्टसिद्धान्ते भाट्टचिन्तामणिकारेण गागाभट्टेन यथार्थानुभवत्वमेव प्रमात्वमित्युक्त्वा अज्ञातविषयकं बाधकज्ञानरहितं ज्ञानं प्रमेति तत्परिष्कृतम्।

भाट्टमते अनुवादादीनां प्रामाण्यं नास्ति यतस्तत्र पूर्वज्ञानाद् अर्थपरिच्छेदे व्यवहारे वा किमपि वैशिष्ट्यं न दृश्यते।

एवञ्च फलविशेषस्यानुवादवाक्येषु खपुष्पायमानतया स्मृतिवदनुवादानामपि न प्रामाण्यं स्वीक्रियते भाट्टैः। पटोऽयं पटोऽयमिति अनवच्छिन्नधारावाहिकज्ञानेषु द्वितीयादिज्ञानानामयमयमित्युत्तरेषां कालांशानां पूर्वमज्ञातानामवबोधनाद् उत्तरक्षणसम्बन्धिपटसद्भावस्य प्राग्ज्ञानेनाकल्पनात् नाप्रमात्वापत्तिः। एतेन निर्णीतं भाट्टमते अज्ञाततत्त्वार्थज्ञानमेव प्रमेति राद्धान्तः।

वाचस्पतिमिश्रानुसारेण प्रमात्वमर्थविषयकज्ञानत्वमिति लक्षणेन स्मृतौ अप्रमायाञ्चातिव्याप्तिमुद्वीक्ष्य प्रमालक्षणमव्यभिचारिस्मृतिभिन्नज्ञानमित्यादिना परिष्कृतम्। न्यायकुसुमाञ्जलिकारेणोदयनाचार्येण यथार्थानुभवत्वं प्रमाया लक्षणं कृतम्[१]। यथार्थानुभवत्वं प्रमालक्षणमिति नैयायिकाः[२]। सम्यगनुभवापरपर्यायस्तत्त्वानुभवः प्रमेति शिवादित्यः[३]। अव्यभिचारिणी संशयभिन्ना चार्थोपलब्धिः प्रमेति न्यायमञ्जरीकारो जयन्तभट्टः[४]। अज्ञातविषयककरणदोषबाधकज्ञानरहितं ज्ञानं प्रमेति शास्त्रदीपिकाकारः[५]। मानमेयोदयकारमते अज्ञाततत्त्वार्थज्ञानमेव प्रमा[६]। प्रभाकरमतानुसारेणायथार्थानुभवो न भवति कश्चन। यतो यो हि अनुभवः सोऽवश्यं यथार्थः, अतोऽनुभूतिरेव प्रमेति निर्गलितोऽर्थः।

**प्रमाणमीमांसा**

वादिप्रतिवादिशास्त्रचर्चावसरे पक्षप्रतिपक्षयोर्मध्ये किं श्रेय इति विनिश्चयार्थं तत्र प्रमाणमपेक्ष्यते। अयं पक्षः श्रेयान् अत्र किं प्रमाणम्, अयं पक्षश्च हेयः, अत्र

१. अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते।। (न्या.कु. ४.१)

२. यथार्थानुभवः प्रमेति प्रामाणिकाः पश्यन्ति। तत्त्वज्ञानादिति सूत्रणात्। अव्यभिचारिज्ञानमिति च। (न्या.कु. ४.२८)

३. स.प. ६८।

४. अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावसामग्री प्रमाणम्। (न्या.म.१२)

५. शा.दी. ४४/४५।

६. प्रमा चाज्ञाततत्वार्थज्ञानमेवात्र भिद्यते। (मा.मे.२)।

किं मानमिति वचनेन प्रमाणमण्डनं सुतरां सिद्ध्यति। अतो दार्शनिकेषु आस्तिको वा भवतु नास्तिको वा, सर्वत्र स्वाभिमतविषयप्रतिपादनपूर्वकं प्रथमं तत्र प्रमाणमुपस्थाप्यते। 'मानाधीना मेयसिद्धिः' इति सर्वाभ्युपगतः सिद्धान्तः।

वादिप्रतिवादिनौ स्वाभिमताभिप्रायं प्रमाणमुपादाय तस्य फलं प्रतिपादयतः। सर्वैरपि दार्शनिकैः प्रमाण-प्रमेय-प्रमातृ-प्माऽप्रमादिविषयानवलम्ब्य एव कश्चन विचारः प्रस्तूयते। प्रमाणशब्दस्तावत् प्रोपसर्गपूर्वक-माधातोर्ल्युट्प्रत्यये सति निष्पद्यते तदर्थः प्रमाकरणमिति। प्रमितिः प्रमाणमिति भावव्युत्पत्तिरपि कैश्चित् प्रतिपाद्यते।

**प्रमाणनिरूपणम्**

दर्शनानि जीवनं जगच्च व्याचक्षते, ज्ञानमीमांसा च ज्ञानम्। प्रथमं तावदत्रेदं ज्ञेयं भवति यत् कानि कानि ह्यस्माकं ज्ञानसाधनानि? कांस्कान् विषयानवबोद्धुं वयं पारयामः?

ज्ञानमीमांसामाधारीकृत्यैव पाश्चात्यदार्शनिकः काण्टमहोदयो जगाद तत्त्वमज्ञेयमिति। एतेन ज्ञायते यद् दर्शनस्य ज्ञानमीमांसया सह घनिष्ठः सम्बन्धो वर्तते। अर्थाद् दर्शनं ज्ञानमीमांसामाधृत्यैव सन्तिष्ठते। ततश्च प्रत्येकदार्शनिकस्य कृते इदं स्पष्टं यत् स दार्शनिकविषयविवेचनात्प्राग् ज्ञानमीमांसामेवाधिगच्छेत्। अत्रेदं विचिन्त्यं यद् ज्ञानमीमांसा प्रमाणमीमांसा चैका एव, यतो हि ज्ञायतेऽनेनेति ज्ञानमिति करणव्युत्पत्त्या ज्ञानसाधनं ज्ञानं तस्य मीमांसा ज्ञानमीमांसा, सा च प्रमाणमीमांसैव भवति। ज्ञानोत्पत्तिसम्बन्धाद् ज्ञानमीमांसायां प्रमाणमीमांसायाश्चर्चा स्वाभाविकी एव भवति।

कथनस्यायमाशयो यत् सकलमपि दार्शनिकं विवेचनं ज्ञान-प्रमाणोभयमीमांसाया विचारपूर्वकमेवारभ्यते, यतः प्रमाणमीमांसादर्शनस्य साऽऽधारशिला अस्ति यस्यां भव्यं दर्शनभवनं चिरकालमवतिष्ठते। समेषां दार्शनिकानां चरमोद्देश्यमात्यन्तिकदुःखनिवृत्तिः, तच्च तत्त्वज्ञानमन्तरा न सम्भवति। तत्त्वज्ञानं तत्त्वमीमांसाश्रितम्। वस्तुमात्रस्य यथार्थानुभवः प्रमाणज्ञानाधीनः प्रमाणमन्तरेण कस्यापि वस्तुनो यथार्थज्ञानं न भवितुमर्हति। अत एवोक्तम्— 'प्रमेयसिद्धिः प्रमाणाद्धि।' प्रमाणसिद्धमेव वस्तुजातं सिद्धान्तो वा कस्यचित्प्रेक्षावत्पुरुषस्य प्रवृत्तये भवति। प्रमाणद्वारेणैव भाष्यकाराः स्वपक्षमण्डनं

परपक्षखण्डनञ्च कुर्वन्ति। सर्वेऽपि पाश्चात्त्याः प्राच्या वा दार्शनिकाः प्रमाणानां सत्तामभ्युपगच्छन्ति।

यद्यपि वैदिकदर्शनेषु प्रमाणमीमांसाया महत्त्वमारम्भत एव विद्यते, तथापि तस्यास्तत्त्वमीमांसया साकं किमपि गौरवातिशयं स्थानं प्रदातुं यशः न्यायदर्शनेनैवासादितं, यस्य विकासक्रमः प्रायो द्विसहस्रसंवत्सरात्मकोऽस्ति। तत्र विकासस्य क्रमद्वयं दृश्यते। प्रथमविकासक्रमस्यारम्भ आचार्यगौतमाज्जायते, अत्र प्रमेयपदार्थानां बाहुल्येन प्रतिपादनमस्ति। अत इयं पद्धतिः पदार्थमीमांसात्मक-पद्धतिरित्यभिधीयते। अपरक्रमस्यारम्भो गङ्गेशोपाध्यायाज्जातः। अस्यां पद्धतौ प्रमाणानां विस्तृता चर्चा दरीदृश्यतेऽत इयं प्रमाणमीमांसात्मकपद्धतिरिति वक्तुं शक्यते। प्रथमा पद्धतिः 'प्राचीनन्यायः' इति, अपरा पद्धतिः 'नव्यन्यायः' इति च नाम्ना लोके व्यपदिश्यते। उभयोः प्रतिपादने सत्यपि भेदे सिद्धान्तसाम्याद् उभे अपि न्यायसंज्ञया व्यवह्रियेते, न्याय इति संज्ञया एव ज्ञायेते यदस्य शास्त्रस्योद्देश्यं न्यायस्य प्रतिपादनं सत्यस्यान्वेषणं वाऽस्तीति, तदुक्तं न्यायसूत्रव्याख्यायां वात्स्यायनेन—**'प्रमाणैरर्थपरीक्षणं न्यायः'**[1] अर्थात् प्रमाणै-र्वस्तुतत्त्वस्य परीक्षणमेव न्यायशब्दार्थः। अत्रायं न्यायशब्दः प्रतिज्ञा-हेतूदाहरणोपनयनिगमनात्मके परार्थानुमानभूते पञ्चावयववाक्ये अर्थविशेषे रूढो वर्तते। अस्य आन्वीक्षिकी इत्यपि संज्ञाऽस्ति। अधिगतवस्तुनः पश्चादीक्षणे प्रवृत्तत्वादेवेयं न्यायविद्या आन्वीक्षिकी इति नाम्ना निगद्यते। हेतुविद्या हेतुशास्त्रमपि न्यायस्यापरं नामेति।

प्रमेयसिद्धिसाधनभूतानां प्रमाणानां सम्यग् विवेचनमेव न्यायशास्त्रस्य परमप्रयोजनम्। अतो न्यायदर्शनं प्रामुख्येन प्रमाणशास्त्रमस्ति। प्रमाणं तावत्प्रमायाः करणं प्रमा च यथार्थज्ञानमिति शास्त्रेषु प्रथितमस्ति। प्रमा प्रमितिर्यथार्थानुभवो विद्येति पर्यायाः। प्रमीयत इति प्रमा। सूत्रकारेणाचार्यगौतमेन प्रमाणप्रमेयेत्यादि-सूत्रान्ते तत्त्वज्ञानान्निःश्रेयसाधिगम इति निःश्रेयसोपायतया तत्त्वज्ञानमुपदिष्टम्। दुःखजन्मप्रवृत्तीत्यादिद्वितीयसूत्रे मिथ्याज्ञाननाशकत्वे तत्त्वज्ञानस्य प्रमात्मकत्वं प्रतिपादितम्।

वात्स्यायनेन भाष्ये 'उपलब्धिसाधनानि प्रमाणानि' इति प्रोक्तम्। अत्रोपलब्धिपदं बुद्धिपरतया प्रमापरतया वा प्रयुक्तम्। ज्ञानस्य निर्विषयक-

---

१. न्यायसूत्रवात्स्यायनभाष्ये–१/१/१।

त्वाभावादुपलब्धिपदेनार्थविषयकज्ञानत्वरूपप्रमात्वमेव भाष्यकृता स्वीकृतमित्युपलभ्यते। उपलब्धिहेतोः प्रमाणत्वमभ्युपगच्छता वार्तिककारेणापि प्रमाया अर्थविषयकज्ञानत्वमित्यसूचि[1]।

**प्रमाणलक्षणविचारः**

प्रमीयतेऽनेनेति प्रमाणमिति करणव्युत्पत्त्या प्रमाकरणतया प्रमाणपदं सिद्ध्यति, अर्थात् प्रमाता विषयस्य यथार्थज्ञानं येनाधिगच्छति तत्प्रमाणमित्युच्यते। प्रमायाः साधनं करणं वा प्रमाणं भवति, तदुक्तं वात्स्यायनेन— उपलब्धिसाधनं प्रमाणमिति[2]। इमामेवोक्तव्युत्पत्तिमभिलक्ष्य प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणे कस्यापि दर्शनस्य नास्ति काऽपि विप्रतिपत्तिः। न्यायदर्शने ज्ञानस्य प्रामाण्यं नाभ्युपेयते, प्रमीयतेऽनेनेति करणव्युत्पत्तेर्बाधात्। नयेऽस्मिन् ज्ञानसामग्र्याः प्रमाणत्वं वार्तिककारेण भरद्वाजेनोद्योतकरेणापि उपलब्धिसाधनं प्रमाणमिति निगदितम्[3]। वाचस्पतिमिश्रः स्मृतिभिन्नामर्थाव्यभिचारिणीं प्रमां निरूप्य तत्साधनं प्रमाणमिति प्रमाणलक्षणं निबबन्ध[4]। समीचीनानुभवस्य साधनं प्रमाणमिति न्यायसारे भासर्वज्ञः[5]। अविसंवादिज्ञानं प्रमाणमिति सौगतानां प्रमाणलक्षणम्। अत्र विसंवादो वञ्चनम्। ज्ञानं तद्भिन्नेन्द्रियसन्निकर्षादेः प्रामाण्यनिवृत्तिः। बौद्धाः सारूप्यं वा अर्थकारतां वा प्रमितिकरणमाहुः[6]। एतन्मते अधिगतार्थज्ञापकं ज्ञानं प्रमाणमित्युच्यते[7]। शान्तरक्षितमते सारूप्ययोग्यताप्रमाणं विषयाधिगतिः संवित्तिश्च तत्फलमिति निगदितम्[8]। अपूर्वमर्थं विषयीकुर्वद् अर्थज्ञानं प्रमाणमिति मोक्षाकारगुप्तेन उद्घोषितम्। मीमांसादर्शने भाट्टानां प्रमाणलक्षणं प्रमाकरणत्वमेव।

अनधिगताबाधितार्थविषयकज्ञानजनकप्रमाणमिति प्रमाणलक्षणं भाट्टमते परिष्कृतम्। प्रभाकरोऽनुभवस्यायथार्थत्वं नाङ्गीकरोति, अतोऽनुभूतिः प्रमाणमिति प्रतिपादयति। प्रमाकरणं प्रमाणमिति जयन्तभट्ट उदयनश्च यथार्थानुभवं प्रमाणमाह।

---

१. न्यायवार्तिके, पृ. ९; १. न्यायभाष्यम्, १८२।

३. न्या.वा.भा. ९ 'उपलब्धिहेतुः प्रमाणम्।'

४. प्रमासाधनं हि प्रमाणम्, न च स्मृतिः प्रमा। लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च संस्कारमात्रं जन्मनः। स्मृतेः स्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे तस्मात् तद्धेतुप्रामाण्यम्। (ता.दी. ३५)

५. सम्यग् अनुभवसाधनं प्रमाणम्। (न्या.सा. ११)

६. प्रमा. समु., पृ. ११; ७. प्रमा. समु., पृ. २।

८. स्ववित्तिर्वा प्रमाणन्तु सारूप्यं योग्यतापि च। (तत्त्वसंग्रह-का.)

वैशेषिकमते दोषरहितं ज्ञानं तत्करणं प्रमाणमित्यभिहितम्। एवमुभयो-र्न्यायवैशेषिकदर्शनयोः प्रमाकरणमेव प्रमाणमित्युक्तम्। न्यायमते ज्ञानं तत्साधनी-भूतः सामग्रीविशेषश्च प्रमायाः करणं मन्यतेऽतः कारणसाकल्यमिन्द्रियार्थमनः-पदार्थप्रकाशादिकारणसामग्री प्रमाणमित्युक्तं भवति[१]। न्यायसूत्रकार आचार्यगौतमः प्रमाणसामान्यलक्षणप्रदर्शनार्थं न किमपि सूत्रं रचयामास, अपि तु प्रमाणशब्दनिर्वचनेनैव तत्सामान्यलक्षणसिद्धिर्भवति। एवं प्रमाणशब्द-व्युत्पत्तिलब्धमेव प्रमाणलक्षणं वात्स्यायनेनापि स्वीकृतम्। विशेषसारूप्यप्रमाणं विषयाकारमर्थनिश्चयं तत्फलमिति दिङ्नागो निगदति।

यद्यपि बौद्धमते प्रमाणतत्फलयोर्मध्ये न कश्चन भेदस्तथापि ज्ञानरूपं प्रमाणं विषयाकारितामेव प्रमाणत्वमेतीति तदाशयः।

जैनसम्प्रदाये स्वपरावभासकं ज्ञानं प्रमाणमित्युच्यते। सम्प्रदायस्यास्य विशिष्ट आचार्यः सिद्धसेनो लक्षणेऽस्मिन् वैशिष्ट्यं कुर्वन् स्वपरावभासकं बाधवर्जितञ्च ज्ञानं प्रमाणमित्युक्तवान्[२]। पुनश्च अकलङ्केनास्मिन् लक्षणे अविसंवादि अनधिगतम्, व्यवसायात्मकमिति त्रीणि विशेषणानि संयोज्य स्वस्य चार्थस्य च ग्राहकं ज्ञानं प्रमाणमित्युक्तम्।

सांख्यदर्शनानुसारेण विषयाकारान्तःकरणचित्तवृत्तिः प्रमाणम्। योगदर्शनेऽपि इदमेव लक्षणमभिमतम्।

भट्टप्रभाकरमतमवलम्ब्य मीमांसादर्शनं सम्प्रदायद्वयेन विभक्तम्। तत्र भाट्टमते अनधिगतस्य यथावस्थितस्य चार्थस्य निश्चायकज्ञानं प्रमाणम्। तदुक्तं वासुदेव-दीक्षितेन—अनधिगतार्थगन्तृत्वमेव प्रमाणत्वम्।

पूर्वमीमांसासूत्रकार आचार्यजैमिनिः प्रमाणलक्षणमेवं विहितवान्—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्[३]। अत्र लक्षणे अव्यतिरेकपदेन अबाध्यत्वम्, अनपेक्षितत्वपदेन भ्रमविप्रलिप्सादिकरणदोषराहित्यम्, अनुपलब्धमित्यनेन प्रमाणान्तराज्ञातत्वमिति विवक्षितम्। तथा च भ्रमविप्रलिप्सादिकरणदोष-बाधकज्ञानरहितागृहीतग्राहिज्ञानसाधनं प्रमाणमिति निष्कृष्टं प्रमाणलक्षणम्[४]।

---

१. न्या.वा.ता. चतुस्सूत्री।

२. स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्। (समन्तभद्रः)

३. मी. दर्शने १/१/५; ४. शा. दी. ४४।

मानमेयोदयकार आचार्यनारायणोऽज्ञाततत्त्वार्थज्ञानं प्रमा तत्करणं प्रमाणमिति प्रमाणलक्षणं परिष्कृतवान्।

निष्कर्षतोऽनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणमिति भाट्टसिद्धान्तः।

प्रभाकरमतेऽनुभूतिः प्रमाणम्। अनुभूतिर्नाम स्वरूपपरिच्छित्तिः। अनुभूतिरनुभवः। सा चानुभूतिः पूर्वानुभूतसंस्कारमात्रजन्यात्मकस्मृतेरन्या। अतः संस्कारातिरिक्तकारणजन्यं संस्काराजन्यं यज्ज्ञानं तत्करणत्वं प्रमाणत्वमिति। परञ्च अनुभूतिमात्रस्य प्रमात्वकथनं न समीचीनम्, यतो नानाव्यक्तीनामेकविषयाया एवानुभूतेः स्वस्वभावनावशाद् भिन्नभिन्नत्वात्। ज्ञातृव्यापारस्य च प्रमाणत्वस्वीकारे ते युक्तीरुपस्थापयन्ति यदर्थप्रकाशनं ज्ञातृव्यापारायत्तमतस्तदेव प्रमाणम्। परमिदमपि न युक्तियुक्तम्, ज्ञातृव्यापारोऽर्थप्रकाशने प्रमाणं तदा सम्भवेद् यदा स व्यापारो वस्तुनो यथार्थबोधे एककरणं स्यात्, यत्र तु वस्तुनो यथार्थबोधे कारणमसद् विपरीतज्ञान एव कारणं भवति कथं तत् तत्र प्रमाणं स्यात्?

प्रभाकरविजये नन्दीश्वरः प्रमाणलक्षणमेवमुक्तवान्—अनुभूतिः प्रमाणम्। अत्र स्वतन्त्रपरिच्छित्तिर्नाम अनुभूतिः प्रमाणशब्दः प्रमापर्यायः। स्वातन्त्र्यं तावद् बुद्ध्यन्तरानपेक्षत्वम्। स्मृतेस्तु पूर्वानुभूतापेक्षा अस्तीति न तस्य प्रमाणत्वम्[1]। तथा च प्रभाकरमते अनुभूतिरूपप्रमाकरणं प्रमाणमिति फलितोऽर्थः।

वेदान्तराद्धान्ते चिद्रूपस्य ब्रह्मणः प्रकारविशेष एव ज्ञानम्। यद्यपि अद्वैतवेदान्ते आत्मतत्त्वमेव परमार्थतया सद्वस्तुत्वेन स्वीकृतम्, तथापि तत्रान्येषां पदार्थानां विषयाणां वा सत्ता सर्वथा उपेक्षिता न विद्यते। सन्नपि प्रत्ययवादी स व्यावहारिकं दृश्यमानं प्रपञ्चं सर्वथा नाऽस्वीकरोति। मतेऽस्मिन् सत्तायाः प्रकारत्रयं दृश्यते—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी च। एतासु पारमार्थिकी सत्ता श्रेष्ठा लौकिकप्रमाणाविषयीभूता च भवति। नयेऽस्मिन् व्यवहारदशायां वस्तुतत्त्वस्य व्यवहारसत्ता तथैवाभ्युपगता यथान्ये सद्वस्तुवादिनोऽभ्युपगच्छन्ति। अत्र इयानेव विशेषो यदेकः सद्वादी दृश्यमानं प्रपञ्चं सन्निति मनुते, अपरस्तु आत्मतत्त्वातिरिक्तं सर्वमसदिति स्वीकरोति।

यद्यप्यात्मतत्त्वस्य परिज्ञानाय लौकिकप्रमाणानां न काऽप्यावश्यकता, यतः परमतत्त्वं लौकिकप्रमाणैः सर्वथा अवेद्यं विद्यते। परञ्च तत्त्वज्ञानस्य तदानीमेव पूर्णता यदा सत्तात्रयस्य सम्यग् ज्ञानं जायते। अतो व्यवहारज्ञानार्थं वेदान्तिनोऽपि

---

१. प्र. वि. २४-२५।

लौकिकप्रमाणानि प्रतिपादयन्ति। अस्मिन् राद्धान्ते अनधिगतस्याबाधितं यथार्थज्ञानं प्रमा, तत्करणञ्च प्रमाणमित्युच्यते। केचित्तु प्रत्यक्षादिप्रमाजन्यज्ञानमेव प्रमाणमिति।

सामान्यतः सकलदार्शनिकमतविवेचनेनेदं सिद्ध्यति यत् 'प्रमाकरणं प्रमाणम्' इत्येव प्रमाणलक्षणं समेषामभिप्रेतम्। तच्च प्रमाणं कुत्रचिदिन्द्रियम्, कुत्रचिदिन्द्रियसन्निकर्षः, कुत्रचिच्च ज्ञानरूपं भवति[१]।

वस्तुस्थितिरियं व्यवहारोपलब्धानां चतसृणां प्रत्यक्षानुमित्युपमिति-शाब्दाख्यप्रमाणानां कारणानि विश्लेषयद्भिरस्माभिरुक्तानि त्रीण्येव तत्त्वानि कारणतया परिलक्ष्यन्ते। एतेषु त्रिषु तत्त्वेषु कदाचित् किञ्चित्कारणं कदाचिद् व्यापारः कदाचिच्च फलमवतिष्ठते। यत्र कार्यं प्रति किमपि कारणं भवति तत्र कश्चन व्यापारोऽप्यवश्यं भवति, व्यापारवदसाधारणकारणस्य करणघटकत्वात्। व्यापारस्तावत्—तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः। तथा च यदा निर्विकल्पकज्ञानफलं तदा इन्द्रियं करणम्, इन्द्रियार्थसन्निकर्षो व्यापारः। एवं यदि सविकल्पकज्ञानं फलं तर्हि इन्द्रियार्थसन्निकर्षः करणं निर्विकल्पकज्ञानञ्च व्यापारो भवति। एवं हानोपादानबुद्धिरूपफलं प्रति निर्विकल्पकज्ञानं करणं सविकल्पकज्ञानञ्च व्यापारो भवति। अनुमित्युपमितिशाब्दबोधस्थले व्याप्तिज्ञान-सादृश्यज्ञानपदज्ञानादीनां क्रमशोऽसाधारणत्वम्। यद्यपि प्रमातृप्रमेयादीनामपि प्रमां प्रति कारणत्वमस्ति, तथापि साधकतमत्वाभावाद् व्यापारवदसाधारण-कारणत्वाभावान्न तेषां प्रमाणान्तर्भावः।

## समीक्षणम्

'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[२] इति गौतमसूत्रानुरोधेन प्रमाणचतुष्टयसिद्धिः। अत्रेदं जिज्ञास्यं यन्नैयायिकैः किमर्थं चत्वार्येव प्रमाणान्यभ्युपगतानि। यथा हि मीमांसका वेदान्तिनश्च षट्प्रमाणान्यभ्युपगच्छन्ति, जैनबौद्धवैशेषिकाश्च द्वे प्रमाणे स्वीकुर्वन्ति, सांख्ययोगमते प्रमाणद्वयमभिमतम्, तथा च कथं नैयायिकानां प्रमाणचतुष्टयम्? न ततोऽधिकं न वा न्यूनमिति? एतज्जिज्ञासायाः समाधानार्थं कृतप्रयासस्यायमाशयः—प्रत्यक्षादिचतुःप्रमाणाति-रिक्तानां प्रमाणानामेतेषु चतुर्षु अन्तर्भावात्। अथ चैतेषां प्रमाणा-नामन्यत्रान्तर्भावाभावाद् न्यूनाधिक्यापेक्षपरिहारः।

---

१. तर्कभाषा प्रत्यक्षनिरूपणप्रकरणम्।

२. गौ. सू. १।१।३।

मीमांसकैर्वेदान्तिभिश्च अर्थापत्तेः प्रमाणान्तरत्वं स्वीकृतम्। अनुत्पद्यमानमर्थमुपलभ्य तदुपपादकार्थान्तरकल्पनमर्थापत्तिः। यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र भोजनं विना पीनत्वमनुपपद्यमानमतस्तत्र रात्रिभोजनं कल्प्यते। इयमेवार्थापत्तिः। आशयोऽयं यद् दिवा अभुञ्जानत्वविशिष्टोऽयं देवदत्तः पीनो दृश्यतेऽतस्तत्र रात्रिभोजनं कल्प्यते। इयमेवार्थापत्तिः।

नैयायिका अर्थापत्तेः पृथक्प्रमाणत्वं निराकुर्वन्तस्तस्या अनुमानान्तर्गतत्वमेवाभ्युपगच्छन्ति। अत्र अनुत्पद्यमानोऽर्थो व्याप्यस्तदुपपादकीभूतश्चार्थो व्यापकः, अतोऽनुपपद्यमानदर्शनेन उपपादकीभूतस्यार्थस्य यज्ज्ञानम्, तद्व्याप्यज्ञानेन व्यापकज्ञानत्वादनुमानमेव। अनुमानस्याकारोऽयम्—

देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वविशिष्टपीनत्वात्। एवमर्थापत्तेः सकलोऽपि विचारोऽनुमानेनैव गतार्थः। अतो न अर्थापत्तेः पृथक्प्रमाणत्वस्वीकारः।

एवं ज्ञानकरणाजन्यस्य अभावानुभवस्य यदसाधारणं करणं तदभावोऽनुपलब्धिर्वा प्रमाणमिति वेदान्तिन आहुः। परञ्च नैयायिकैरिन्द्रियसम्बद्धविशेषणताख्येन इन्द्रियसम्बद्धविशेष्यताख्येन वा सन्निकर्षेण प्रत्यक्षेणैवाभावस्यापि ग्रहणसम्भवे तदर्थानुपलब्धेः पृथक् प्रमाणत्वस्वीकारो नावश्यक इत्युच्यते। सम्भवस्यापि न प्रमाणान्तरत्वसम्भवोऽप्यविनाभावबलेनार्थप्रतिपादकत्वाद् अनुमानमेव। द्रोणपूरणक्षमस्याढकपूर्णक्षमत्वप्रतिपत्तिसम्भवः, सहस्रादिसंख्याविषयकस्य चैकद्वित्र्यादिसंख्याविषयत्वप्रतिपत्तिश्च कथमत्राविनाभावः? स्वल्पसमाहाररूपत्वात् प्रभूतस्य स्वल्पाभावे प्रभूतानुपपत्तेरिति।

ऐतिह्यमपि न मानान्तरं यद्यपि अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यं प्रमाणं कैश्चिदिष्टं, यथेह वटे यक्षः प्रतिवसतीति, तच्च यदवितथं तदाशब्देऽन्तर्भूतम्। यदि नाम प्रयोजनाभावादाप्तनिर्देशोऽत्र नास्ति नैतावतस्य शब्दरूपता निवर्तत इति। नाट्यशास्त्रप्रसिद्धसमयबलेन लोककृतसमयबलेन च पुरुषाभिप्रायविशेषमर्थविशेषञ्च प्रतिपादयन्ती चेष्टा प्रमाणमिष्यते, परञ्च सा आगमात्र भिद्यते, तल्लक्षणयोगित्वात्।

अशब्दात्मकत्वे न प्रमाणान्तरत्वे लिप्यक्षराणामपि प्रमाणान्तरत्वप्रसङ्गः, समानन्यायत्वात्। अविनाभावित्वेन प्रयत्नादिप्रतिपादकत्वे त्वनुमानत्वं चेष्टया द्रष्टव्यमिति।

न्यायदर्शने प्रमाणेषु प्रत्यक्षं प्रधानं प्रमाणम्, तद् द्विविधम्—निर्विकल्पकं सविकल्पकञ्चेति। तत्र निर्विकल्पकप्रत्यक्षे विषयोपस्थितेरिन्द्रियमन-आत्मनां

संसर्गतामात्रस्य चापेक्षा भवति। इदं वस्तु सङ्केतमात्रं भवति, अत्र सम्पृक्तानां वस्तूनां क्षणिकं संवेदनमेव जायते, इदं ज्ञानं वस्तुतो भवति प्रत्यक्षम्, तस्य 'अक्षं प्रति' इति व्युत्पत्तेः। इन्द्रियविषययोः संयोगेनैव प्रत्यक्षं भवति। निर्विकल्पकं यथार्थप्रत्यक्षमिति वक्तुं शक्यम्, तस्माद्याथार्थ्यं निर्विकल्पकप्रत्यक्ष एवास्ति। अत एव बौद्धदार्शनिको धर्मकीर्तिर्निर्विकल्पकप्रत्यक्षमेव प्रामाणिकमिति वक्ति।

सविकल्पकप्रत्यक्षं न पूर्णतयाऽपरोक्षं तत्र नाम जातिपूर्वकं स्मृत्यादिमाध्यमानां सहयोगस्यावश्यकत्वात्। निर्विकल्पकप्रत्यक्षमपि तत्र व्यापारो भवति, तथापि निर्विकल्पकस्य प्रत्यक्षस्योपयोगिता नास्ति व्यवहारे। तदुपयोगित्वदृशो ज्ञानस्य परिपक्वरूपत्वाच्च सविकल्पकज्ञानमेव न्यायानुसारि प्रामाणिकमित्युच्यते।

सम्प्रदायेऽस्मिन् लौकिकप्रत्यक्षं चाक्षुष-रासन-घ्राणज-स्पार्शन-श्रावण-मानसभेदेन षट्प्रकारकमस्ति। तत्र चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। एतन्मते अभावोऽपि प्रत्यक्षीक्रियते; परन्तु तत्प्रत्यक्षसापेक्षम्, यथा 'घटाभाववद्भूतलम्' अत्र घटप्रत्यक्षसापेक्षस्यैवाभावस्य प्रत्यक्षत्वात्, न निरपेक्षस्य। दर्शनेऽस्मिन्ननुमानोपमानयोरपि न केवलं सिद्धान्तदृष्ट्या, अपि तु व्यवहारदृष्ट्यापि विशिष्टमहत्त्वं दरीदृश्यते। शब्दप्रमाणमप्यन्यतमं स्थानं बिभर्ति। तस्मादेव न्यायशास्त्रे चतुर्णां प्रमाणानां तैश्च जायमानानां चतसृणां प्रमाणाभ्युपगमे औचित्यं तार्किकदिशा निरूपितम्।



# कालस्वरूपसमीक्षणम्

**डॉ. सदानन्दशुक्लः**
उपाचार्यः, ज्योतिषविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



विभुद्रव्येषु कालस्य प्राथम्येन परिगणनं तर्कसङ्ग्रहादिषु दृश्यते। 'कल भक्षणे विकलने वा' इत्यस्माद्धातोः घञि सति काल इति रूपस्य सिद्धिः। अत एव सूर्यसिद्धान्ते उक्तम्—

**लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः।**
**स द्विधा स्थूल-सूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते।।** (म.अ.श्लो. ७)

उक्तश्लोके स्पष्टरूपेण प्रतिपादितं यत् ''यत्किञ्च जगत्याञ्जगत्'' तत्सर्वं कालाधीनम्। यद्यपि अन्तशब्दोऽत्र कलयितृत्वेन भक्षकत्वेन संहारकत्वेन वा विद्यते, तथापि तत्र नास्य संहारकत्वे पर्यवसानम्, अपि तु उत्पादकत्वे पालकत्वे च पर्यवसानं भवति, तत्रैव अन्तकपदस्य स्वारस्यम्। तत्र अन्तकपददानात् चरमावस्थापन्नप्रतिपादने कालस्य गतिरिति तात्पर्यम्। अत एव कालपरिभाषानिरूपणे तर्कसङ्ग्रहादौ अतीतादिव्यवहारहेतुः काल इत्युक्त्या भूत-वर्तमान-भविष्येति सर्वकालसङ्केतः। व्याकरणशास्त्रेऽपि कालविषये भूत-वर्तमान-भविष्येति कालत्रयस्यैव सङ्केतो वर्तते। तत्र भूतकाले सामान्यभूत-परोक्षभूत-आसन्नभूत-हेतु-हेतुमद्भूत-पूर्णभूत-अपूर्णभूत-प्रभृतयोऽनेके भेदाः शब्दशास्त्रेषु विद्यन्ते। एवमेव अनद्यतनाद्यतनभेदेन भविष्यत्कालस्य भेदद्वयम्। यद्यपि वैचारिकदृष्ट्या वर्तमानस्य निरूपणं भवितुं नार्हति यतो हि कार्यस्य वर्तमाने सत्त्वेऽपि निर्वचनकाले तस्य भूतत्वात्, आसन्नभविष्ये भविष्यत्वात्, वर्तमानत्वं न तु सङ्घटते तथापि भवतु नाम वर्तमानस्य निर्वचनाभावः; किन्तु कार्यकालस्तु वर्तमानकाल एव। अतो न तस्य सत्ताभावः। अस्यां स्थितौ कार्यकाल एव वर्तमानकाल इति वर्तमानत्वनिर्वचने न क्षतिः। लौकिकप्रक्रियानिर्वहणाय तु 'रामः पचति' इत्यादिस्थलेषु फूत्कारादारभ्य चुल्युपरि धारणमारभ्य अधःसन्तापनपर्यन्तं वर्तमानस्य परिधिः। तत्र

अग्निप्राज्वलनकालाद् अधःसन्तापनपर्यन्तं 'देवदत्तः पचति' अहं पचामि, इत्येव प्रयोगो भवति। शब्दशास्त्रे तु व्यवहारमादाय सामीप्येऽपि वर्तमानस्य सत्ता स्वीक्रियते। अत एव महर्षिपाणिनिना वर्तमानसामीप्ये वर्तमानवद्वेति सूत्रितम्।

ज्यौतिषशास्त्रे मूर्त्तामूर्त्तभेदेन कालस्य रूपद्वयम्। स च लौकिकव्यवहार-प्रयोगार्हः। तत्र समयसूचकव्यवस्थाक्रमेण मूर्तकालस्य परिगणनं ते च प्राण-लव-निमेष-परिमाण-युगादयः। अमूर्तकालस्तु व्यवहाराऽतीतत्वान्न निर्वचन-सामर्थ्याधीनः। एष कालो बुद्धेः परः। अत एव अमूर्तकालस्य सूक्ष्मकाल इत्युक्त्या सूर्यसिद्धान्ते निर्वचनम्। तेन अमूर्तकालो ब्रह्मपरक एव तेन तस्य अबाधत्वम्, यतो हि ब्रह्मणोऽपि "द्वे वा ब्रह्मणो रूपं मूर्त्तञ्चामूर्त्तञ्चेति" बृहदारण्यके प्रपञ्चितम्। अत एव नानकानुयायिनः सिक्खधर्मावलम्बिनः "सत् श्री अकाल" इति 'त्रिकालाबाध्यत्वं सत्यत्वम्' इति सत्सत्तायाः कालाबाध्यत्वेन ग्रहणाद् ब्रह्मणः पुरुषस्य अबाध्यत्वमिति, नास्ति कालोऽन्तको यस्य स अकाल इत्यनेन सत्पदस्य ब्रह्मपदस्य च सार्थकतां समर्थयन्ति। अन्यरीत्या तु—"अकारो वासुदेवः स्याद्" इति कोषः। अकारो वासुदेवो विष्णुर्वा कालः, इत्थं ब्रह्म एव कालः। अत एव सनातनग्रन्थेऽपि महाकालपदेन ब्रह्मणः शिवस्य ग्रहणं भवति, स एव कालानामपि कालः। अत्र कालानामकाल इत्युक्त्या मूर्तकालानां कालः। यतो हि "यतो वा इमानि भूतानि जायन्ते यस्मिन् जातानि जीवन्ति, तद् विजिज्ञासस्व श्वेतकेतो" इति छान्दोग्ये वर्णनात् त्रिदेवस्य अन्तकपदेन ग्रहणात्। अत एव ब्रह्मसूत्रेऽपि 'अत्ता चराचरग्रहणात्' इति व्यासेन सूत्रितम्। तत्र चराचरान्तकत्वेन भक्षकत्वेन ब्रह्मणो महिमोपपादनम्। अनया रीत्या सर्वेषाम् अन्तकः काल इति सूर्यसिद्धान्तोक्तस्य ब्रह्मसूत्रस्य च लोकव्यवहारस्य सनातनधर्मग्रन्थस्य चालोचनाद् अयं कालो निर्विशेषब्रह्मवाचकः। मूर्तकालोऽपि सविशेषब्रह्मवाचकः। यतो हि—

**सर्वं खलु इदं ब्रह्म नेह नानाऽस्ति किञ्चन।**
**अनेकरूपरूपाय विष्णवे प्रभविष्णवे।।**

इत्यद्वैतवेदान्तदृष्ट्या ब्रह्मणो जगदुपादानकारणत्वात्, कृत्स्नप्रपञ्चस्य तद्रूपत्वात् मूर्तकालेनापि तस्यैव ग्रहणमत्र। इमां सरणीम् उररीकृत्यैव यमस्य अन्तकत्वेन ग्रहणम्। यस्मात् कारणात् संहारश्चरमपरिणाम इति सर्वेषाम् अन्तकः काल इत्यस्य व्याख्यावसरे सूचितमेव, अतो यमस्य अन्तकत्वेन संहारकारकत्वेन तेन कालेन सह अभेदादन्तकत्वव्यवहारः। अत एव सुग्रीवेणापि स्वभ्रातुर्बालेर्मुष्टिप्रहारेण

व्यथितेन ''बन्धु न होइ मोर यह काला'' इति वाक्ये काला इत्युक्त्या अन्तकत्वेन ग्रहणं कृतम्।

ऋक्संहितायां ''कालो विश्वाधारोऽपि स्वयमनाधारो नित्यश्चेति'' निरूपितम्। (द्वितीयाष्टकस्य तृतीयाध्याये)। अत्र सर्वं प्रति कालस्य आधारता, स्वं प्रति अनाधारतेति विविच्य व्यापकत्वं सर्वपरत्वम् अमूर्तत्वञ्चापादितम्। दृश्यते जगति आकाशस्य व्यापकत्वे, एकत्वे, अमूर्तत्वेऽपि घटाकाशमठाकाशमाध्यमेन भेद:। तत्र घटादीनां निर्माणं भवति न त्वाकाशस्य। किन्तु घटादीनां कार्याणामुत्पत्तौ घटाकाशमठाकाश इति व्यवह्रियत एव। एवमेव सूर्यादीनां ज्यौतिषचक्राणां ''ऋतञ्च सत्यञ्च'' इत्यादिवाक्यात् कल्पनायां सत्यां तदुत्पत्तौ त्रुट्यादिक्रमेण मूर्तकालत्वव्यवहार:।

निरुक्ते (४/२७) संवत्सर इत्यादिकं प्रदर्श्य ''स अजरमरणधर्माण'' इत्याद्युक्तम्। तत्र सर्वस्य उत्पत्तिविनाशशालित्वेऽपि कालस्य अजरममरणस्वरूपं स्वीकृत्य अमूर्तत्वव्यपदेश: कृत:। यतो हि मूर्तानाम् अजरममरणासम्भवात्। अथर्वसंहितानुसारेण काल: परमात्मरूपेण समुपस्थापित एकोनविंशकाण्डे षष्ठानुवाके अष्टमनवमसूक्तेषु इति सायणभाष्याभिप्रेतम्। (१.६.८.१) ब्रह्मण: कालाख्या स्वतन्त्रशक्ति: सा च ब्रह्मणो भिन्ना, शक्तिशक्तिमतोरभेदाद् इति भर्तृहरिसिद्धान्त उक्तसूक्तद्वयमेव मूलमित्यवगम्यते।

> तस्माद् ऋच: सामयजूंषि दीक्षा
> यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।
> संवत्सरश्च यजमानश्च लोका:
> सोमो यत्र पवते यत्र सूर्य:।।

इति मुण्डकोपनिषदि (२.१.६) निरूपणात्।

कालस्यास्य नियन्ता परमेश्वर एव बृहदारण्यके दर्शनात्। उपनिषन्मते कालस्य उत्पत्तिविनाशशक्तिशालित्वं पारतन्त्र्यञ्च स्पष्टम्। अस्यां स्थितौ अत्रास्य स्वरूपस्य सङ्केते कालस्यापरभेदस्य मूर्तस्य निरूपणं सङ्गच्छते। महाभाष्ये ''येन मूर्तीनामुपचयापचयाश्च लक्ष्यन्ते तं कालमाहु:'' इति २/२/५ सूत्रे प्रदर्शनाद् अखण्ड-अव्यक्त-कालस्य सङ्केत:। तत्र भेदव्यपदेशस्तु औपाधिक:। एवमेव शब्दविषये अखण्डवाक्यस्फोटस्यैव यथास्थितिर्वैयाकरणानुसारेण। तत्र वर्णपदादिक्रमस्तु शास्त्रप्रक्रियानिर्वाहाय औपाधिक एव। तथैव रात्र्यादिव्यवस्था तु तस्मिन् काले औपाधिकी एव। सूर्यक्रियारूपोपाधिवशात् तस्य कालस्य क्षण-दिन-मास-वर्षादिव्यवहारा:। वाक्यपदीयेऽपि—

उत्पत्तौ स्थितौ चापि विनाशे चापि तद्वताम्।
निमित्तकालमेवाहुर्विभक्ते नात्मना स्थितम्।।

इत्यत्र कालस्य सर्वत्र कारणत्वम्। कालमिति एकवचनोक्त्या एकत्वञ्च सूचितम्। स च सर्वव्यापकः कालः स्फोटापरनामधेयस्य शब्दात्मकस्य ब्रह्मणः स्वातन्त्र्यशक्तिरिति तेषां मतम्। अत एव वाक्यपदीये—

**अव्याहतकला यस्य कालशक्तिमुपाश्रिता।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः।।**

इत्यत्र ब्रह्मणः कलाशक्तिः कालशक्तिमाश्रित्य कलावान् भेदवान् इति सङ्गच्छते। अत एव मोक्षदशायां तत्त्वज्ञानेन भेदबुद्धिपर्यवसितेऽपि कालाख्यब्रह्मणः स्वातन्त्र्यशक्तितिरोहतिस्तस्याः पारमार्थिकत्वात् तन्निवर्तकत्वे सामार्थ्याभावात्। अस्यां स्थितौ द्वैतापत्तिस्तु नाशङ्कनीया। शक्तिशक्तिमतोरभेदात् लघुमञ्जूषायां लघुमञ्जूषाकारेण क्षणरूपकालस्य वस्तुभूतत्वं मुहूर्ताहोरात्रादीनां बुद्धिसमाहाररूपत्वं स्वीकृतम्। तत्र शब्दतन्मात्राद्वारेण क्षणस्य त्रिगुणात्मिकायाः प्रकृतेः परिणामत्वेन ग्रहणं लक्ष्यते, किन्तु उक्तव्याख्यानस्य भाष्यादिव्याख्यानविरुद्धत्वात् मूर्तशब्द-पर्यन्तानुधावनम्।

तत्र पुण्यराजहेलाराजयोर्व्याख्यानुसारेण कालो नाम ब्रह्मणः स्वातन्त्र्यशक्ति-रिति बोध्यम्। अन्येषां वाक्यपदीयव्याख्याकाराणां मतानुसारेण तु कार्याणां कारणगता शक्तिरेव कालपदवाच्या; किन्तु कार्याणां कारणानि प्रतिनियतानि विद्यन्ते लोकविरुद्धत्वात् कारणाभावे कार्योत्पत्तिर्न भवति। अस्यां स्थितावेकस्य कार्यस्य कारणसामग्रीसमवधाने उत्पत्तिदर्शनाद् अन्यस्य तदानीं स्वीयकारणाभावेनाभावात् कारणान्तरसत्तायामपि कालस्य नियमेनापेक्षादर्शनाद् अन्वयव्यतिरेकाभ्यां कालस्य कार्याणां सहकारिकारणत्वं विरुद्ध्यति। अनेन प्रकारेण कारणशक्तिभ्योऽन्यदेव कालतत्त्वमिति स्पष्टम्।

कस्मिंश्चित् मते आत्मा पुरुषो जीव एव कालः। अन्येषां मते देवतारूपः कालः। इतरेषां मते विग्रहवती महाप्रभावा देवता कालाख्यया स्वीकर्तव्या।

सेश्वरसांख्यमते क्षणात्मकः कालो वस्तुरूपः, अपरस्तु बुद्धिमात्र-परिकल्पितः। तत्र क्षणात्मककालस्यापि योगजत्वम्। न तु लौकिकप्रत्यक्षगम्यत्वम्। मानसोल्लाससांख्यमतानुसारेण तु मायायां ब्रह्मचैतन्यप्रतिबिम्बविशेषः कालः। अयमेव गुणानां क्षोभसम्पादकः।

निरीश्वरसांख्यमते तु कालतत्त्वं नास्ति; किन्तु उपाधिविशेषः। यथार्थेन प्रकृतिरेव कालशब्दवाच्या। जगतः प्रकृतिपरिणामात्। वैशेषिकमते कालस्य द्रव्यत्वं विभुत्वं नित्यत्वम् एकत्वम् उपाधिभेदेन नानात्वञ्च बोद्धव्यम्। तत्र कालस्य न प्रत्यक्षगम्यत्वम्। अनुमानगम्य एव कालः। स कालस्तु सर्वोत्पत्तिनिमित्तं जगदाधारश्च। एतत्परकमेव नैयायिकमतम्।

दीधितिकारमते उपाधिभिरवच्छिन्नः परमेश्वरः कालव्यवहारविषयः। परमेश्वरातिरिक्तः काल इति स्वीकारे प्रमाणाभावात्। किन्तु अन्ये नैयायिकाः कालस्य विषये पूर्वोक्तन्यायमतमेव स्वीकुर्वन्ति।

भाट्टमीमांसकमते कालस्य द्रव्यत्वं विभुत्वम् औपाधिकभेदवत्वञ्च। तत्र मानमेयोदयकारानुसारेण स कालः षडिन्द्रियग्राह्यः। शास्त्रदीपिकानुसारेण तु कालो न स्वातन्त्र्येण इन्द्रियैर्गृह्यते, अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपि इन्द्रियैर्गृह्यते, इति विशेषप्रतिपादनात् मधुसूदनमीमांसामतं पोषितम्। तत्र सर्वेन्द्रियग्राहकत्वे—"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति मानम्।

श्रीनिम्बार्कसम्प्रदायमते "प्राकृताप्राकृताभ्यां भिन्नोऽचेतनद्रव्यविशेषः कालः"। स च नित्यो विभुर्भूतभविष्यद्वर्तमानादि-व्यवहारासाधारणहेतुः, सृष्ट्यादिसहकारिकारणञ्च।

माध्वमते तु कालो द्रव्यविशेषः, उत्पत्तिविनाशयुक्तः। तत्र केचन माध्वमतावलम्बिनस्तु कालोपादानं न प्रकृतिः पूर्वपूर्वकाला एव उत्तरोत्तरकालोपादानम्। तन्नोचितम्। प्रलयकालेऽपि कालस्थितिदर्शनात्। अत एतन्मते कालः साक्षिवेद्यः शब्दादयस्तु बहिरिन्द्रियद्वारा वेद्याः।

अद्वैतवेदान्ते तु ब्रह्मणो व्यतिरिक्तस्य सर्वपदार्थस्य अपारमार्थिकत्वात् कालस्यापि न पारमार्थिकत्वम्। अविद्याकृतपरिणामविशेषः काल इति बोद्धव्यम्।

वल्लभसम्प्रदायानुसारेण तु ब्रह्मव्यतिरिक्तः कश्चन पदार्थो नास्ति। अतो ब्रह्मैव कालः। "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" इति गीताप्रमाणप्रमाणितत्वाद् ब्रह्मैव कालः। उपाधिभेदेन तस्य व्यवहारसम्पादकत्वात्।

गौणीयवैष्णवसिद्धान्तानुसारेण "सत्त्वादिगुणत्रयहीनं भूतवर्तमानादि-व्यवहारकारणं जडद्रव्यं कालः"। तस्य नित्यत्वे एकत्वेऽपि उपाधिभेदाद् व्यवहारविषयता।

शाक्तमते जीवनिष्ठायाः स्वाभाविकनित्यताया आच्छादने सति सा जन्ममरणादिविकारयोगात् सङ्कुचिता कालरूपतां प्रतिपद्यते। इत्थं कालस्य

जीवान्तर्गतत्वम्। जीवसम्बन्धाच्च बाह्यवस्तुषु कालव्यवहारः, न तु बाह्ये कश्चित् साक्षात्कालसम्बन्धः।

शैवागमान्तर्गतनारसिंह उपागमे शुद्धोऽशुद्धश्चेति द्विविधोऽध्वनो निर्देशः। तत्र अध्वपदेन तत्त्वावबोधः।

तत्र अशुद्धत्वान्तर्गतः कालोद्गम ईश्वराधिष्ठितमायातः। सर्वतः प्राक् कालोत्पत्तिः। कालादिपरिकलिता एव जीवा भोगभाजो भवन्ति। कर्मजनिते सुख-दुःखोपभोगादौ जीवानां प्रेरणैव कालस्य कृत्यम्। इत्थं नियतितः कालस्य भिन्नत्वम्। नियत्या स्वकर्मजनिते भोगे नियमनत्वात् स कालस्तु नित्यः, अव्यापकः, अनेकः, जडः, शुद्धाशुद्धादिभेदयुक्तः।

वीरशैवमतानुसारेण "प्रकृतेर्विकारविशेष एव कालः"। पाशुपतमते कालस्य उत्पत्तिसहितत्वं स्वीक्रियते। तस्य उपादानकारणं तु माया।

नकुलीशपाशुपतमते परमेश्वरस्यैव आदित्यगत्यादिवशात् कालव्यवहार-निर्वाहकत्वम्, परमेश्वरातिरिक्तः कश्चन अन्यः कालपदार्थो नास्तीति निष्कर्षः।

प्रत्यभिज्ञादर्शनमते तु "भावानामवभासनानवभासनात्मकक्रमः कालः" इति प्रतिपादनात् प्रकृतेर्विभूतिरेव कालः। पाञ्चरात्रमतानुसारेण—

कालस्य नियतेनापि सूक्ष्मः सर्वनियामकः।
उदेति प्रथमं शक्तेर्विष्णुसङ्कल्पसन्धितः।।
कालस्य पाचनं रूपं यत्तत्तु फलनात्मकम्।
उदेति नियतेः सोऽथ कालसङ्कल्पचोदितः।।

इत्युक्त्या कलनात्मककालस्य सूक्ष्मावस्था नियतिः, नियामकत्वरूपेणाव-स्थितिः कलनात्मकतेति बोध्यम्।

वैष्णवागममतेन "जीवतत्त्वस्यैव कालतत्त्वेन विपरिणमनम्"। द्वैतशाक्तमते परानन्दमुनिमतानुसारेण "आद्यन्तविरहितः कालो व्यापकः क्षणमासादि-परिच्छिन्नोऽपि घटादीनां परिच्छेदकः"।

प्रपञ्चसारानुसारेण परापरभेदेन कालस्य द्वैविध्यम्। तत्र उपाधिना विशिष्टं चिद्रूपं परः कालः। प्रकृतिपरिणामविशेषोऽनवच्छिन्नचिद्रूपमेव लवादिरूपो अपरः काल इति।

महाभारते कालपदेन ईश्वरस्य सृष्टेरनभिधायित्वेन च ग्रहणम्। पौराणिकमतेन परमात्मनश्चेष्टाविशेषः कालः। विष्णुपुराणानुसारेण—

अनादिर्भगवान् कालो नान्तोऽस्य द्विज उच्यते।
अव्युच्छिन्नतयैवैते सृष्टिस्थित्यन्तसंयमाः।।

इत्यादि-प्रदर्शनाद् विष्णुरेव कालरूपः प्रवाहरूपेणाविरतः। श्रीभागवतानुसारेण—

विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना।। (३.१०.२२)

एवं कालोऽप्यनुमितः सौक्ष्मे स्थौल्ये च सत्तमः।
संस्थानभुक्तयो भगवान् अव्यक्तो व्यक्तभूद्विभुः।। (३/११/३)

स्वकालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्।
स्वतो विशेषभुग्यस्तु स कालः परमो महान्।। (३/११/४)

उक्तश्लोकाभिस्वारस्येन सूक्ष्मस्थूलभेदेन कालस्य द्वैविध्यम्। तत्र सूर्यो यावता परमाणुदेशमभिक्रामति तावान् कालपरमाणुः। द्वादशराश्यात्मकं भुवनकोषातिक्रमणात्मकम् आवर्त्तिक्रमेण द्विपरार्धान्तपर्यवसायित्वं स्थूलम्।

योगवासिष्ठे कालस्य उत्पत्तिविनाशशालित्वाद् व्यावहारिकरूपस्यैव ग्रहणम्। सूतसंहितानुसारेण परमोऽपरमश्चेति द्विविधः कालः। तत्र शिवरूपो मायासम्बन्धरूपः पूरकः कालः। कल्पमन्वन्तरादिरूपेण विभाजने अपरपररूपेण परिणमति। सर्वे पदार्थाः काले लीयन्ते मायाकालावुभावपि शिवे लीयेते।

बौद्धमते कालस्य सत्ता न स्वीक्रियते। यतो हि तेषां मते सर्वस्य क्षणिकत्वात् शून्यत्वाद् विज्ञानरूपत्वाच्च। अतस्तेषां मते पूर्वापरकालव्यवहारस्तु संस्कारोत्पन्नविज्ञानविशेष एव।

जैनमतेन व्यवहारकालनिश्चयकालभेदेन कालस्य द्वैविध्यं स्वीक्रियते। तत्र समयघटिकारूपा स्थितिर्व्यवहारकालः। योऽसावनाद्यनिधनस्तथैवामूर्तो नित्यः समयादुपादानकारणभूतोऽपि समयादिविकल्परहितः कालाणुद्रव्यरूपः, स निश्चयकालः। इत्थं निश्चयकालोऽणुद्रव्यरूपो नित्यो मूर्तो निष्क्रियः स्थूलकालस्य उपादानकारणरूपः।

कामशास्त्रस्य जयमङ्गलानामिकायां कामसूत्रव्याख्यायां कालो नाम द्रव्यपदार्थो नित्य इति स्वीकृत्य कालस्य सूक्ष्मरूपस्य सङ्केतो लक्ष्यते। स एव पुनरवस्थाभेदाद् व्यवहारे परिणमति।

चार्वाकसिद्धान्तेऽपि—"स्वभावमेके कवयो वदन्ति कालं तथान्यः परिमुह्यमानम्।" इत्यत्र स्वभावपदेन कालस्य स्वीकारात् काले सर्वव्यवहार-पर्यवसानमिति तस्य मतम्। डल्हणाचार्यमतेन प्रवृत्तिः।

गतत्वमेव कालस्य। चरकसंहितायाम् अचेतनद्रव्यत्वे कालस्य सङ्ग्रहः।

इत्थं सर्वत्र शास्त्रेषु विभिन्नमतावलम्बिनो विभिन्नरूपेण कालस्य चर्चां कृतवन्तः। दैवज्ञास्तु एतासु कालचर्चासु उदासीना ग्रहनक्षत्रक्रियैव काल इति मन्यन्ते। तत्रापि—

> सृष्ट्वा भचक्रं कमलोद्भवेन ग्रहैः सहैस्तद्भगणादिसंस्थैः।
> शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे।।
> ततो पराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि।
> तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतरात्मवर्त्मसु।।
>
> (सि.शि.म. १३-१४ श्लो.)

इति प्रामाण्येन प्राथम्येन सूर्यं विना कालनिरूपणासम्भवात् सूर्यगतिमादायैव कालचर्चा व्यवहारे प्रचलिता।

> कालः सृजति भूतानि कालः संहरते प्रजाः।
> कालः सुप्तेषु जागर्ति तस्मात्कालं विचिन्तयेत्।।

सर्वे चेतना अचेतनाश्च काले भवन्ति नश्यन्ति च। अस्यां स्थितौ कस्मिन्काले किं कर्तव्यं किं न कर्तव्यमिति विचारसरण्यां वेदाङ्गेषु ज्यौतिषशास्त्रस्य चक्षुःस्थाने ग्रहणाद् यतो हि वेदस्य मुख्यकर्म यज्ञोपपादकत्वम्। यज्ञेन पर्जन्यलाभः पर्जन्यात् सर्वेषां प्राणिनाम् अन्नलाभः। इत्थं कृत्स्नप्रपञ्चस्य संवाहनाय यज्ञस्य सापेक्षत्वे तस्य यज्ञस्य कालविशेषे सम्पादनात् कालस्य च भचक्रदिग्-गतिज्ञानपूर्वकं विभिन्न-विभिन्न-राशौ विभिन्न-विभिन्नस्थाने विभिन्न-विभिन्न-जीवानामुपरि परिणतप्रभावाणां तत्क्रमेण यावत्प्रपञ्चस्थितौ भासमानप्रभावाणां ज्ञानमपेक्षते तदङ्गीकृत्यैव कृतं शास्त्रं ज्यौतिषशास्त्रम्, अतोऽस्मिन् शास्त्रे स्थूलसूक्ष्मक्रमेण कालगतेः प्रत्यक्षनिरूपणपूर्वकतत्परिणामनिरूपणं विद्यते, तत्र यथा दार्शनिकानां मध्ये बालाग्रशतभागक्रमेण चेतनतत्त्वनिरूपणे एवं परमाणुविषये जालान्तरसूर्यरश्मिषु दृश्यमानकणस्य यत् तृतीयो भागः षडंशभागो वा स परमाणुः। एवमेव—

"योऽक्ष्णोर्निमेषस्य खरामभागस्तत्परस्तच्छतभाग उक्ता त्रुटिः" (शिरोमणौ कालमानाध्याये) इति ज्यौतिषशास्त्रे त्रुटिकालेऽपि गणनद्वारा सूक्ष्मकालनिरूपणं यद्यपि भौतिकप्रसाधनद्वारा योगसामर्थ्येन वा, इदानीं तेषां सूक्ष्मकालानामपि दर्शनं कर्तुं शक्यते, तथापि पारमार्थिकदृष्ट्या कालस्य दर्शनं परिकल्पनं वा भवितुं नार्हति स एव कालः सूक्ष्मकालः। अयमेव अमूर्तकालः।

स्थूलकालो मूर्तकालो वा कालस्य सवंत्सर आत्मा इति सिद्धान्तमादाय संवत्सरे उत्तरायणं दक्षिणायनं पुनः षडर्तूनां विभाग एकस्मिन् ऋतौ द्विमासग्रहणम् एकस्मिन् मासे त्रिंशद्दिनपरिकल्पनं कृष्णशुक्लक्रमेण पक्षद्वयपरिकल्पनम्, एकस्मिन् दिवसे षष्टिघटिकापरिकल्पनम्। एकस्यां घटिकायां षष्टिकलानां परिकल्पनम्, एकस्मिन् पले षष्टिविकलानां परिकल्पनम् एकस्यां विकलायां षष्टिप्रतिविकलानां परिकल्पनम् इत्यादि-स्थूलकालक्रमः। तदेव इदानीन्तना विद्वांसः सेकेण्ड-मिनट-घण्टाक्रमेण चर्तुर्विंशतिघण्टात्मकं दिनरात्रिमानं स्वीकृत्य सर्वाणि कार्याणि कालक्रमानुसारेण कुर्वन्ति। तत्र ज्यौतिषशास्त्रे नाक्षत्रकालज्ञानाय स्टैण्डर्डपदभाक् काले मध्यमान्तरसंस्कारबलेन स्थानीयमध्यमसमयो भवति (एल.एम.टी.)। स एव कालः साम्पातिककाल इदानीं सिडिरियलटाइम-पदेन कथ्यते। यस्माद् एतेषां कालानां निर्णयः सूर्याधीनः, अतस्तां सूर्यगतिमवलम्ब्य एव सर्वे विचारा दैवज्ञानां पाश्चात्त्यविचारकाणाञ्च प्रचलन्ति। तत्र यस्मात् सूर्योऽनुदिनं मध्याह्ने द्वादशवादने नियतरूपेण याम्योत्तरलंघनं करोति, अन्ये ग्रहास्तु स्वस्वोदयकालात् तद्ग्रहाणाम् अस्तकालपर्यन्तं यन्मानं तस्मिन् माने उदयकालिकमानस्य ऋणं कृत्वा यन्मानं तत्तु तद्ग्रहस्य तद्दिनमानम्, तस्मिन् दिनमानस्यार्धे उदयकालिकमानस्य योगस्तद्ग्रहस्य याम्योत्तरलंघनकालः सिद्ध्यति। तत्रापि शुक्रकृते अनेन नियमेन कार्यं न प्रचलति, तत्र अन्येऽपि संस्कारा अपेक्ष्यन्ते।

इत्थं ज्यौतिषशास्त्रनियमेन भिन्नभिन्नाचार्यद्वारा भिन्नभिन्नस्थानतो भिन्न-भिन्नप्रक्रियामादाय निर्णीतः स्थूलकालक्रमनियमः।

ज्यौतिषशास्त्रमर्मज्ञानां सर्वेषां ग्रहाणां काले काले कः प्रभावो विभिन्नकालेषु उत्पन्नेषु जनेषु निपतीति ज्यौतिषशास्त्रीयकालज्ञानमपेक्षितम्। न केवलं एतावन्मात्रमेव, अपि तु कदा किं कर्तव्यं किन्न, निषिद्धकाले कृतकार्यस्य दोषं परिहृत्य सम्यग् फललाभाय कदा किं कर्तव्यम्, एतत् सर्वं ज्यौतिषशास्त्रस्य कालशास्त्रस्य परिधौ समायाति, न केवलं चेतनानां कृते, अचेतनेष्वपि पदार्थेषु ग्रहाणां कालप्रभावो भवत्येव। अतः कस्य रत्नस्य धारणेन कदा किं भवतीति

अचेतनेष्वपि कालप्रभावं समर्थयन्त्याचार्याः। जलवायुज्ञानं, कालज्ञानं, वृष्टिज्ञानं, सस्यज्ञानं, सौजन्यज्ञानं, दौर्हृद्यज्ञानमिति। ऐहिकसम्पत्तिविपत्तिव्यवस्था, व्यवस्थापनपूर्वकं ब्रह्मसायुज्यज्ञानपर्यन्तं ज्यौतिषशास्त्रस्य कालमर्मज्ञा अनुधावन्ति। एतज्ज्ञानमादायैव आधुनिकज्यौतिषशास्त्रमर्मज्ञा वेधशालामाध्यमेन नक्षत्र-ग्रहादिकानां गतिस्थितिज्ञानं प्रत्यक्षं कृत्वा तस्य कालस्य गतेश्च सूक्ष्मातिसूक्ष्मरूपं विचारं दत्तवन्तः, तथापि आधुनिकैर्वीक्षणयन्त्रादिसाहाय्येन सौलभ्यं समाहितम्। किन्तु तावन्मात्रेणैवास्य ज्यौतिषशास्त्रीयकालज्ञानस्य समाप्तिर्न भवति, अतः साम्प्रतिकानां भाविनाञ्च ज्यौतिषमर्मज्ञानां कर्तव्यमिदं यद् अस्य कालस्य अवशिष्टमपि यद् रूपं प्रभावश्च तत्सर्वं सर्वेषां दृष्टिपथानयने सप्रयासा भवेयुरिति।



# मानवजीवने पौरोहित्यस्य प्रभावः

**डॉ. रामराज-उपाध्यायः**
प्रवक्ता, पौरोहित्य-विभागस्य
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे
नवदेहली



बहुविश्रुतास्ति पौरोहित्यस्यातिप्राचीनतमा शब्दावली। प्राचीनैतिह्य-पुस्तकेष्वपि प्रकाशितास्तीयं शब्दावली। न केवलमेतावता, अपि तु सर्वतः प्राचीनोऽस्ति ऋग्वेदः। ऋग्वेदस्यादिमे मन्त्रे प्राप्यते विषयेऽस्मिन् यथा—

"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं, होतारं रत्नधातमम्।"

पुरोहितस्याधीतविषयस्य शास्त्रस्य वा नामास्ति पौरोहित्यम्। अतीव-सुष्ठुतमं व्याख्यायते—पुरः अग्रे हितं कल्याणं करोति सः पुरोहितः। सः पुरोहितः कल्याणार्थं यस्याध्ययनं करोति, तस्यैव नामास्ति पौरोहित्यशास्त्रम्। शिष्यते अनेनेति शास्त्रमिति गृहीतव्युत्पत्तिके शास्त्रशब्दे समास्ते "शासु अनुशिष्टौ" इति पाणिनीयो धातुः। अनुशिष्टनञ्च इतस्ततो व्यामोहेन सीमितविचारशक्तित्वेन च हितकर्तव्यतानिर्धारकशून्यशक्तिकव्यक्तेर्हितसाधननिर्णय-तत्प्रवर्तनानुकूलतापादको निग्रहानुग्रहशक्तिसम्पन्नो नीतिगर्भो वागादीन्द्रियव्यापारो निग्रहानुग्रहशक्तिसम्पन्नत्वं च शास्त्रस्य वेदमूलकत्वे अतीन्द्रियतत्त्वदर्शितपःसिद्धमहर्षिवचनत्व एव भवति। अत एव मीमांसोपबृंहितं धर्मशास्त्रेण निर्णीतं कर्मानुष्ठानम्। तस्मादेव च—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
स जीवन् सुखमाप्नोति परत्र च परां गतिम्[1]।।

इति फलमुद्घोषयति भारतीया संस्कृतिः, तद्विपरीताचरणे च—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्[2]।।

---

१. मनु. २/९; २. गीता-१६/१३।

इत्यनिष्टं बोधयन्ती सर्वानपि मानवानभिधत्ते—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि[१] ।। इति।

एवञ्च शास्त्रनिर्देशः सर्वथा सर्वदा च हितावह इति सिद्ध्यति।

मानवः सुखप्राप्तये शान्तये च निरन्तरं प्रयतते। स हि अवनति-फलकादैहिकादामुष्मिकाद्वा नरकात्[२] सर्वदैव दूरे स्थातुं कामयते। अत एव सः सुखशान्त्याश्रयं स्वर्गं सदा कामयते।

सुखशान्त्योः सम्मिश्रणमानन्दः। स च प्रतिव्यक्ति भिन्नोऽपि सर्वसाधारणतया मनुष्यमात्रेणाभिज्ञातोऽभिलषितश्च।

युवा स्यात्साधुर्युवाध्यापकः आशिष्ठो हठिष्ठो बलिष्ठः।
तस्येयं पृथिवी सर्वा वित्तश्च पूर्णः स्यात्स एको मानुष आनन्दः[३] ।।

अत्र षट् पदार्था मानुषे आनन्दे परिचायिता भवन्ति। ते च—

१. स्वास्थ्यम्, २. शिक्षा, ३. धैर्यम्, ४. बलम्, ५. सम्पत्तिः, ६. भोग इति।

एतेषाम् अभिलाषो मानवस्य स्वाभाविकः। मनुष्या इव पशुपक्ष्यादयोऽप्यानन्दं कामयन्ते। सन्ति तेषां सविधेऽप्यानन्दानुभवसाधनानीन्द्रियाणि। परं तेषा-मभ्युपगमोपायानामस्त्यभावः। पश्वादयो ह्यासन्नेष्वेव पदार्थेषु रमन्ते। आनन्द-प्राप्तिसमुपायिककर्मणां कृते मानवीयगुणानामेवास्त्यावश्यकता। अत एव ते शास्त्रबोधितेषु कर्मसु नाधिक्रियन्ते[४]। मनुष्यस्य विशिष्टगुणोऽस्ति ज्ञानम्। अत एव भगवता यास्केन मनुष्यनामनिर्वचनं मत्वा कर्माणि सीव्यन्ति (नि. ३।६) इति कुर्वता ज्ञानपूर्वकर्मानुष्ठातृत्वं मनुष्ये व्यवस्थापितम्। पाणिनिनापि संस्कृत-वाङ्मयस्य प्रयोगमनुलक्ष्य सविशेषज्ञानवत्त्वादेव मनुष्याणां सङ्घे समाजशब्दो व्युत्पादितः। मनुष्यातिरिक्तानां सङ्घस्तु "समज"रूपेण निर्व्यूढः[५]

---

१. गीता-१६/२४।
२. नरकं न्यरकं नीचैर्गमनम्। नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा।
(निरुक्ते-१/१२, पृ. ५४)
३. तै.आ. ८/८।
४. ननु तिर्यञ्चोऽपि न किञ्चित्कामयन्ते...........। (शां.भा. ६/१/२)
५. अमरकोषे—पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्। (२/५/४२)

(पा. ३/३/६९)। मनुष्याणां समूहः समाजः। प्रत्येकं च मनुष्यः सामाजिकः प्राणी। कोऽपि व्यावहारिको मनुजः समाजात्पृथगात्मानं स्थापयितुं नेच्छति; अपि तु समाजेन सह प्रवृद्धं सम्पर्कम् उचितं हितकारकं च मनुते। अधिकानां परिचयेन तेषामात्मीयभावनया च सह सविशेषमानन्दमनुभवति। यदा हि मानवः कमपि विशेषमपराधमनुतिष्ठति, तदा शासनाधिकारिणस्तं कारागार(जेल)दण्डेन यातयन्ति। तस्यायमभिप्रायो यत् सामाजिकस्य मानवस्य समाजाद् बलाद्वि-प्रयोगकरणम्, अपराधस्य शब्दान्तरेण व्याख्या सामाजिकसीम्न उल्लङ्घनमस्ति। यथा हि—सामाजिकसीमा प्रत्यक्षतोऽनुभूयते, तथैव विश्वोत्पादयितुः परमेशितुर्भगवतः प्रकृतेर्जीवस्य च नियामिका काचन व्यवस्था अस्ति।

समष्टिविकासप्रक्रियायां पौरोहित्यस्य योगदानं बहुविधं श्रूयते। परञ्चास्य विशिष्टरूपेण श्रूयते कर्मकाण्डीयविद्या। कर्मकाण्डशब्दावल्यां कर्मणः काण्डस्य च पृथक्-पृथग्भूतमवलोकनमत्र कुर्मः।

कर्म—क्रियत इति विग्रहे भावे कर्मणि चार्थे "सर्वधातुभ्यो मनिन्" इत्युणादि(४/१४५)सूत्रेण मनिन्प्रत्यये कृते कर्मशब्दो निष्पद्यते। कर्मशब्दोऽयं विभिन्नदृष्ट्या नानाविधार्थकः।

"कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्परा" (३/२/१५) इत्यमर-कोशानुसारेण कर्मशब्दः क्रियाशब्दश्च अनर्थान्तरवचनः।

वैयाकरणदृष्ट्या कर्मत्वञ्च परसमवेतधात्वर्थजन्यफलशालित्वं नाम। यत् क्रियते तत् कर्म इति प्रसिद्धेः। करोतेर्निखिलक्रियावाचकत्वात् कर्तुर्व्यापारैर्यत् साध्यते, तत् कर्म नाम। अत एव क्रियाव्याप्यं कर्म उच्यते। तत् कर्म चतुर्विधम्—

१. निर्वर्त्यम्, यथा—घटं करोति, पुत्रं प्रसूते।

२. विकार्यम्, तदपि द्विविधम्—

(क) प्रकृतेरुच्छेदकम्, यथा—काष्ठं भस्म करोति।

(ख) गुणान्तराधायकम्, यथा—सुवर्णं कुण्डलं करोति।

३. प्राप्यम्, यथा—ग्रामं गच्छति, चन्द्रं पश्यति।

४. अनीप्सितम्, यथा—पापं त्यजति।

न्यायवैशेषिकदृष्ट्या च कर्म द्रव्यगुणकर्मसामान्यविशेषसमवायाभावेति सप्तसु पदार्थेषु तृतीयः पदार्थः। तच्च तत्र उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनेति भेदैः पञ्चविधम्।

अन्यत्र सात्त्विक-राजस-तामस-भेदेन त्रिविधम्, याग-हिंसादि च कर्म उच्यते। ज्योतिर्विद्दृष्ट्या लग्नाद् दशमं स्थानं दशमं लग्नं कर्म कथ्यते। वेदे, वेदस्य प्रायोगिकरूपे कर्मकाण्डेऽत्र प्रसङ्गे नित्य-नैमित्तिक-काम्य-प्रायश्चित्त-निषिद्धभेदात् पञ्चविधम्। प्रायश्चित्तस्य च नैमित्तिकेऽन्तर्भावाच्चतुर्विधमेव प्रायः कर्म।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः[१]।

इत्यस्य भाष्ये अग्निहोत्रादीनि कर्माणीति प्रतिपादितत्वात्। अथ च कर्मपदेन ऋग्वेदादौ (१/३१/८,१/१७३/९६) बहूनां मन्त्राणां भाष्यकारैर्यज्ञादीनां लोकपरलोकाभ्युदयकारका लौकिककार्याणां मन्त्रब्राह्मणात्मकवेदतन्मूलकशास्त्रेषु प्रतिपादितानां विभिन्नधार्मिकव्यापाराणाम् अदृष्टसाधकानां निर्देशात् तान्येव तत्त्वान्यत्र कर्मपदवाच्यानि कर्मपदेन गृहीतानि सन्ति। कर्मशब्दस्य व्याख्यानन्तरं काण्डशब्दो व्याख्यायते—

काण्डम्—कनतीति विग्रहे कनी दीप्तौ। कनी [२]दीप्तिकान्तिगतिषु, कन्-धातोः 'अमन्ताड्डः' सूत्रेण डप्रत्ययेऽनुबन्धलोपे 'क्वादिभ्यः कित्' इति सूत्रेण कित्संज्ञायाम् "अनुनासिकस्य क्विझलोः क्ङ्" इति अनुनासिकान्तस्याङ्गस्य कन् इत्यस्य उपधाया दीर्घे, अनुस्वारपररूपादिकार्ये काण्डमिति शब्दो निष्पद्यते।

'काण्डो स्त्री दण्डबाणार्णववर्गावसरवारिषु' इत्यमरकोषानुसारेण तथा शरवृक्षः, अर्वा, कुत्सितः, वर्गः (वर्गश्च एकजातीयसमवायः), यथाह भागवते—क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वहः। काण्डर्षिः, काण्डस्य वेदविभागस्य ऋषिः। यद्वा काण्डेषु, एकजातीयक्रियादिसमवायेषु ऋषिर्विचारक इति शब्दकल्पद्रुमोक्त्यनुसारेण,

"काण्डं चावसरे चाणो नाले स्कन्धे च शाखिनाम्"।

इति धरणिकोशानुसारेण च काण्डशब्दो ह्यनेकार्थः। तेष्वनेकार्थेषु अत्र एकजातीयक्रियासमवायो वर्गः (एकजातीयसमवायो वा) अर्थो गृहीतोऽस्ति।

अतः कर्मकाण्डस्य व्याख्यानन्तरं मानवानां विभिन्नक्षेत्रेषु पौरोहित्यस्य प्रभावोऽत्र निगदितोऽस्ति।

---

१. यजु. ४०/२; २. सि.कौ., पृ. ४३४।

**१. सामाजिकजीवने पौरोहित्यस्य प्रभावः**

पौरोहित्ये समाजविषये प्रभूतरूपेण व्यवस्था प्राप्यते। सर्वासां व्यवस्थानां वर्णनमत्रास्त्यसम्भवम्। परञ्च पुष्टये स्वल्परूपेण व्यवस्थाऽत्र प्रदत्ता। सर्वे सम्यक्तया जानन्ति यत् पौरोहित्यस्यारम्भे सङ्कल्पो भवति। केचन जना वदन्ति सङ्कल्पस्यावश्यकता नास्ति; परन्तु पौरोहित्यानुसारेण सङ्कल्प आवश्यकोऽस्ति। यतो हि सत्यमेवोक्तम्—

सङ्कल्प्य च तथा कुर्यात् स्नानदानव्रतादिकम्।
अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि[1]।।

कृतं कार्यं निष्फलं न भवेदेतदर्थं सङ्कल्पस्य व्यवस्था क्रियते। सङ्कल्पे "सपुत्रस्त्रीबान्धवस्य सकुटुम्बस्य, सपरिवारस्य" संयोजनं प्रायो भवति। अनेन पारस्परिकसम्बन्धानां मध्ये दृढीकरणं भवति। पौरोहित्यप्रक्रियायां सर्वत्र पुण्याहवाचनमावश्यकम्। तत्राभिषेकस्यायोजनं दीयते। तत्र प्रत्यक्षरूपेण समुदितमस्ति यत् "सकुटुम्बं यजमानम् अभिषिञ्चेयु:"[2]। तत्र सकुटुम्बस्यार्थ: तत्रोपस्थितानां जनानामुपरि जलाभिषेक: करणीय:। अभिषेकेण, शरीरोपरि जलकणपातेन आयुरारोग्यादिप्राप्तिर्भवति, यतो हि तज्जलं मन्त्रैरभिषिक्तं भवति। प्रतीकरूपेण किञ्चित् उदाहरणमत्र मया प्रस्तुतम्। पौरोहित्यस्योद्देश्यमस्ति सर्वत्र सर्वदा सर्वेषां जनानां कल्याणं भूयात्। व्रतादीनां समाप्त्यवसरे निर्दिश्यते— सकुटुम्बो यजमानो भुञ्जीत। सर्वविधपौरोहित्यस्यायोजने सर्वेषामावाहनं निमन्त्रणञ्चेदं सूचयति यद् मानवानां सामाजिकजीवने पौरोहित्यस्य महान् प्रभावो विद्यते।

**२. आर्थिकजीवने पौरोहित्यस्य प्रभावः**

पुरुषार्थचतुष्टयस्य मध्ये द्वितीयं स्थानमस्त्यर्थस्य। सर्वेषु कालेष्वर्थोपयोगिताया विषये किञ्चिल्लेखनस्यावश्यकता एव नास्ति।

अस्तु, सर्वे जानन्ति यद् मानव: केन प्रकारेणार्थोपर्याधारितोऽस्ति। अर्थप्राप्तये पौरोहित्ये विधानसागराणां वर्णनं प्राप्यते। श्रीसूक्त-लक्ष्मीसूक्त-कनकधारास्तोत्रसहितमहालक्ष्म्याद्यनुष्ठानविधानं विद्यते। न केवलमेवमेव अपितु दरिद्रतादीनां निस्सारणार्थमपि स्तुति: क्रियते।

---

१. आचारेन्दु; मार्कण्डेय-पु.।
२. पुण्याहवाचनप्रयोगे, अभिषेकप्रकरणे।

क्षुत्पिपासामलां ज्येष्ठाम् अलक्ष्मीं नाशयाम्यहम्।
अभूतिम् असमृद्धिञ्च सर्वान्निर्णुद मे गृहात्[१]॥

सर्वेषामलक्ष्म्यादिदुर्वृत्तानां निवारणार्थमप्यस्त्ययमनुष्ठानविशेषः। सर्वस्मिन् पूजने धनधान्यसुखप्राप्तिविधानं प्राप्यते।

**३. राष्ट्रियविकासे पौरोहित्यस्य प्रभावः**

"वयं राष्ट्रे जागृयाम पुरोहिताः" इत्युक्तिद्वारा राष्ट्रियविकासप्रक्रियायां पौरोहित्यस्य योगदानमनुभूयते। राष्ट्रं यदि संरक्षितमस्ति तर्हि तस्मिन् राष्ट्रे व्याप्ता जनाः संरक्षितास्सन्ति। राष्ट्रस्य विकासो भवति तदा एतदेव सत्यं यत् तस्मिन् राष्ट्रे व्याप्ता जना विकसितास्सन्ति। राष्ट्रियविकासार्थं पौरोहित्यस्य परिभाषा सम्यक्तया सत्यापयति यत् "पुरः अग्रे हितं कल्याणं करोति"। "परस्परं भावयन्तः" इत्युक्त्यनुसारेण पारस्परिकसद्भावनाया विकासोऽस्त्यावश्यकः। यस्मिन् राष्ट्रे कल्याणभावनाया अभ्युदयः स्यात्, तस्मिन् राष्ट्रे विकसितजनानां का कथा? अस्माकं राष्ट्रे अप्यस्तीयं समस्या। कार्याणां मध्ये असहयोगस्य वृत्तिरस्माकं राष्ट्रे पुरा न आसीत्। तदानीमस्माकं राष्ट्रं विश्वगुर्वासीत्। तर्हि परस्परसहयोगि-वृत्तीनामुत्पत्त्यर्थं पौरोहित्यस्यास्ति महत्त्वपूर्णभूमिका, याऽस्ति राष्ट्रियविकासस्य धुरिः।

**४. भ्रष्टाचारादिनिवारणे पौरोहित्यस्य प्रभावः**

"यथा करिष्यसि तथा प्राप्स्यसि" (जैसी करनी वैसी भरनी) सत्यमस्तीयं विचारधारा। पौरोहित्ये स्पष्टरूपेणास्ति व्यवस्था यत् सत्यमार्गानुगामिनो भवेयुः।

यद्यसद्विचाराणामागमनं भविष्यति, तर्हि दुःखं भविष्यति। चार्वाक-दर्शनमतानुसारेण "यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्", परञ्चात्र शास्त्रे प्राप्यते—"अन्यायोपार्जितं वित्तं दशवर्षेण तिष्ठति"। "न वित्तेन तर्पणीयो मनुष्यः"। केन प्रकारेण भ्रष्टाचारादीनां निवारणं कर्तुं शक्यते। यावत् मानसिकविचाराणां परिवर्तनं न भविष्यति, तावद् भ्रष्टाचारादीनां निवारणं न भवितुं शक्नोति। देवपूजनप्रयोगे भ्रष्टाचारादिविषये ग्लानिर्भवति। तिलकधारणं कृत्वा धौतवस्त्रं धृत्वा कोऽपि दुराचारस्यावलोकने करणे च कदापि सन्नद्धो न भविष्यति। अर्थात् शनैः शनैर्मानसिकविचारप्रक्रियायां परावर्तनविधिद्वारा भ्रष्टाचारानाचारपापाचारादिदोषाणां निवृत्तिर्भवितुं शक्नोति पौरोहित्यमाध्यमेन।

---

१. श्रीसूक्तम्—ऋग्वेदपरिशिष्टे।

**५. स्वास्थ्यदृष्ट्या पर्यावरणदृष्ट्या च पौरोहित्यस्य प्रभावः**

"शरीरमाद्यं खलु धर्मसाधनम्" धर्मसाधनस्याद्यसाधनमस्ति शरीरम्। स्वास्थ्यं नास्ति चेत् किमपि नास्ति। एतदर्थं हि सर्वे जनाः सर्वं त्यक्त्वा शरीरस्य रक्षां कुर्वन्ति। स्वस्थताप्राप्तये पौरोहित्यस्य योगदानमस्त्यविस्मरणीयम्। यथा सर्वेषां गृहे हवनं भवेत्। हवनेन किम्? हवनेन प्रत्यक्षलाभो भवति पर्यावरणस्य शुद्धिः। अप्रत्यक्षरूपेणापि लाभोऽस्ति। परञ्चात्र प्रत्यक्षलाभस्य दर्शनं वयं कुर्मः। पर्यावरणस्य शुद्धिर्भविष्यति चेत् संक्रमणकारका नंक्ष्यन्ति। इदानीं पर्यावरणस्य समस्या महती समस्याऽस्ति। यतो हि अधिकाधिकसमस्यानामुत्पत्तिः पर्यावरणेनैव जायते। यथा—जनेषु रुग्णग्रस्तता, कृषिकार्येषु वर्षाधिक्यमल्पता च, जलवाय्वादीनां कालपरिवर्तनम्, सङ्क्रमणकारकतत्त्वानामुत्पत्तिः, मानसिक-विकासावरोधादीनामुत्पत्तिः, यतो हि एतादृशीनां समस्यानां समाधानमपि पौरोहित्यपार्श्वे अस्ति। पौरोहित्ये उपवासादिव्यवस्थाविषये जानन्ति एव सर्वे। तेन प्रत्यक्षलाभरूपेण शारीरिकस्वास्थ्यं प्राप्यते। महामृत्युञ्जयाद्यनुष्ठानानां महत्त्वं नास्त्यविदितम्। शारीरिकरूपेण विषमसङ्कटापन्नस्थितिषु अस्यानुष्ठानं महच्चमत्कारकारकं भवति। एतादृशबह्वनुष्ठानादिविषयैः परिपूरितमस्ति पौरोहित्यम्।

**६. लक्ष्यप्राप्तये पौरोहित्यस्य योगदानम्**

सर्वविधलक्ष्यादीनां प्राप्तये पौरोहित्यस्यावदानं श्रेयस्करमस्ति। लक्ष्यं द्विधा भवति—इहलौकिकं पारलौकिकञ्च। पारलौकिकलक्ष्यमस्ति मोक्षस्य प्राप्तिः। मोक्षस्य प्राप्तिविषये पौरोहित्यस्य योगदानसम्बन्धे का वार्ता? इह लोके लक्ष्यादीनां प्राप्तये पौरोहित्यस्य महत्त्वमनुकरणीयमस्ति। यथा यदि लक्ष्यमस्ति विद्याप्राप्तिस्तर्हि विद्याप्रतिपद्व्रताचरणं कुर्वन्तु। यदि लक्ष्यमस्ति धनोपार्जनं तर्हि धनप्राप्तिकारकाद्यनुष्ठानानां प्रतिपादनं कुर्वन्तु। लक्ष्यमस्त्युच्चपदस्य प्राप्तिश्चेत् सकर्मकदेवादीनां पूजनं कुर्वन्तु। एवं प्रतीयते यदनुष्ठानाद्यनन्तरं लक्ष्यप्राप्तिः सहजा भवति। अस्य कारणमस्ति मनसि प्रौढता। ये देवाः पूजितास्तेऽवश्यमेव सहायका भविष्यन्ति।

**७. अवृत्तिदोष(बेरोजगारी)परिहारार्थं पौरोहित्यस्यावदानम्**

अवृत्तिदोषसमस्याग्रस्तमस्तीदानीमस्माकं राष्ट्रम्। प्राप्तशिक्षा युवानो बाहुल्येन वृत्तिहीनास्सन्ति। परञ्चास्मिन्क्षेत्रे पौरोहित्यस्यावदानमस्त्यतीव-महत्त्वपूर्णम्। यतो हि कर्मकाण्डं कर्म प्रति संसूचयति। यद्यवृत्तिदोषस्य निवारणं

भविष्यति तु कर्मणा एव। "नान्यः पन्था विद्यतेऽयनाय" इत्युक्त्यनुसारेण पौरोहित्यस्य माध्यमेन जनानां मनसि प्रौढता जाता। समस्यानिवारणे मनसि प्रौढतास्ति अत्यावश्यकी।

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः"[१]।

मनसि प्रौढताप्राप्त्यनन्तरं हतोत्साहापहरणं भवति। कर्म प्रति रुचिः प्राप्यते। यथा—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन"[२]।

यतो ह्यधिकारोऽस्ति भवतः कर्मणि। फलप्राप्तिविषये मा चिन्तयन्तु। केवलमेवमेव संज्ञानं भवेद् यत् कर्म कीदृशं भवति, सुकर्मरूपेण कुकर्मरूपेण वा। यदि जना एवं स्वीकरिष्यन्ति यद् अस्माकं कृते कर्मकरणमस्त्यावश्यकम्, तर्हि अवृत्तिदोषस्य विनाशो भविष्यति।

अनेन प्रकारेण मानवजीवने पौरोहित्यस्य प्रभावोऽस्त्यतिमहत्त्वपूर्णः। समस्याधिक्यस्य समाधाने पौरोहित्यस्य महत्त्वं प्रच्छन्नं नास्ति।



१. गीतायाम्।

२. श्रीमद्भगवगीता-२/४७।

# कालिदाससाहित्ये गङ्गा[1]

**प्रो. रेवाप्रसादद्विवेदी**

सम्मानिताचार्यः

काशीहिन्दूविश्वविद्यालयस्य

वाराणसी



[नामसंक्षेपाः—अ.=अभिज्ञानशाकुन्तलम्, कु.=कुमारसम्भवम् (१-८), मे.=मेघदूतम्, र.=रघुवंशम् (१-१८), वि.=विक्रमोर्वशीयम्[2]]

भारते वर्षे प्रायेण सकला एव पुण्यसरितस्तथैव गङ्गेत्युच्यन्ते यथा गुप्ताऽगुप्तवंशीया राजानो विक्रमादित्य इति। मुख्यो विक्रमादित्यः साहसाङ्क इत्युपाधिना सम्मन्यते स्म, ये च विक्रमादित्य इत्युपाधिना सम्मानितास्तेषां मुख्यं नाम चन्द्रगुप्त इति, स्कन्दगुप्त इति, यशोधर्मेति, हेमचन्द्र इति, आहवमल्ल इति च तत्तेषु सन्दर्भेषु विख्यातम्। पुण्यासु सरित्स्वपि गङ्गापदं यस्या मुख्यं नाम, सा हि भगवती 'भागीरथी' हिमवतः प्रादुर्भूय पूर्वमब्धिं यावत् प्रवहन्ती विराजते, यस्यास्तीरे सन्ति काशी-प्रयागादीनि तीर्थानि। कालिदाससाहित्यं भारतीयेषु गङ्गावदेव प्रियम्। तस्मिन् यद्यपि 'काशी'-पदं 'पुरूरवसः कनिष्ठाया[3] धर्मपत्न्या नाम्न्येव लभ्यते, न तु ततः पृथक्, तथापि कालिदासस्य साहित्ये काश्येव कृतभूरिपरिश्रमा। श्वसिति च कालिदाससाहित्यं मूलरूपेण साम्प्रतं काश्या एव जागरूकया सेवासम्पादनया। तत्र भगवती गङ्गा ५५ वारान् स्मृता भिन्नभिन्नाभिः संज्ञाभिः। संज्ञा अमूरिमाः 'आकाशगङ्गे'ति, 'गङ्गे'ति, 'जह्नुकन्ये'ति, 'जह्नुदुहिते'ति, 'जाह्नवी'ति, 'त्रिमार्गगे'ति, 'त्रिमार्गे'ति, 'त्रिस्रोत'रिति, 'भागीरथी'ति, 'मन्दाकिनी'ति, 'सुरसरिदि'ति च। इत्थं कालिदाससाहित्ये 'भोगावती'ति या पातालगङ्गा तस्या नाम न दृश्यते। प्रयागमपि कालिदासो प्रायेण विसस्मारैव, 'सङ्गम'पदं तु तस्य कृते प्रायुङ्क्त, यद्यपि 'सितासित'वर्णने कालिदासस्य प्रतिभा तथा सफला यथा परवर्त्तिनामध्येतॄणां प्रतिभा अपि पद्यान्तरयोजनाय प्रोदसाहयत।

---

१. लेख एष I.I.A.S. संस्थया काश्यां समायोजितायां शोधगोष्ठ्यां पठितः।

२. मालविकाग्निमित्रे इव ऋतुसंहारेऽपि गङ्गासन्दर्भो नास्ति।

३. कनिष्ठात्वं पतिप्रेममात्राकृतम्। ततश्च ज्येष्ठात्वं मालविकायाम्।

गङ्गा कालिदासेन वर्गद्वयेन स्मृता—(१) 'आकाशगङ्गा'—वर्गस्तयोरेकः, (२) गङ्गेति भागीरथीवर्गो द्वितीयः। आकाशगङ्गायाः कृते कालिदासेन 'खतरङ्गिणी', 'गगनप्रतिष्ठत्रिस्रोता' इति, 'छायापथ' इति, 'व्योमगङ्गा' इति च शब्दाः प्रयुज्यन्ते। त एते भवन्ति षट् प्रयोगाः, आकाशगङ्गापदस्य वारद्वयं प्रयोगात्। तत्र—

## १. आकाशगङ्गा

### १. आकाशगङ्गा

सप्तर्षिमण्डलं स्मरणसमकालमेव भगवतः शिवस्य प्रमुखे प्रादुर्बभूव, ततः पूर्वं सम्पादितमेभिः स्नानं भगवत्या आकाशगङ्गाया दिङ्नागमदगन्धिनि, तीरमन्दारकुसुमोत्किरवीचिनि च स्रोतसि—

आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु।
आकाशगङ्गास्रोतस्सु दिङ्नागमदगन्धिषु।। (कु. ६.५)

कुशः प्रियाभिः सह सरयूह्रदमवगाहते। तदानीं स तथैव दृश्यते यथाऽप्सरोभिः सह 'आकाशगङ्गायां' जलविहारं कुर्वाणो देवराजः—

तेनाऽवरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम्।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः।। (र. १६.७१)

### २. खतरङ्गिणी

आकाशगङ्गैव खतरङ्गिणीत्यप्युच्यते कालिदासेन। गन्धमादने भगवती पार्वती खतरङ्गिणीं वगाहते जायते च मीनपङ्क्त्या पुनरुक्तमेखला—

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा।
खे व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला।। (कु. ८.२६)

### ३. गगनस्थस्रोतः/व्योमगङ्गा

गङ्गैव गगनस्थस्रोतःपदेनापि स्मर्यते सुकविना। अग्रे समुद्धृते 'त्रिस्रोतसं वहति यो गगनप्रतिष्ठा'मित्यस्मिन् शाकुन्तलपद्ये।

भगवती आकाशगङ्गैव 'व्योमगङ्गे'त्यपि प्रोल्लिख्यते—

४. रावणेन सह योद्धुमुद्यताय श्रीरामाय देवराज इन्द्रः स्वकीयं जैत्रं रथं प्रेषयामास। रथस्यास्य ध्वजपटो व्योमगङ्गोर्मिवायुभिराधूयमान आसीत्—

तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः।। (र. १२.८५)

**५. छायापथः**

लङ्कातः साकेताय पुष्पकेण प्रस्थितो रामः समुद्रे दृश्यमानं स्वकीयं सेतुमभिलक्ष्य सीतां प्रति वक्ति—

वैदेहि! पश्याऽऽमलयाद् विभक्तं मत्सेतुना फेनिलमम्बुराशिम्।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्।। (र. १३.१)

**६. त्रिस्रोता**

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां ज्योतींषि वर्त्तयति च प्रविभक्तरश्मिः।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं वायोरिमं परिवहस्य वदन्ति मार्गम्।।
(अ. ७.६)

प्रवहपरिवहादयो वायवः प्रसिद्धा एव ज्यौतिषे शास्त्रे। सेयं कालिदास-साहित्ये आकाशगता गङ्गा। कुमारसम्भवस्य ५.३७ पद्येऽपि आकाशगङ्गा ग्रहीतुं सुशका। अथेतरे सन्दर्भाः।

## २. गङ्गा

कालिदाससाहित्ये यत्र गङ्गा गङ्गापदेनैव स्मृता, ते खल्विमे सन्दर्भाः—

७-९ १-३. अभिज्ञानशाकुन्तले धीवरवृत्तान्तः प्रसिद्ध एव। तत्र शक्रावतारतीर्थं गङ्गाया एव। षष्ठेऽङ्के दुष्यन्तस्यैव वचनेन प्रमाणीक्रियते—'शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद् गङ्गास्रोतसि परिभ्रष्टम्'—इति कालिदासग्रन्थावल्या द्वितीयस्य संस्करणस्य ६२४ पृष्ठे सुलभेन। एवञ्च ६११, ६१५ पृष्ठयोरपि यौ शक्रावतारशचीतीर्थयोरुल्लेखौ तावपि गङ्गयैव सम्बद्धौ सिद्ध्यतः।

१०. ४. कुमारसम्भवे १.३० पद्ये सुकविरेष स्मरति भगवत्यां पार्वत्यां सर्वा अपि पूर्वजन्माधीता विद्यास्तथैव प्रादुरभवन् यथा शरदि गङ्गायां हंसमालाः प्रादुर्भवन्ति—

तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः।। (कु. १.३०)

११. ५. तपश्चरन्तीं पार्वतीं परीक्षितुमुपस्थितो ब्रह्मचारी वटुः कथयति—'पार्वति! त्वदीयं शीलं तपस्विनामप्युपदेशतां गतम्। अतस्तव पिता गाङ्गैः सलिलैरपि तथा न पावितो यथा त्वदीयैरनाविलैश्चरितैरि'ति—

यदुच्यते पार्वति! पापवृत्तये न रूपमित्यव्यभिचारि तद् वचः।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम्।।
विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः।।

(कु. ५.३७)

दिवश्च्युतैरित्याकाशगङ्गैवाऽत्र न ग्राह्या, हिमगिरिप्रभवाया अपि गङ्गायाः प्रपातोत्थितानां सलिलानामत्र सङ्ग्रहीतुं सुशकत्वात्।

**१२. ६.** हिमवतो नगरं गङ्गास्रोतसा परिक्षिप्तमासीत्—

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम्।। (कु. ६.३८)

**१३. ७.** हिमाचलः सप्तर्षिमण्डलस्य चरणोदकमात्मनो मूर्ध्नि प्रोक्षति। श्लाघते च ततः सञ्जातमात्मनः पूतत्वम्। अत्र गङ्गामपि स्मरति—

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः।। (कु. ६.५७)

**१४. ८.** सप्तर्षयोऽपि हिमवन्तं प्रशंसन्तः कथयन्ति यद् गङ्गा हि द्वाभ्यां प्रभवति—भगवतः परमेष्ठिनश्चरणात्, हिमाचलाच्च—

यथैव श्लाघ्यंते गङ्गा पादेन परमेष्ठिनः।
प्रभवेण द्वितीयेन तथैवोच्छ्रिरसा त्वया।। (कु. ६.७०)

**१५. ९.** हिमवतः प्रसूतानां सरितां जलानि निर्मलानि भवन्ति, तेषां प्रवाहश्च नैरन्तरीमाश्रितः सिन्धुपर्यन्तं प्रसरति। त इमे विशेषा यत्र स्फुटास्तेषां प्रथमा भगवती गङ्गैव—

अच्छिन्नामलसन्तानाः समुद्रोर्म्यनिवारिताः।
पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ते।। (कु. ६.६९)

गङ्गातुल्या अन्या अपि सरितो हिमवतः प्रभवन्ति सरयू-सिन्धुप्रभृतयः।

**१६. १०.** भगवान् शिवो वरयात्रायां यदा वरवेषं जग्राह, तदा तस्य मूर्ध्नि त्वष्ट्रा निर्मितं नवमातपत्रं भगवता सूर्येण प्रासारि। तत्रासीद्दुकूलमपि लम्बमानम्। तेन च श्वेतेन दुकूलेन शिवः शिरसि पतद्गङ्ग इवालक्ष्यत—

उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे।। (कु. ७.४१)

भगवतः शङ्करस्य पार्श्वद्वये चामरान्दोलनार्थं व्याप्रियमाणे आसातां शरीरधारिणी गङ्गा यमुना च। चामराभ्यामाभ्यामिमे हंसद्विज-समेधितलक्ष्मीके इवालोक्येते स्म—

१७. मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम्।
समुद्रगारूपविपर्य्ययेऽपि सहंसपाते इव लक्ष्यमाणे।। (कु. ७.४२)

१८. ११. मेघदूते 'अलका'-पुरीरूपाया अङ्गनायाः शरीरतो गङ्गारूपं दुकूलमपैति—

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।। (पू.मे., ६५)

रघुवंशे द्वादश वारान् सुकविरेष गङ्गापदप्रयोगपूर्वकं गङ्गामिमां स्मरति। तथा—

१९. १२. १.३४ पादटिप्पण्यां दिलीपो वसिष्ठाश्रमं जिगमिषुः स्वीयां कोसलां सचिवेषु न्यस्यति, तथैव पूर्वं भगीरथो यदासौ गङ्गामवतारयितुं तपश्चरितुं जगाम। प्रयोजनं चानयोरुभयोरप्येक एव 'सन्ततिलाभः'। सन्ततिः कीदृशी? पूर्वेषां पावने क्षमा। पितॄणामिदमृणं यद्धि सन्तत्या शोध्यते—

गङ्गां भगीरथेनेव पूर्वेषां पावनक्षमाम्।
ईप्सता सन्ततिं तेन न्यस्ता मन्त्रिषु कोसला।।

२०. १३. रघुर्भगीरथ इव भाति। भगीरथः पूर्वां दिशं प्रति प्रतिष्ठते पश्चाच्चास्य प्रवहन्ती विद्यते भगवती गङ्गा। रघुरपि महतीं सेनां पूर्वां दिशं प्रति कर्षति—

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम्।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः।। (र. ४.३२)

२१. १४. पाश्चात्त्यान् पारसीकानिव कम्बोजानपि विजित्यौदीच्यानपि जनपदाञ्जेतुं रघुर्गौरीगुरुविरुदं हिमाद्रिमारुरोह। तत्र तं गङ्गासीकरिणो मरुतः सेवन्ते—

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः।। (र. ४.७१)

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः।
गङ्गासीकरिणो मार्गे मरुतस्तं सिषेविरे।। (र. ४.७३)

२२. १५. स्वयंवरसभार्थं विदर्भान् गत्वा रघुसूनुरजो वैतालिकैः प्रभाते स्तुतिभिः प्रबोध्यते। प्रबुद्धश्च स शुभ्रप्रच्छदं तल्पं सपद्येवोज्झति। तत्रोपमा तथैव, यथा सुप्रतीको नाम सुरगजो मदपटुनिनदद्भी राजहंसैर्बोधितः सन् गाङ्गं सैकतमुज्झति—

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार।
मदपटुनिनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः।। (र. ५.७५)

२३. १६. प्रबुद्धो विष्णुरुपस्थितानां देवानां स्तुतीर्निशम्योत्तरं दातुं यदैव वक्तुं मुखं व्यादत्ते दशनानामंशवो धारारूपेण व्युच्चरन्तश्चरणान्निर्यात-शेषाम् ऊर्ध्वप्रवाहिनीं गङ्गां पुनरुक्तवन्ति—

बभौ सदशनज्योत्स्ना सा (भारती) विभोर्वदनोद्गता।
निर्यातशेषा चरणाद् गङ्गेवोर्ध्वप्रवर्त्तिनी।। (र. १०.३७)

अत्रामूर्त्ताया अपि भारत्या मूर्त्तिमत्त्वं कविप्रतिभाया उत्कर्षातिशयस्य सरसं फलम्।

२४. १७. प्रयागे गङ्गा यमुनया सङ्गता तथा भाति यथा कृष्णोरगभूषणा, भस्माङ्गरागा गौरगौरा च ईश्वरस्य तनुः—

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्याऽनवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनाप्रवाहैः।।
(र. १३.५७)

२५. १८. रावणं निहत्य प्रत्यागतौ रामलक्ष्मणौ दृष्ट्वा मातरौ प्रमोदाश्रुपरिप्लुते जायेते। अश्रु चेदं शिशिरम्, आनन्दजनितत्वात्—

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिष्यन्द इवावतीर्णः।। (र. १४.३)

२६. १९. लक्ष्मणः स्वां भ्रातृजायां सीतां रथाद् गङ्गापुलिनेऽवधानेनावतारयति,-तरति च निषादाहृतनौविशेषस्ताम्—

रथात् स यन्त्रा निगृहीतवाहात् तां भ्रातृजायां पुलिनेऽवतार्य।
गङ्गां निषादाऽऽहृतनौविशेषस्ततार सन्धामिव सत्यसन्धः।।

(र. १४.५२)

२७. २०. कुशः कुशावतीतोऽयोध्यां प्रति प्रतिनिवर्त्तमानो मध्येमार्गं प्रतीपगां गङ्गां गजसेतुबन्धेन तरति—

तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम्।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः।। (र. १६.३३)

२८. २१. अतिथेर्मूर्ध्नि निपतन्ती ओघमहती सशब्दाऽभिषेकश्रीस्तथैव व्यरोचत यथा शिवशिरसि निपतन्ती गङ्गा विरोचते—

तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत।
सशब्दमभिषेकश्रीर्गङ्गेव त्रिपुरद्विषः।। (र. १७.१४)

२९. २२. केशिन आहृतोर्वशी तथैव शनैः शनैः संज्ञां लभमाना दृश्यते यथा रोधःपतनकलुषा गङ्गा प्रसादम्—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैंशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा।
मोहेनान्तर्वरतनुरियं मुच्यमाना विभाति
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम्।। (वि. १.९)

३०. २३. उर्वश्याश्चित्रलेखानाम्नी सखी पुरूरवसमुपेता उर्वशीं विहाय। पुरूरवास्तां गङ्गाविरहितां यमुनां मनुते—

न तथा नन्दयसि मां सख्या विरहिता तया।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया विना।। (वि. २.१४)

३१. २४. पुरूरवसा मणिहर्म्यपृष्ठमार्गं पृष्टो विदूषकः कथयति—

इमिणा गंगातरंगसस्सिरीएण फलिअमणिसोवाणेण
आरोहतु भवं पदोसावसारमणिज्जं मणिहम्मिअपिट्टं[१]।

(वि. ५.२, सं. २, पृ. ४७३)

---

१. एतेन गङ्गातरङ्गसश्रीकेण स्फटिकमणिसोपानेनारोहतु भवान् प्रदोषावसररमणीयं मणिहर्म्यपृष्ठम्।

३२. २५. विहितराज्याभिषेकसत्कारे कुमारे आयुषि राजलक्ष्मीर्हिमवति जलधौ च व्यस्ततोया गङ्गेव भाति—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मिन्
स्थितिमति च विभक्ता त्वय्यनाकम्पधैर्ये।
अधिकतरमिदानीं राजते राजलक्ष्मी-
र्हिमवति जलधौ च व्यस्ततोयेव गङ्गा।। (वि. ५.२२)

इयं हि कालिदाससाहित्ये गङ्गाशब्दप्रयोगस्य स्थितिः।

## ३. जह्नुकन्या

सम्प्रति जह्नुकन्येति जाह्नवीति पदयोः प्रयोगं पश्यामः—

३३. १. सर्वानपीतरान् स्वयंवरास्थानीमुपेयुषो राज्ञो विहायेन्दुमती रघुपुत्रं कुमारमजं वृतवतीति समगुणयोगप्रीताः पौरा उद्गिरन्ति—

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः।। (र. ६.८५)

३४. २. इन्दुमतीविरहितोऽजो जह्नुकन्यासरय्वोः सङ्गमे शरीरं त्यजति, सुरत्वं प्रतिपन्नश्चाप्सरोभूतया प्रिययेन्दुमत्या सह नन्दनवनाभ्यन्तरेषु लीलागारेषु रमते—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः।
पूर्वाकाराऽधिकतररुचा सङ्गतः कान्तयाऽसौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु।। (र. ८.९५)

३५. ३. सीतां मुमुक्षँल्लक्ष्मणो जह्नोर्दुहित्रा प्रोत्थितवीचिहस्तैरवार्यतेव—

गुरोर्नियोगाद् वनितां वनान्ते सीतां सुमित्रातनयो विहास्यन्।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात्।।
(र. १४.५१)

## ४. जाह्नवी

३६. १. शिवः पार्वत्या अनुरूपो वरः, पार्वती च शिवस्य तादृश्येव प्रिया। आनुरूप्यमिदमनुरागायाकल्पत। उचितं च तत्—सागरं जाह्नवीव जाह्नवीं सागरोऽपि न बहु मनुते—

तं यथाऽऽत्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम्।
सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकनिर्वृतिः।।

(कु. ८.१६)

३७. २. भगवान् शङ्करः कौतुकागारे यत् तल्पं सेवते स्म तद्धि शुभ्रतायां जाह्नवीपुलिनचारुदर्शनमुच्यते—

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम्।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः।। (कु. ८.८२)

३८. ३. रघुवंशे रामं प्रसूय शातोदरी माता कौसल्या तथैव तेन सह बभौ यथा शरत्कृशा जाह्नवी सैकताम्भोजबलिना भाति—

शय्यागतेन रामेण माता शातोदरी बभौ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा।। (र. १०.६९)

## ५. त्रिमार्गगा

आकाशपृथिवीपातालगैस्त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगापदेन प्रोच्यते भगवती गङ्गा। रघुवंशस्य १३.२० पद्ये पुष्पकारूढः सीताजानिः सीतां प्रत्युद्गिरति—

३९. असौ महेन्द्रद्विपदानगन्धी त्रिमार्गगावीचिविमर्दशीतः।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान् मुखे ते।।

(र. ३.२०)

## ६. त्रिमार्गा

४०. त्रिमार्गगैव त्रिमार्गेत्यप्युच्यते। पार्वत्या जन्मना हिमगिरिस्तथैव पूतश्च विभूषितश्च यथा प्रभामहत्या शिखया दीपः, यथा त्रिमार्गया गङ्गया त्रिदिवपदवाच्यस्य स्वर्गस्य मार्गः, यथा वा संस्कृतया वाचा मनीषी।

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च।।

(कु. १.२८)

## ७. त्रिस्रोताः

त्रिमार्गगेव गङ्गा त्रिस्रोत:पदवाच्यापि कालिदाससाहित्ये। तथा अभिज्ञानशाकुन्तले परिवहस्य—

४१. १. वायोर्महिमानमुल्लिखति कविः 'त्रिस्रोतसं वहती'ति पूर्वोद्धृतेन पद्येन कुमारसम्भवे।

४२. २. वधूमण्डनेन मण्डिता पार्वती शुक्लवर्णमगुरुं गोरोचनापत्रविभङ्गं चाङ्गेषु दधाना तादृशी भासते स्म, यादृशी चक्रवाकाङ्कितसैकता त्रिस्रोता अपि न—

विन्यस्तशुक्लागुरु चक्रुरस्या गोरोचनापत्रविभङ्गमङ्गम्।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ।।

(कु. ७.१५)

४३. ३. रघुवंशेऽत्रिपत्नी अनसूया मन्दाकिनीं प्रवर्त्तयति। सा चासीत् त्रिस्रोताः सरित्, अर्थाद् गङ्गैव—

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम्।
प्रवर्त्तयामास किलाऽनसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम्।।

(र. १३.५१)

कुशः कुशावतीतः प्रतिप्रयाति अयोध्याम्। मध्ये स वन्दते त्रैस्रोतसं जलम्—

४४. स पूर्वजानां कपिलेन रोषाद् भस्मावशेषीकृतविग्रहाणाम्।
सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं नौलुलितं ववन्दे।। (र. १६.३४)

## ८. भागीरथी

४५. १. कुमारसम्भवे हिमालयस्य किराता भागीरथीनिर्झरसीकराणां वोढारं वायुं श्रमापनयनाय सेवन्ते—

भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः।।

(कु. १.१५)

४६. २. अजः पार्थिववाहिनीं गृह्णाति तथैव यथा शोणो भागीरथीम्। अत्र भागीरथीति पदस्य स्थाने ज्योतीरथामिति परिवर्त्तनमावश्यकम्। स्वीकृतं च तदस्माभिः कालिदासग्रन्थावल्याम्।

४७. ३. रघुवंशे दोहदं पृष्टा गर्भवती सीता भूयस्तरां भागीरथीतीरतपोवनानि द्रष्टुमिच्छति—

सा दष्टनीवारफलानि हंसैः सम्बद्धवैखानसकन्यकानि।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि।।
(र. १४.२८)

## ९. मन्दाकिनी

४८. १. मन्दाकिनीति नदीद्वयस्य सामान्या संज्ञा। तत्रैका चित्रकूटगता। अपरा च हिमालयादुद्भूय पूर्वसागरगामिनी। बाल्ये पार्वती मन्दाकिन्याः सैकतवेदिकाभिः क्रीडति—

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये।।
(कु. १.२९)

४९. २. तारकासुरेण सर्वाण्यपि हेमाम्भोरुहाणि वापीषु स्वीयासु रोपितानि, ततश्च मन्दाकिन्यां केवलं दिग्वारणमदाविलं पयोमात्रमवाशेषि।

मन्दाकिन्याः पयःशेषं दिग्वारणमदाविलम्।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम केवलम्।। (कु. २.४४)

५०. ३. तपोरताय शिवाय पार्वती भानुमतो मयूखैर्विशोषितां मन्दाकिनीपुष्करबीजमालामुपनयति। सोऽपि च प्रणयिप्रियतया तामेतां प्रतिगृह्णाति—

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम्।।
(कु. ३.६५)

५१. ४. रघुवंशे चित्रकूटगता मन्दाकिनी तैरेव विशेषैरुपस्थाप्यते, ये साम्प्रतमपि तत्रानुसूयाश्रमपार्श्वे दृश्यन्ते—

एषा प्रसन्नस्तिमितप्रवाहा सरिद् विदूरान्तरभावतन्वी।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः।।
(र. १३.४८)

५२. ५. मेघदूते 'मन्दाकिन्याः सलिल.' इति प्रक्षेपो लभ्यत एव।

५३. ६. विक्रमोर्वश्यां पुनः (४८७ पृष्ठे) चित्रलेखा उर्वश्यां कोपस्य कारणं पुरूरवसा विद्याधरदारिकायां कृतो दृष्टिपात उदाह्रियते। दारिकैषा मन्दाकिन्याः सिकतासु क्रीडन्ती समासीत्—

चित्रलेखा—तहिं खु मंदाइणीए पुलिणेसु गदा सिअदापव्वदकेलीहिं कीलमाणा विज्जाहरदारिआ देण राएसिणा णिज्झाइदा।' (वि. ४.३.८)[१]

## १०. सुरसरित्

सुरसरिदिति गङ्गायाः प्रसिद्धमभिधानम्। कालिदासस्तेनापि गङ्गां स्मरति।

५४. १. रघुवंशे सुदक्षिणा तथैव गर्भं दधौ यथा सुरसरिद् वह्निनिष्ठ्यूतमैशं तेजो धत्ते—

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालाऽनुभावैः।। (र. २.७५)

५५. २. विक्रमोर्वश्याश्चतुर्थाङ्कगतास्वपभ्रंशगाथासु नदीगाथामनु या गाथा, तत्र सुरसरित्पदं सुलभमेव। तथा—

पसीअ पिअअम सुंदरि ए णए,
खुहिआकरुणविहंगम ए णए।
सुरसरितीरसमूसुअ ए णए
अलिउलझंकारिअ ए णए[२]।। (वि. ४.२५)

त इमे कालिदाससाहित्यगता गङ्गासन्दर्भाः।



१. तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका तेन राजर्षिणा निध्यायेति।

२. प्रसीद प्रियतमे! सुन्दरि! ए नदि!
क्षुभिताकरुणविहङ्गमे! ए नदि!।
सुरसरितीरसमुत्सुके! ए नदि!
अलिकुलझङ्कारिते! ए नदि!।।

# काव्यनायको धर्मश्च

**प्रो. रहसविहारी द्विवेदी**
आचार्योऽध्यक्षश्च, संस्कृताध्ययनमण्डलस्य
जबलपुरस्थरानीदुर्गावतीविश्वविद्यालये



कवते वर्णयति ग्रथते वा कविः, कवेः कर्म भावो वा काव्यम्, तच्च—

लोकोत्तरे हृदाह्लादे लोकोद्बोधे च सङ्गता।
प्रज्ञावतः कवेः सद्वाक् काव्यमित्यभिधीयते।।

(स्वोपज्ञकाव्यमीमांसायाम्)

काव्यस्य नायकः (नयति प्रापयतीति) नेता प्रभुः प्रमुखो वा प्रबन्धरचनासु। धरति लोकान् ध्रियते पुण्यात्मभिरिति वा धर्मः। अत्र काव्यनायको धर्मश्चेति विचारे तयोरभिसम्बन्धः सङ्कल्पितः।

महान् महिमा वरीवर्ति कविकाव्ययोः संस्कृतवाङ्मये। जगद्वाङ्मये सर्वप्राथम्यमृक्संहितायाः पाश्चात्त्यैरप्युररीकृतम्। यत्र कविशब्दः प्रथमे सूक्त एव 'कविक्रतु'रित्यादिरूपेण श्रूयते। ततश्च बहुधा कविकाव्यशब्दौ प्राप्येते। ऋग्वेदस्य १.३१, १.१४९, ४.२४, ३.२, १.१, २.२३, ४.३६, १.१०३, १.१४६, १.१६३, ६४, १.८५, ९.९६, प्रभृतिषु स्थलेषु कविशब्दः प्राप्यते। क्रान्तदर्शनः, मेधावी, क्रान्तः (व्याप्तः), क्रान्तकर्मा, सर्वद्रष्टा—इत्यादिरूपेण कविशब्दो भाष्यकृद्भिर्व्याख्यायते। याजुषे मन्त्रेऽस्मिन्—

'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' (यजु.सं. ४०)। भाष्यकृद्भिः साक्षादीश्वरविशेषणतयैव कविशब्दो व्याख्यातः। कुत्रचिद्भाष्यकृद्भिः कवय इत्यस्य 'स्तोतारः', 'ऋत्विजः', 'विद्वांसः', 'मेधाविनः' इत्येवञ्च व्याख्या व्यधायि। वैदिके वाङ्मये काव्यशब्दोऽपि द्वेधा श्रूयते पुंल्लिङ्गो नपुंसकलिङ्गश्च, पुंल्लिङ्ग उशनसो वाचकः। 'प्र काव्यमुशनेव ब्रुवाणो' (ऋ.प्र. ९७.७) इत्यादौ काव्यवाचकः। यजुःसंहितायां वेदोऽपि काव्यमित्युक्तं 'काव्यं छन्दः' (यजु. १५.४)। एवं कृत्वा वेदः काव्यं स च धर्ममूलम्—

'वेदोऽखिलो धर्ममूलम्'। भवतु नाम वेदस्यापि काव्यं नाम, किन्तु सम्प्रति काव्यपदेन कुमारसम्भवादीनां बोधो भवति, न तु वेदस्य। वेदस्य बहुधा प्रभावोऽनुभूयते काव्येषु, अनेकेषु शोधपत्रेषु तथ्यमिदं मया प्रमाणीकृतम्। काव्यप्रयोजननिरूपणे काव्यशास्त्रकृद्भिः पुरुषार्थचतुष्टयमपि परिगणितम्। तद् यथा—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिबन्धनम्।।

(भामहस्य काव्यालङ्कारे-१.२)

एवमेव कुन्तकोऽपि वक्रोक्तिजीविते—

धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धेऽभिजातानां हृदयाह्लादकारकः।।

महाकवयोऽपि तथ्यमिदं स्वीकुर्वन्ति। यथाह वाल्मीकिः—

कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्।। (वा., बाल. ४.८)

धर्मादिमहत्त्वं तद्वस्तुविन्याससम्पृक्तिश्च कालिदाससाहित्येऽपि—

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः।।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना।
अप्यर्थकामौ तस्याऽऽस्तां धर्म एव मनीषणः।।

(रघुवंशे-१.१७,२३,२५)

व्यङ्ग्यभङ्ग्याऽपि स्वकाव्यस्य श्रुतिपरत्वं कालिदासः प्रतिपादयति—

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्यकामम्।
गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः।।

(रघु. ५.२४)

कण्ठतोऽपि कालिदासो वक्ति—

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतिः।
धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक्।। (रघु. १०.८४)

कालिदासो धर्मपालनाय सीतामाध्यमेन राजानं प्रेरयति—

नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः।
निर्वासिताप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया।।
(रघु. १४.६७)

किरातार्जुनीयेऽपि तृतीये सर्गे धर्मराजव्यासयोर्माध्यमेन धर्मस्यावस्थितिः प्रतिपादिता—

धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनः प्रणुदां श्रुतीनाम्।
हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे।।
(किरातार्जुनीये-३.४)

अत्रैवाष्टादशसर्गे शिवं वरं याचमानोऽर्जुनो वक्ति—

आस्तिक्यशुद्धभवतः प्रियधर्म! धर्मं धर्मात्मजस्य विहितागसि शत्रुवर्गः।
सम्प्राप्नुयां विजयमीश मया समृद्ध्या तां भूतनाथ! विभुता वितराहवेषु।।
(१८.४३)

माघोऽपि धर्मस्य महत्त्वं स्वीकरोति—

स्वापतेयमधिगम्य धर्मतः पर्यपालयमवीवृधञ्च यत्।
तीर्थगामि करवै विधानतस्तञ्जुषस्व जुहवानि चानले।। (१४.९)

ग्रन्थेषु श्रुतिसम्मतत्वं समर्थयन् स लिखति—

शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसङ्करैः।
पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमगृणोद्द्विजन्मनाम्।। (१४.३७)

श्रीहर्षः स्वकीये नैषधीयचरितेऽनेकधा पुरुषार्थचतुष्टयं निरूपयति। पूर्वपक्षमप्यस्य समुपस्थापयति। विष्णोर्वर्णने पुरुषार्थचतुष्टयं साधु वर्णयति। तद्यथा—

धर्मबीजसलिला सरिदङ्घ्रावर्थमूलमुरसि स्फुरति श्रीः।
कामदैवतमपि प्रसवस्ते ब्रह्ममुक्तिदमसि स्वयमेव।। (२१.११०)

श्रीकण्ठचरिते मङ्खकोऽपि पुरुषार्थरथं परिकल्पयति—

धर्मार्थकामैः समुदायवद्भिस्तत्र त्रिवेणुस्थितिरन्वरोधि।
देवः परो यत्र शशाङ्कमौलिः स्वयञ्च मोक्षप्रतिभूर्विभूषा।। (२०.७)

एवं प्रशस्तकविभिः कण्ठतोऽपि प्रायशो धर्मादीनां पुरुषार्थानां निरूपणं कृतं विलोक्यते। कविभिर्नायकानां प्रायशः काव्यारम्भे, गुणाकलने, वस्तुविन्यासे तेषाञ्च व्यवहारे धर्मरूपस्य पुरुषार्थस्य महती प्रतिष्ठा कृता। श्रुतिं स्मृतिञ्चाधृत्यैव सत्कवीनां प्रवृत्तिर्नायकचरितपल्लवने निभाल्यते। उदात्तजीवनमूल्यान्येव धर्माधिकरणरूपेण मनीषिभिः प्रतिपादितानि सन्ति। नीतिशतककारो भर्तृहरिराहारनिद्रादिशि पशुमनुष्ययोः समानत्वेऽपि मनुष्येषूदात्तकर्त्तव्यरूपो धर्म एव विशेषो भवतीति मनुतेऽन्यथा धर्मेण हीनाः पशुभिः समाना इति कथयति। मनुर्द्विधा धर्मं परिभाषमाणः प्रथमं तदाधारभूतानि तत्त्वानि प्रतिपादयति, ततश्च तद्घटकानां निरूपणं करोति—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।

(मनुस्मृतौ द्वितीये षष्ठे चाध्याये)

नायकदिशा धर्माभिसम्बन्धो विचार्यते तर्हि महतः काव्यस्य कर्तुरादिकवेर्वाल्मीकेर्नाम प्रथममायाति। वाल्मीकिरामायणस्य बालकाण्डस्य प्रारम्भिकेषु पद्येष्वेव वाल्मीकिसम्मतं नायकस्वरूपं सर्वाङ्गपूर्णं, सर्वातिशायि, काव्यशास्त्रिणां मार्गदर्शकञ्च विद्यते। एतत्कविमनसि विद्यमानस्यादर्शनायकस्य स्वरूपमस्ति, यतो हि स्वाभिमतं साम्प्रतिकं (उचितं) नायकं स (वाल्मीकिः) नारदं पृच्छति—

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्।।

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः।।

चारित्र्येण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः।।

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य विभ्यति देवाश्च जातरोषस्य संयुगे।।

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम्।।

तैत्तिरीयोपनिषदः शिक्षावल्यां 'सत्यं वद धर्मं चर' इत्यादिरूपेण स्नातकाय प्रदत्तोपदेशः, मनोश्च 'धृतिः क्षमे'त्यादिरूपेण कृतं धर्मलक्षणम्। उभयत्र समुदात्तानां मानवीयानां गुणानां यादृशं निरूपणं प्राप्यते, तदेव वाल्मीकिर्नारदं प्रति प्रस्तौति। ततः काव्यशास्त्रिभिरपि तस्यानुवादमात्रं व्यधायि। यथाह दण्डी—

इतिहासकथोद्भूतमितरद्वा सज्जनाश्रयम्।
चतुर्वर्गफलायत्तं चतुरोदात्तनायकम्।। (काव्यादर्शे-१.१५)

रुद्रटः—

ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे।
जगति चतुर्वर्ग इति ख्यातिर्धर्मार्थकाममोक्षाणाम्।
सम्यक्तानभिदध्याद्रससम्मिश्रान् प्रबन्धेषु।।

तत्र महान्तो येषु च वितितेष्वभिधीयते चतुर्वर्गः।
सर्वे रसाः क्रियन्ते काव्यस्थानानि सर्वाणि।।

ते लघवो विज्ञेया येष्वन्यतमो भवेच्चतुर्वर्गात्।
असमग्रानेकरसा ये च समग्रैकरसयुक्ताः।।
(काव्यालङ्कारे, १२.१, १६.१,५,६)

उक्तासु कारिकासु स्पष्टमेतद् यदत्यन्तं महत्त्वं पुरुषार्थानां प्रबन्ध-रचनासु स्वीकृतमस्ति। कदाचिदेकस्याभिव्यञ्जनं कविः करोति, तर्हि ते प्रबन्धा लघवो भवन्ति। अतो नायको धर्मादिसमन्वित एव भवति, नात्र सन्देहः। रूपकेष्वपि नायकस्य निरूपणं तथैव कृतं विद्यते। यथाह दशरूपककारः—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा।।

बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः।। (दशरूपके-२.१-२)

साहित्यदर्पणकृताऽपि नायकस्वरूपं तथैव निरूप्यते—

प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः।।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः।।

(साहित्यदर्पणे-६.९, ३२१)

मन्ये, वैदिकाद् वाङ्मयादेव नेतुः परिकल्पना प्राथमिकेषु काव्येषु कृता। नेतुः स्वरूपस्य वेदेषु बहूनि स्थलानि प्राप्यन्ते। तेषूदाहरणमेकमत्र प्रस्तूयते—

अभिगोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकं सेना अवतु प्र युत्सु।।

नाटकादौ मङ्गलाचरणं समाप्तौ च भरतवाक्यं वेदशिल्पमेवानुसृत्य प्रवर्तमानं विलोक्यते। ऋग्वेदस्य—'अग्निमीले पुरोहितमि'ति प्रथमो मन्त्रः, तदन्तिमश्च—

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति।।

एवमृग्वेदशिल्पमेवानुसृत्य मङ्गलाचरणभरतवाक्ययोः परम्परा प्रारब्धेति सिद्ध्यति। प्रबन्धरचनासु प्रथमं प्रायशो नायकगुणानामुल्लेखं कवयः कुर्वन्ति, तेषामेव विन्यासो नायकचरिते कविभिः क्रियते। आदिकाव्यस्य प्रथमतः प्रोक्ता नायकगुणाः पूर्वमुद्धृता एव कालिदासस्य रघुवंशेऽपि सा सरणिः परिपालिता। सा चैवम्—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्।।
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदण्डानां यथाकालप्रबोधिनाम्।।
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्।।

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव।।

न किलानुययुस्तस्य राजानो रक्षितुर्यशः।
व्यावृत्ता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता:।।
(रघुवंशे १.५-८, २१-२२,२७)

श्रीहर्षोऽपि—

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृतस्तपस्विताम्।।
(नैषधे-१.७)

एवं सत्कविरचनासु भारतीयसंस्कृतौ स्वीकृतस्य पुरुषार्थचतुष्टयस्य विशेषतो धर्मस्यान्वाख्यानमुद्दिश्यैव कवीनां प्रवृत्तिर्दृश्यते नात्र सन्देहः।

संस्कृतस्य सर्वाण्यपि प्राक्तनानि काव्यानि भारतीयं शास्त्रं धर्मशास्त्रं वाऽनुसृत्यैव प्रणीतानि सन्ति। तान्येव कालजयीनि वर्तन्ते। सत्कवीनां कथनानि काव्यशास्त्रिणाञ्च तेषां पुनराख्यानं कविशिक्षादिशा तेषां निर्देशा अत्र प्रमाणम्। राजशेखरः स्वकाव्यमीमांसाग्रन्थे तथ्यमिदं मुहुर्मुहुरुद्घाटयति। तद्यथा—

'शास्त्रपूर्वकत्वात्काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत न ह्यप्रवर्तितप्रदीपास्ते तत्त्वार्थसार्थमध्यक्षयन्ति।' (द्वि.अ.).......'श्रुतिः, स्मृतिः, इतिहासः, पुराणं, प्रमाणविद्या, समयविद्या, राजसिद्धान्तत्रयी, लोको, विरचना, प्रकीर्णकञ्च काव्यार्थानां द्वादश योनयः' इत्याचार्याः। 'उचितसंयोगेन योक्तृसंयोगेन, उत्पाद्यसंयोगेन, संयोगविकारेण सह षोडश' इति यायावरीयः।

श्रुतीनां साङ्गशाखानामितिहासपुराणयोः।
आर्षग्रन्थः कथाभ्यासः कवित्वस्यैकमौषधम्।।

इतिहासपुराणाभ्यां चक्षुर्भ्यामिव सत्कविः।
विवेकाञ्जनशुद्धाभ्यां सूक्ष्ममप्यर्थमीक्षते।।

वेदार्थस्य निबन्धेन श्लाघ्यन्ते कवयो यथा।
स्मृतीनामितिहासस्य पुराणस्य तथा तथा।। (काव्यमी., अष्टमाध्याये)

सम्प्रति यः कविः रहस्यमिदं न वेत्ति स आत्मानमाधुनिकं मन्यमानो धर्मस्य शब्दार्थौ रिलीजनेति मत्वा स्वं धर्मनिरपेक्षं मन्वानः, अन्यभाषाकविसदृशं स्वं प्रगतिशीलं प्रमाणयन् स्वरचनासु श्रुतिस्मृतिविरुद्धमसंस्कृतं प्रयोगं करोतु नाम, तस्य रचना वर्षाकालोत्पन्नपतङ्गवत् क्षणभङ्गुरैव भविष्यति। नूनमेव संस्कृतवाङ्मये सन्निहितानि जीवनमूल्यान्येवागामिनि काले जगति सुखशान्तिस्थापने परमौषधरूपेण भविष्यन्ति। 'धृतिक्षमे'ति रूपेण मनुनिरूपितो धर्मः कस्या जातेः सम्प्रदायस्य स्थानस्याग्रहं करोति? मन्ये धर्मनिरपेक्षता-नाम्नाऽऽत्मानं महापुरुषं नेतारं वा मन्यमानैर्मनोर्धर्मलक्षणमेकवारमपि न श्रुतं न वा पठितम्। कदाचिद् घृणाभावं परित्यज्य कश्चिज्जनो 'धृतिः क्षमे'ति श्लोकं वारमेकं पठेत्, तर्हि स धर्मरहितं जनं पशुमेव स्वीकरिष्यति। भारतीये सन्दर्भे धर्म उदात्तकर्तव्यस्यावबोधकः, उदात्तजीवनप्रेरणायै 'रामादिवत्प्रवर्तितव्यं न रावणादिवदि'ति। कान्तासम्मितोपदेशाय सहृदयहृदयाह्लादनाय काव्यानि लिख्यन्तेऽतस्तन्नायको धर्मसमन्वित एव भवतीति।

●

# पण्डितराजानां काव्यलक्षणम्

**डॉ. वृजकिशोरत्रिपाठी**
प्रवक्ता, संस्कृतस्य
राजकीयस्नातकोत्तरमहाविद्यालयः,
फतेहपुरम्, आलापुरम्, अम्बेडकरनगरम् (उ.प्र.)



श्रृङ्गारादिरसैरलौकिकसुखा याऽन्तः समालिङ्गति
शब्दार्थोभयनिर्मिता सुवदनालङ्कारसम्भूषिता।
माधुर्यादिगुणैः प्रिया सुमनसां दोषानुविद्धा न या
सुस्वादाय सदैव काव्यवनिता सा सेव्यतां भावुकैः।।१।।

रमणीयार्थप्रतिपादक इति शब्दो यदिह जगौ काव्यम्।
पण्डितराजो विवृणोमि गुरुं नत्वा तदेवाहम्।।२।।

यथेह लोके शरीरं शिवात्मानं विना शवायते, भस्मसात्क्रियते चानपेक्षितमकिञ्चत्करं तथा काव्यमपि रसात्मरहितमुपेक्ष्यते सहृदयैरिति भावभरिता भावुकाः प्रमाणम्। तथेदमागतं यत् काव्ये जीवातुभूतो रसः शब्दार्थमयञ्च शरीरं परिस्फुरतः। काव्यात्मविषयकविवादाद्विदां नातिविशिष्यते काव्यस्वरूपवादः। तथा हि, 'शब्दार्थौ सहितौ काव्यमि'ति भामहः (काव्यालङ्कारः-१.१६), 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली'ति दण्डी (काव्यादर्शः, १.१०), 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते' इति वामनः (काव्यालङ्कारसूत्रवृत्तिः, १.१.१), 'सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्' इत्यानन्दवर्धनः (ध्वन्यालोकः, १.१ वृत्तिः), 'निर्दोषा लक्षणवती सरीतिर्गुणभूषिता। सालङ्कार-रसानेकवृत्तिर्वाक्काव्यनामभागि'ति जयदेवः (चन्द्रालोकः, १.७), 'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दती'ति भोजः (सरस्वतीकण्ठाभरणम्, १.२), 'वाक्यं रसात्मकं काव्यमि'ति विश्वनाथः (साहित्यदर्पणः, १.३), 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति पण्डितराज-जगन्नाथश्च काव्यलक्षणं चक्रुः।

विविधाचार्यकृतलक्षणपर्यालोचनेन ज्ञायते यदिमानि लक्षणानि त्रिधा विभाजयितुं शक्यन्ते। यथा, कैश्चिद्विशिष्टौ शब्दार्थौ काव्यमित्युरीक्रियते विशिष्टार्थप्रतिपादकः शब्दः काव्यमित्यन्यैः, रससम्भृतवाक्यमेव काव्यमित्युभयभिन्नैरन्यैश्च।

नव्यन्यायशैलीमनुसरतां पण्डितराजानां काव्यलक्षणस्य सुकुमारमतीनां साहित्यरसिकानामन्तश्चेतसि सम्यगस्फुरणान्नास्योद्घाटनं पिष्टपेषणम्। अपि च पण्डितराजतर्ककर्दमे सीदन्त्या मम्मटवाचः समुद्धरणात् तत्त्वमवगाह्य नावीन्यमपि समुल्लसति। शब्दस्यैव काव्यत्वमिष्टं पण्डितराजानामित्यनतिविदां प्रवादोऽपि निराकरिष्यते।

तत्र काव्यलक्षणग्रन्थचिकीर्षुः पण्डितराजस्तावत्प्रथमं काव्यलक्षणं प्रस्तौति 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'ति। रमणीयो योऽर्थस्तस्य प्रतिपादकः शब्दः काव्यमिति विवृतिः। रमणीकटाक्षादिष्वपि स्वरागाद्यर्थप्रतिपादकतासत्त्वात् तत्रातिव्याप्तिवारणाय शब्द इति विशेष्यदलम्। न च प्रतिपत्तिः शाब्दबोधः, न तज्जनकत्वं चेष्टादौ, तेन प्रतिपादकशब्देनैव चेष्टायामतिव्याप्तिवारणमिति वाच्यम्, प्रतिपत्तिपदस्य तादृशविशेषार्थपरत्वे मानाभावात्। शब्दशब्दोपादाने च योग्यतावशाच्छब्दपरत्वमिति त्वन्यत्। उद्बोधकतयोपस्थितिद्वारा चेष्टादेः क्वचिच्छाब्दजनकत्वाच्च। लक्षणे प्रतिपादकपदं ज्ञानजनकत्वार्थकं तेन वाचकलक्षकव्यञ्जकानां साधारण्येन ग्रहणम्। अन्यथा लक्षणे वाचकाद्यन्यतमग्रहणे इतरयोरसङ्ग्रहादव्याप्तिर्दुरुद्धरा स्यात्। रमणीयशब्दज्ञापके व्याकरणादावतिव्याप्तिवारणायार्थपदमिति। तच्च चमत्कारजनकभावनाविषयार्थपरं न तु शब्देतरपरम्, शब्दस्याप्यर्थत्वेनेष्टत्वात्। 'अग्नेर्ढक्' (पा. सू. ४.२.३३) इत्यादिपाणिनिसूत्रेषु।

ननु यत्र श्लेषगर्भोपमादौ शब्दरूपो धर्म उपमानिर्वाहकतया साधारणः (साधारणधर्मः), तत्रोपमया चमत्काराधाने शब्दस्यापि चमत्कारित्वम्, उपमाया अर्थत्वे शब्दस्याप्यर्थत्वात्, उपमाया इव तद्घटकशब्दस्यापि चमत्कारजनकभावनाविषयत्वादित्यतिव्याप्तिरिति चेत्, न, इष्टत्वात्। चमत्कारिभावनाविषयत्वेन शब्दस्यापि रमणीयार्थत्वेन समीहितत्वात्। अत एवान्वयव्यतिरेकाभ्यां तत्तद्वर्णपदादीनां चमत्कारप्रयोजकत्वमभिप्रेतम्। अत्र वर्णस्य, पदस्य, प्रकृतेश्च चमत्कारित्वमभिप्रेतमालङ्कारिकाणाम्।

अस्यायमभिप्रायः—शब्दार्थयोरुभयोर्भावना चमत्कारिणी परं क्वचिच्छाब्दचमत्कारमर्थचमत्कारोऽतिशेते, तत्र शब्दमपेक्ष्यार्थस्य प्राधान्येन भावना,

अर्थचित्रकाव्यमिति व्यवहारः। यत्र च विपरीतं तत्र पूर्वोक्तविपरीतार्थगुणकशब्दभावना, शब्दचित्रमित्यादिव्यवहारश्च। शब्दार्थौ काव्यमित्युक्तिरप्यभियुक्तानामेवं सङ्गच्छते। अतः शब्दरूपकाव्यस्य शब्दार्थरूपं शरीरं काव्यमिति। अर्थस्यैकस्यैकदाधिकप्रवेशेन भेदसम्भवात्षष्ठ्युपपत्तिः। शब्दार्थरूपं काव्यमभ्युपगच्छतां षष्ठ्युपपत्तिर्नाभेदे सङ्गच्छते। तथा च शब्दार्थयोरुभयोः काव्यशरीरभूतयोः प्रतिपादकः शब्दः काव्यमिति सिद्धान्तः। शब्दस्यापि ग्राह्यत्वशक्तिनाम्ना प्रतिपाद्यत्वं हरिकारिकायामुक्तम्; यथा—

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते।। (वा.प., ब्र.का.५५)

शब्दार्थयोः शरीरत्वं नामालङ्काराश्रयतया भावनाविषयत्वं समेषामपि मते। पण्डितराजमते गुणाश्रयतयापीति गुणानां शब्दार्थवृत्तित्वस्याङ्गीकरणात्। तथा चार्थपदेन शब्दार्थयोरुभयोरपि सङ्ग्रहात् तत्प्रतिपादकः शब्दः काव्यमिति लक्षणं फलति। एतेन शब्दमात्रस्य काव्यत्वे काव्यमनाश्रयतामर्थालङ्काराणामत्र ग्रन्थे पण्डितराजस्य वर्णनमप्रासङ्गिकमिति कथयन्तः परास्ताः। अज्ञानविजृम्भणमात्रमेतेषां रहस्यमनवगच्छतां काव्यलक्षणस्य।

अन्ये तु, अर्थवच्छब्दः काव्यमिति इदं काव्यलक्षणं सङ्क्षिपन्तः, प्रतिपादकत्वसम्बन्धेन रमणीयार्थवान् शब्दः काव्यमिति व्याचक्षते। एवमपि शब्दार्थशरीरं काव्यमित्याचार्यवचसो नासङ्गतिः। शब्दार्थयोः शरीरे प्रवेशेऽपि शब्दस्य प्राधान्ये, कस्यचिद्वचसो विरोधाभावात्। तत्रार्थेन शब्दस्यापि ग्रहणं निराबाधमन्यत्रापि। यथा—व्याकरणशास्त्रे 'स्वं रूपं शब्दस्याशब्दसंज्ञा'[1] इति पाणिनिसूत्रे। 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्'[2] इति व्याकरणशास्त्रीय-परिभाषया च शब्दार्थयोरुभयोर्ग्रहणे न कस्यचित्परित्यागः; परन्तु शब्देऽर्थो विशेषणम्। अत एव 'अग्नेर्ढक्'[3] इति सूत्रे अर्थविशिष्ट एवाग्निशब्दो गृह्यते। तथा चानेनेदमागतं यत् पण्डितराजस्य शब्दार्थयोरुभयोः काव्यत्वमभिप्रेतम्, न शब्दमात्रस्येति।

'घटमानये'त्यादिवाक्येष्वतिव्याप्तिवारणाय लक्षणे रमणीय इति पदम्। 'रमणीयार्थे'त्यादिघटकरमणीयता लोकोत्तराह्लादजनकज्ञानगोचरता। लोकोत्तरो यो ह्लादस्तज्जनकं यज्ज्ञानं (भावना) तद्गोचरत्वं तद्विषयीभूतत्वमित्यर्थः।

१. पा.सू. १.१.६८।
२. परिभाषेन्दुशेखरः-१.१४; ३. पा.सू. ४.२.३३।

लोकोत्तरसुखस्य जनकं यज्ज्ञानं तद्विषयत्वमर्थगतं रमणीयत्वम्। नन्वत्र किन्नाम लोकोत्तरत्वम्? वैलक्षण्यमात्रम्, लौकिकसुखभिन्नत्वं वा? नाद्यः, 'घटमानये'-त्यादिवाक्यस्यापि कुतश्चिद्विलक्षणाह्लादजननादतिव्याप्तेः। नान्त्यः, ब्रह्म-स्वरूपाह्लादप्रयोजके 'तत्त्वमस्या'दिवाक्यस्यापि लौकिकसुखभिन्नसुखजनकत्वात्। तत्र 'तत्त्वमसि' इत्यादिवाक्येष्वतिव्याप्तेः। अत्रोच्यते—काव्यसामग्रीतरसामग्री-जन्यसुखभिन्नत्वं लोकोत्तरत्वं चमत्कारापरपर्यायमत्राभिप्रेयते, नान्यत्। तत्र च प्रमाणं सहृदयानुभव इति ज्ञेयम्। अत एवोक्तम्, लोकोत्तरत्वञ्चाह्लादगत-श्चमत्कारत्वापरपर्यायानुभवसाक्षिको जातिविशेषः। अनेनेदमायाति यज्ज्ञानं चमत्कारं जनयति, तस्य ज्ञानस्य विषयभूतार्थस्य प्रतिपादकः शब्दः काव्यम्। तत्र ज्ञानं (भावना) जनकं चमत्कारत्वञ्च जन्यम्। तथा च चमत्कारत्वावच्छिन्ने कार्ये यत्कारणं तद्भावनाविशेषः (ज्ञानविशेषः) पुनः पुनरनुसन्धानात्मा, यो हि विभावादीनां चर्वणा कथ्यते।

'पुत्रस्ते जातः', 'कन्या ते गर्भिणी जाता' इत्यादौ काव्यसामग्रीतरसामग्री पुत्रजन्मत्वात् सुखस्य, अपरत्र च लोकापवादजन्यशोकत्वाद् दुःखस्य न लोकोत्तरत्वं तथा च न काव्यत्वप्रसक्तिः। एवं बहुव्याख्यानन्तरं काव्यलक्षणं फलति—'चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं काव्यत्वमिति। चमत्कारजनिका या भावना तादृशभावनाया विषयीभूतो योऽर्थस्तत्प्रतिपादकः शब्दः काव्यम्। तत्त्वञ्च काव्यत्वम्। आहोस्वित्, चमत्कारत्वावच्छिन्नजन्यतानिरूपित-जनकतावती या भावना, तद्विषयो योऽर्थस्तत्प्रतिपादकशब्दत्वं काव्यत्वमिति।

ननु लोकोत्तराह्लादजनिका या भावना तस्या भावनाया विषयो योऽर्थस्तस्यार्थस्य प्रतिपादको यः शब्दः, स काव्यमिति लक्षणे सति लोकोत्तराह्लादत्वं नाम=रसत्वं तस्य रसस्य जनिका भावना पुनः पुनरनुसन्धानात्मिका (चर्वणा) तस्या विषयो योऽर्थस्तत्प्रतिपादकः शब्दः काव्यम्। अत्रत्ये चमत्कारे रसे च कश्चिद्भेदः, अथवा रस एव चमत्कार इति जिज्ञासायामुच्यते—यथाऽऽनन्दस्वरूपात्मनि आनन्दात्मिकया वृत्त्या आनन्दानुभव आनन्दोदयो वा क्रियते, तथैवात्रापि लोकोत्तराह्लाद आनन्दात्मिकावृत्तिस्तया निष्पद्यमानो रसो भवति। अत्र रसचमत्कारयोर्जन्यजनकभावः कथयितुं शक्यते। अत एवोक्तं 'रसे सारः चमत्कारः'। तथा च नैक्यं रसचमत्कारयोः।

ननु नानाप्रकारतानिरूपितनानाविशेष्यताकं ज्ञानं समूहालम्बनात्मकं ज्ञानं तथा च सति काव्यार्थस्य घटानयनस्य च समूहालम्बनात्मकं ज्ञानम्, तेन काव्यार्थ-

विषयकत्ववशाच्चमत्कारो जन्यते, तथा च चमत्कारनिष्ठजन्यतानिरूपितजनकता-वज्ज्ञानं जातम्, तद्विषयो घटानयनप्रतिपादके 'घटमानये'ति वाक्येऽपि काव्यत्वं प्रसक्तमतो ज्ञानपदमपहाय भावनेति पदमुपात्तम्।

अत्रोच्यते—भावनापदेनात्र ज्ञानप्रवाहो विवक्ष्यते तेन क्वचिद् घटानयनस्य चमत्कारजनकज्ञानविषयत्वेऽपि ज्ञानप्रवाहे (धारावाहिज्ञाने) तद्विषयत्वाभावान्नाति-व्याप्तिः। ननु काव्यार्थविषयधारावाहिज्ञानविषयरूपभावनायामपि कदाचन घटानयनस्य विषयत्वसम्भवे 'घटमानये'ति वाक्येऽतिव्याप्तिस्तदवस्थेति चेत्, न, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकम्, तत्काव्यम्। येन यैर्वा शब्दैरुपस्थापितस्यार्थस्य भावनया (पुनः पुनरनुसन्धानेन) चेतसि चमत्कारजननं भवति, तादृशचमत्कारजनकताया अवच्छेदकं तादृशमेकमेव काव्यं भवति, 'घटमानये'ति वाक्यं विषयीकुर्वद् धारावाहिकज्ञानेनेत्याशयः। किन्त्वत्र येन शब्देन प्रतिपादितस्यार्थस्य सकला अपि भावनाश्चमत्कारजनिकाः स शब्दः काव्यमिति गृह्यते।

तथा हि, घटानयनस्य कतिधा भावनाः केनचित्काव्यार्थेन साकं काव्यार्थविषयिण्यो न सर्वाः, यतो हि काश्चिद् घटानयनमात्रविषयिण्यः, काश्चिच्च घटानयनविषयिण्यः सत्यः काव्यार्थभिन्नविषयिण्यः। तत्र प्रथमा घटानयनविषयिण्यो भावनाः काव्यार्थविषयकत्वेन चमत्कारं जनयन्ति, परं द्वितीयास्तृतीयाश्च न जनयन्त्यतो 'घटमानये'ति वाक्यस्य न काव्यत्वम्। 'उदितं मण्डलमिन्दोरि'त्यादिशब्दप्रतिपादितस्यार्थस्य सर्वा अपि भावनाश्चमत्कारजनिकाः। तत् तदर्थप्रतिपादके शब्द 'उदितं मण्डल'मित्यादौ काव्यत्वमव्याहतम्। एवञ्चात्रार्थविषयकभावनात्वं चमत्कारसमनियतं ग्राह्यम्; यद्धि वर्तते 'उदितमण्डलमिन्दो'रित्यादौ, न तु 'घटमानये'ति वाक्ये। अत्र यत्पदेन काव्यत्वेनाभिमतः शब्दो ग्राह्यः।

ननु 'प्रत्युच्चारणं शब्दा भिद्यन्ते' इति नियमादुच्चारणभेदेन शब्दभेदपक्षे, प्रत्युच्चारणमुदितमित्यादिकाव्यस्यापि शब्दभेदपक्षे, यत्प्रतिपादितार्थविषयभावनात्वं चमत्कारजनकतावच्छेदकत्वं तस्यैव कस्यचिदेकस्य काव्यत्वं यत्तदानीमुच्चरितं न तदन्यस्यातस्तत्राव्याप्तं लक्षणं तस्यापि च लक्ष्यत्वम्। अखिललक्ष्याव-बोधकत्वाभावाल्लक्षणमलक्षणमेवेति चेत्, न, यत्पदेनानुपूर्व्या ग्रहणात्। तथा च सति यदानुपूर्वीमच्छब्दप्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं=तद्वत्त्वं काव्यत्वम्। तादृशानुपूर्वीमत्त्वन्तु उच्चारणभेदभिन्नेषु सर्वेषु काव्येष्वतो

नाव्यापकं लक्षणं समेषां सङ्ग्रहात्। व्याख्यानमिदं रसगङ्गाधरग्रन्थटीकाविधातुः केदारनाथ-ओझामहाशयानाम्[१]।

गुरुमर्मप्रकाशकृद्भिस्तदनुसारिणा च महामहोपाध्यायेन गङ्गाधरशास्त्रिणा व्याख्यायते यद्धारावाहिकसकलज्ञानेषु काव्यार्थसहकृतत्वाद् घटानयन-वाक्यार्थबोधके 'घटमानये'ति वाक्येऽतिव्याप्तिवारणायागतेन यत्प्रतिपादितार्थ-विषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत् काव्यम्' इति लक्षणे यत्पदेन यादृशानुपूर्वीति गृह्यते। तथा च यादृशानुपूर्वीमच्छब्दप्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं काव्यत्वम्। कदाचिद् धारावाहिसकलज्ञान-विषयत्वेऽपि 'घटमानये'त्यानुपूर्वीमच्छब्दे (वाक्ये) चमत्कारजनकत्वाभावान्नाति-व्याप्तिः, अचमत्कारस्यापि प्रतीतेः।

अत्रायं निष्कर्षः—काव्यार्थविषयकधारावाहिज्ञानरूपभावनायामपि कदाचन घटानयनस्य विषयत्वसम्भावनायां 'घटमानये'ति वाक्ये काव्यत्वप्रसक्तिवारणायो-पात्तद्वितीयलक्षणस्य व्याख्यानमाचार्येण केदारनाथ'ओझा'महाशयेन भावनात्वं चमत्कारसमनियतधर्म इति स्वीकृत्य कृतं तेनातिव्याप्तिश्च निराकृता। यत्पदस्य च काव्यत्वेनाभिमतः शब्दो गृहीतः। यत्पदस्यानुपूर्व्यर्थानुधावनन्तु उच्चारणभेदेन भेदपक्षे लक्षणाव्यापकत्वपरिजिहीर्षयाभ्युपेतम्। आचार्येण नागेशेन तदनुसारिणा गङ्गाधरशास्त्रिणा च यत्पदस्य यादृशानुपूर्वीत्यर्थं विधाय 'घटमानये'ति वाक्ये काव्यत्वप्रसक्तिं निराकृत्य प्रत्युच्चारणभेदपक्षे लक्षणाव्यापकत्वदोषे मौनं समालम्बितमिति विशेषः।

व्याहृतमपि काव्यलक्षणमेकदा लाघवायान्यथा तदेव तस्यैव काव्यस्य, पुनरुच्यते—'स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वम्' इति। इदंविषयेऽत्रावधेयमिदम्—पूर्वलक्षणे चमत्कारनिष्ठकार्यता-निरूपितकारणताया अवच्छेदकत्वं भावनात्वमुक्तं युक्तञ्च तद् अर्थविषयकभावनायां चमत्कारजनकतायाः सत्त्वादर्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकम्, तथापि भावनात्वस्य सर्वार्थभावनायां सत्त्वेन साधारण्येनाव्यावर्तकत्वाद् भावनात्वस्या-वच्छेदकस्य लक्षणे प्रवेशे न प्रयोजनसिद्धिरव्यावर्तकत्वात्। व्यावृत्तिप्रयोजनञ्च लक्षणम्। प्रयोजनमिदं साधयितुमेव परिष्कृतं लक्षणान्तरमुपस्थापयति ग्रन्थकृदिति ज्ञेयम्।

---

१. सटीकोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाशमानीतः।

लक्षणेऽस्मिन् भावनात्वं विहायार्थस्यैवावच्छेदकत्वेन निवेशः। तत्रार्थविषयकभावनायां चमत्कारजनकता वर्तते, अतस्तादृशभावनानिष्ठेन केनचिद्धर्मेणावच्छेदकेन भाव्यम्, निरवच्छिन्नायाः कारणताया जनकताया अप्रयोजकत्वात्। अत्र भावनायां भावनात्वमथ चार्थविषयकत्वं धर्मद्वयं वर्तते। उभयोर्मध्ये भावनात्वस्यावच्छेदकत्वे पूर्वोक्तेन प्रकारेणाव्यावर्तकत्वमापतति, अस्माद्धेतोरर्थविषयकत्वमवच्छेदकत्वेन ग्रहीतुमवशिष्यते। विषयकत्वं विषयित्वञ्च नार्थान्तरम्। तत्र विषयकत्वं विषयित्वं वा स्वरूपेण विषयिण्यां भावनायां वर्तते। अर्थश्च विषयो विषयितासम्बन्धेन विषयिभावनायां वर्तते। तत्रास्मिल्लक्षणेऽपरस्मिन् अर्थो जनकतावच्छेदकत्वेनोपादीयते। अर्थस्य विषयितासम्बन्धेन भावनावृत्तित्वादर्थनिष्ठावच्छेदकता विषयित्वसम्बन्धावच्छिन्ना बोध्या। चमत्कारनिष्ठा जन्यता चमत्कारत्वावच्छिन्ना। भावनानिष्ठाया जनकताया अवच्छेदकोऽर्थः। तथा च चमत्कारत्वावच्छिन्नजन्यतानिरूपितभावनानिष्ठाया जनकताया अवच्छेदको योऽर्थस्तस्य प्रतिपादकशब्दत्वं काव्यत्वमिति फलति।

ननु यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं काव्यमिति लक्षणैकविधानादेव सर्वसिद्धेः पुनः 'स्वविशिष्टजनकतावच्छेदकार्थ-प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वम्' इति लक्षणं किमर्थमिति चेत्, न, यत्प्रतिपादितार्थेत्यादितत्त्वमन्तं लक्षणं प्रकारविधया कृतम्। स्वविशिष्टेत्यादि-चमत्कारत्वान्तञ्च संसर्गविधया लक्षणमिदानीमिह विधीयते। प्रथमोपात्तलक्षणान्न हि कश्चन नूतनोऽर्थ इह लक्षणे, केवलं प्रकारभेदो लक्षणनिरूपणस्येति विदुषां बुद्धिविलासमात्रम्। यत्र प्रथमं विशेषणं तदनन्तरं विशेष्यं पुनस्तस्य विशेष्यमित्यादिरीत्या निवेशः क्रियते, तत्र प्रकारविधया लक्षणं भवति।

संसर्गविधया कृते द्वितीयलक्षणे 'चमत्कारत्ववत्त्वमि'त्येव काव्यलक्षणम्। 'चमत्कारत्वं यत्र वर्तते तत् काव्यमि'ति तस्य सरलार्थः। चमत्कारत्वञ्च यत्र वर्तते तत्र केनचित्सम्बन्धेनैव। तत्र चमत्कारत्वावच्छिन्नजन्यतानिरूपितभावनानिष्ठ-जनकतावच्छेदकार्थप्रतिपादकशब्दत्वमिति प्रथमकाव्यलक्षणे भावनानिष्ठपदं निःसार्य, स्वपदेन चमत्कारत्वं गृहीत्वा भावनानिष्ठ इति पदानन्तरवर्ति-प्रतिपादकत्वान्तं संसर्गं विधाय, चमत्कारत्ववत्त्वमिति काव्यलक्षणं सम्पद्यते। तथा च फलति काव्यलक्षणम्—'स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वमि'ति।

अत्र स्वपदेन चमत्कारत्वं गृहीत्वा प्रकारविधया विहितलक्षणस्य भावनानिष्ठेति पदपूर्ववर्तिभागो वैशिष्ट्यकुक्षिप्रविष्टसम्बन्धे निवेश्य लक्षणं

विधीयते। तदेव लक्षणसङ्घटनावसरे, वैशिष्ट्यञ्च स्वावच्छिन्नजन्यतानिरूपितत्व-सम्बन्धेनेत्येवं विधया प्रतिपाद्यते। अत्र चमत्कारत्वं यत्र भावनायां वर्तते तत्तु जन्यतासम्बन्धेनेति। प्रथमं वैशिष्ट्यकुक्षिप्रविष्टं सम्बन्धमथ च जनकतामारभ्य प्रतिपादकत्वान्तं सम्बन्धं तमुपादाय समग्रोऽयमेको दण्डाकारः सम्बन्धो निष्पद्यते— सम्बन्धश्च, स्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकार्थप्रतिपादकत्वमिति। एतदेवोक्तं ओझामहाशयेन स्वटीकायां त्रयोदशपृष्ठे। सम्बन्धद्वयं पृथक्कृत्य संसर्गविधया कृतमिदं समग्रं लक्षणन्तु, स्वविशिष्टजनकतावच्छेदकार्थ-प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वमिति। वैशिष्ट्यञ्च स्वावच्छिन्नजन्यता-निरूपितत्वसम्बन्धेन। तथा च, स्वं चमत्कारत्वं तदवच्छिन्ना चमत्कारनिष्ठा या जन्यता तन्निरूपिता भावनानिष्ठा या जनकता तदवच्छेदको योऽर्थस्तस्य प्रतिपादकत्वं लक्ष्ये काव्यत्वेनाभिमते शब्दे।

एतल्लक्षणस्य हि लक्ष्यं काव्यम्, लक्ष्यतावच्छेदकञ्च काव्यत्वम्। तद्धि किंरूपम्? इति जिज्ञासायां नागेशेनोक्तम्—सर्वेषु काव्येषु 'इदं काव्यम्, इदं काव्यम्' इत्याद्यनुगतव्यवहारेण आस्वादोद्बोधकतया च सिद्धं जातिविशेष-रूपमुपाधिरूपं वेति।

ननु कृतेऽप्येतादृशे परिष्कारे, स्वविशिष्टजनकतावच्छेदकार्थ-प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेवेति स्वरूपे, स्वं चमत्कारत्वं तद्विशिष्टा स्वाश्रयजन्यतानिरूपिता जनकता भावनायां स्वरूपसम्बधेन वर्तते, विषयितासम्बन्धेन चार्थोऽपि तत्र विद्यते। तदवच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्वं यथा 'गतोऽस्तमर्कः', 'शून्यं वासगृहमि'त्यादिषु, तथैव 'सूर्योऽस्तं गतः', 'निर्जनशयनगृहमि'त्यादिष्वप्यकाव्येषु; प्रतिपादकतासंसर्गस्य तत्रापि विद्यमानत्वादित्यतोऽतिव्याप्तिरिति चेत्, न, शाब्दबोधे शब्दस्यापि प्रकारतया भासमानत्वात्। 'शून्यं वासगृह'मित्यादिषु शब्दोऽपि (आनुपूर्व्यपि) भासते। ततो 'निर्जनशयनगृहमि'त्यादिषु विशेषणा(शब्दा)भावप्रयुक्त-विशिष्टाभावान्नातिव्याप्तिः। अत एवोक्तम्—'शब्दान्तरेण प्रतिपद्यमानः स एवार्थोऽ-र्थान्तरमिव प्रतिभाति' इति। यथा 'उदेति सविता ताम्रस्ताम्र एवास्तमेति चे'त्यादि।

न चैवं 'वाक्यार्थाभिनयो नाट्यम्' इति दिशा नाट्ये (अभिनये) शब्दत्वाभावात् तत्राव्याप्तिरिति वाच्यम्, चतुर्विधाभिनये वाचिकाभिनयस्यापि वृत्तेः। श्रव्यकाव्यमात्रोद्देश्यत्वाद्वास्य पण्डितराजलक्षणस्येति च।

**रसगङ्गाधरे मम्मटोद्धारः**

यत्तु, रसगङ्गाधरे पण्डितराजो मम्मटमभिदूषयन् शब्दार्थयुगले काव्ये प्रमाणाभावमुपपादितवान्, तन्न सम्यक्, शब्दे काव्यमुरीकुर्वतामाचार्याणामिव युगलेऽपि प्रमाणसद्भावात्। तथा हि, 'काव्यं श्रुतम्', 'काव्यं बुद्धम्' इति लोकव्यवहारात् श्रावणप्रत्यक्षविषयत्वात् शब्दस्य, बोधविषयत्वाच्चार्थस्य काव्यत्वमिष्टं, येन युगले काव्यत्वमव्याहतमेव।

अपि च 'कविकर्म काव्यम्'। तत्र 'कवृ'वर्णने धातोरौणादिके इप्रत्यये 'कविरि'ति सिद्ध्यति। वर्णनञ्च शब्दकर्मकार्थविषयको व्यापार उच्चारणम्। तत्रोच्चारणकर्मताया विषयः शब्दो यथा वर्णनाविषयस्तथाऽर्थो ज्ञेयतयेत्युभयत्र कविकर्म काव्यमव्याहतम्।

अन्यच्च यथा 'आत्मा वाऽरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चे'त्यादि-वेदान्तवाक्येषु 'श्रोतव्य इत्यत्र श्रु-धातुः उभयार्थे शब्दे अर्थे च। अन्यथा 'मन्तव्यः, निदिध्यासितव्यः' इति न सङ्गच्छेताम्, श्रोतव्यविषयात्मन एव निदिध्यासन-विषयत्वात्। तथैवात्रापि 'काव्यं शृणोमि' इत्यत्रापि काव्योपपादकाः शब्दाः श्रोतव्या इति ज्ञातव्यम्। तस्मादुभयत्र काव्यत्वं सिद्ध्यति।

शब्दार्थयोः काव्यत्वे 'तदधीते तद्वेद' (पा.सू. ४.२.५९) इति पाणिनिसूत्रस्थं पातञ्जलं महाभाष्यमपि प्रमाणम्। तत्र ह्युक्तम्—'किमर्थमुभौ निर्दिश्येते। योऽधीते वेत्त्यपि। यो वेत्ति अधीतेऽप्यसौ। अतस्तद्वेदिति शब्दो न करणीयः। नैतत्। एतयोरावश्यकः समावेशः। दृश्यते च यः पाठं पठति न च वेत्ति, कश्चन वेत्ति न च सम्पाठं पठति। इष्यते उभौ वैदिकौ'[१]। यथाऽत्र विद्धातोर्ज्ञानार्थकतया ज्ञानविषयत्वमर्थे, अध्ययनञ्च शब्दकर्मकोच्चारणं तद्विषयत्वञ्च शब्दे सद्भावादुभयोपादानमावश्यकं तथाऽत्रापि 'काव्यं बुद्धम्', 'काव्यं श्रुतमि'त्यादिद्विविधव्यवहारदर्शनादुभयत्र शब्दार्थयोः काव्यत्वव्यवहारो निराबाधः। किञ्च भामहप्रभृतिभिराप्तैः शब्दार्थौ काव्यमित्युक्तम्। तदाप्ताभ्युपेतं शब्दार्थयोः काव्यत्वं कथं न स्वीक्रियते।

वेदपुराणलक्षणेष्वपि शब्दार्थयोः काव्यत्वे न हानिः, 'पश्य देवस्य काव्योऽयं न ममार न जीर्यति' इत्यादौ मरणधर्माभाववत्काव्यस्याविनाशित्वं प्रदर्शितम्। तच्च नोपपद्यते क्षणक्षयिशब्दे ऋते नित्यधर्मणः स्फोटात्मशब्दादित्यपि ध्यातव्यम्।

---

१. पातञ्जलमहाभाष्यम्, पाणिनिसूत्रे-४.२.५९।

एवं प्रमाणैरनेकैः शब्दार्थयोः काव्यत्वे उपपन्ने, शब्दमात्रे क्वचिद् व्यवहारो लक्षणया। सा चावयवावयविसम्बन्धेन, हस्ताग्रे हस्तो यथेति।

काव्यत्वपदप्रवृत्तिनिमित्तमुभयविधव्यवहारदर्शनात् शब्दार्थयोर्व्यासक्तम्। श्लोकवाक्ये (शब्दमात्रे) काव्यत्वव्यवहारस्तु लक्षणयोपपादनीयः। एकत्र गुरुमर्मप्रकाशे व्यासक्तिपक्षमपरत्र काव्यप्रकाशटीकायाः 'प्रदीप'नाम्न्या उद्द्योते च प्रत्येकपर्याप्तित्वपक्षं समर्थयन्त्या नागेशवाचस्तत्त्वन्तु तत्त्वावगाहनपटवो विद्वांस एव विदाङ्कुर्वन्ति।

मम्मटलक्षणे गुणालङ्कारनिवेशायुक्तत्वमयुक्तम्, 'उदितं मण्डलं विधोरि'त्यत्र दण्ड्याद्याचार्यैः काव्यत्वस्वीकारात्। माधुर्यगुणव्यञ्जकवर्णसद्भावात्तत्स्थितेश्च। न च गुणालङ्काराणामननुगम इति वाच्यम्, संख्यालक्षणादयस्तयोराचार्यैः प्रतिष्ठापिता इति हेतोः।

क्वचिदंशे किञ्चिद्रूपेण दुष्टमपि काव्यं काव्यमेव नाकाव्यम्। तत्र यदि अदोषमेव काव्यं तदा अंशे दुष्टे कथं काव्यत्वव्यवहारः, न च लक्षणयेति वाच्यम्, 'दुष्टं काव्यमि'ति व्यवहारस्य बाधकाभावादिति पण्डितराजदोषोऽव्याप्यवृत्त्या दोषाणां वृत्तिरिति स्वीकृत्य समाधातुं शक्यते। किञ्च न हि व्यवहाराय मुख्यार्थबाधोऽपेक्ष्यते, तदभावेऽपि च्युतसंस्कृतिदोषे दोषव्यवहारसद्भावात्।

गुणालङ्काराणाञ्च शरीरघटकत्वानुपपत्तिरप्यनुपपन्ना, परम्परया गुणानां शब्दार्थवृत्तेः। न चालङ्कारादयो लौकिकालङ्कारवत्संयोगादिवृत्तयः। तदपसारणे काव्यत्वहानेर्यथा, 'वागर्थाविवे'ति काव्ये उपमानिर्गतं काव्यमकाव्यत्वमुपयाति। अत एवोक्तम्, 'न हि काव्येनालङ्कारयोगः क्रियते, अपि तु सालङ्कारः काव्यमि'ति।

●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **''वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **''सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां,** श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलापचन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया,** विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः —
प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००
तृतीयो भागः खण्डम्-१ ४८०.००
तृतीयो भागः खण्डम्-२ ५००.००
चतुर्थो भागः ८००.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः—
प्रथमो भागः ४५०.००
द्वितीयो भागः ४६०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दी-भाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण सक्षमोऽयं ग्रन्थः। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः—
प्रथमो भागः ४६०.००
द्वितीयो भागः ५००.००

७. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथि-तया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

**पत्रव्यवहारसङ्केतः— निदेशकः,** प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२